# DEVĪ RAHASYA WITH PARIŚISHṬAS

Edited by

RAM CHANDRA KAK
HARABHATTA SHASTRI



# श्रीदेवीरहस्यम्

# DEVĪ RAHASYA WITH PARIŚISHṬAS

Edited by

RAM CHANDRA KAK
HARABHATTA SHASTRI



**BUTALA PUBLICATIONS**
VADODARA DELHI

# DEVIRAHASYA.

## PREFACE.

The present edition of Devīrahasya is based upon the collation of the following Manuscripts:-

क. Belongs to His Highness' Private Library. In the Devanāgarī characters. Fresh. Incomplete. Contains 217 leaves, each page having 13 lines with 20 syllables per line Measures $9\frac{3}{8}$X$9\frac{3}{8}$.

ख. Belongs to Pt. Shivnath Sharma of this Department. In the Śāradā characters. Complete. Contains 356 leaves. Number of lines per page 15 with 26 syllables per line. Measures 13"X8". Copies in the Vikrama year 1725.

ग. Belongs to Pt. Pitamber Ganz of Srinagar. In the Devanāgarī characters. Old and decayed. Correct. Contains 289 leaves. Number of lines per page 12 with 31 syllables per line Measures 10"X12". Copied in 1861 A. D.

घ. Belongs to Pt. Shyam Lal Jatu. In the Sāradā characters. Fresh and incomplete. Contains 121 leaves. Number of lines per page 18 with 20 syllables per line Measures 14"X6".

ङ Belongs to Pt. Visvamber Nath Handu. Complete. In the Śāradā characters Contains 173 leaves with 9 lines per page and 36 syllables per line. Measures 6"X10".

DEVIRAHASYA.

## INTRODUCTION.

In the following pages the Tāntric works called Devīrahasya and Uddhārakośa are presented in a printed form in the Devanāgarī Script. The former work that is the Devīrahasya (The secret worship of the Devī-Tripurā) is written in the form of a dialogue between Bhairava and devī. It contains three parts the first being named as Pūrvārdha, the second as Uttarārdha and the third as Pariśishta.

In the Pūrvārdha there are twentyfive chapters called patalas devoted to the description respectively of (1) Initiation. (2) Incantations of Devi. (3) Incantations of Siva. (4) Incantation of Vishnu (5) Utkelana or laying open for practice of incantations. (6) Vitalising of mantras. (7) Method of removing curses attaching to incantations. (8) Mental muttering called Parāyana. (9) How to use, before and after, particular Bijas in the case of particular mantras. (10) Preliminary practice of mantras. (11) Sacrifice conducted in the preliminary practice of mantras. (12) Diagrams. (13) How to bear on the body emulets having the diagrams. (14) Sage, metre etc, of incantation. (15, 16) Worship done at crematoriums. (17,18) Purification of the articles of

Worship. ( 19 ) Origin of wine. ( 20 ) Ceremonious way of taking wine. ( 21 ) Peace prayers and hymns of the Śākta heroes. ( 22 ) Purification of wine. ( 23 ) Purification of the maiden. ( 24 ) Different kinds of rosary and their purification. ( 25 ) Purification etc., of the diagrams

The Uttarārdha otherwise called Rahasyavijaya consists of the thirtyfive chapters embodying the Pañchāṅgas-Patala, Kavacha, Paddhati Sahasranāma and Stotra-of Ganeśa, Sūrya, Lakshmīnārāyaṇa, Śiva and Durgā.

Pariśishṭa or the appendix gives the Pañchāṅgas of Jvālāmukhī, Śārikā, Mahārājnī and Bālā the family goddesses of the Kashmiri pandits.

The Uddhārakośa put in the mouth of the sage Dakshināmúrti is also included in the appendix. It contains seven sections. The first section gives the incantations of the goddesses Tripurā, Lakshmī, Sarasvatī, Tārā, Bhuvaneśvarī Mātaṇgī, Śharikā, Rájnī, Bhídá and Jválámukhī along with the synonyms of some Bījas.

The second section furnishes incantations of the six additional goddesses Bhadrakālī, Turī, Chhinnamastā, Dakshinakālikā, Śyāmā and Kālarātrī.

The third section gives the incantations of Vajrayoginī, Vārāhī, Śāradā, Kāmeśvarī, Gaurī, Annapurnā and Kulvāgīśvarí and the seven boys namely Ganeśa, Vatuka, Kumāra, Mrityuñjaya, Kārtavīryārjuna, Sugrīva and Hanumān.

The fourth section discribes the incantations of the nine planets.

The fifth section gives the synonyms of each letter of the Sanskrit alphabet.

The sixth section deals with the incantations of Bhavānī, Bagalāmukhī, Indrākshī and Khecharī.

The seventh section describes the bodily form of each of the goddesses, boys and planets mentioned in the preceding sections.

The Devirahasya is traditionally supposed to form part of the bigger compilation called Rudrayāmala. The Uddhārakośa, though written in the form of a dialogue between Dakshināmūrti and his disciple Akshobhya, is a collection of quotations from no less than fortyseven Tāntric works.

***Date and author of the composition.*** The Devīrahasya in all its parts seemes to have been composed by some Kashmirian writer because as already referred to above the goddesses Jvālāmukhī, Śārikā Mahārājnī, Śāradā, Bhidā and Bālā are popular and have their shrines in the Kashmir Valley.

The word Phirangahā appearing at page 307 and that Safak at 317 of the Devīrahasya clearly show that the composition must have taken place, at last in its present form, long after the advent of the Mohamadans and Europeans into India

Srinagar the
31st March, 1941.

M. S. Kaul.

# विषयानुक्रमणिका

## षष्ठः पटलः ।

अष्टमः पटलः ।



नवमः पटलः ।

दशमः पटलः ।



एकादशः पटलः ।

## उद्धारकोशे प्रमाणत्वेनोपवर्णितानां तन्त्राणां नामानि ॥

१ आगमलहरीतन्त्रम्
२ आगमशिरोमणिः
३ आगमसिन्धुः
४ आगमामृततन्त्रम्
५ आगमामृतमञ्जरी
६ आगमार्णवपीयूषतन्त्रम्
७ आगमालङ्कारतन्त्रम्
८ आगमालङ्करणम्
९ आगमोद्योततन्त्रम्
१० उड्डामरतन्त्रम्
११ कामिनीकल्पतन्त्रम्
१२ कामेश्वरतन्त्रम्
१३ कालरात्रीकल्पतन्त्रम्
१४ कालिकासर्वस्वतन्त्रम्
१५ कालीपटलतन्त्रम्
१६ कालीरहस्यतन्त्रम्
१७ कालीसर्वस्वतन्त्रम्
१८ कुब्जाशिरोमणिः
१९ कुब्जिकासर्वस्वम्
२० कुलचूडामणिः
२१ कुलसिद्धसन्तानः
२२ कुलिकार्णवः

## उद्धारकोशे प्रमाणत्वेनोपवर्णितानां

### तन्त्राणां नामानि

२३ छिन्नारहस्यः
२४ छिन्नाशिरोमणिः
२५ ज्वालाशिरोमणिः
२६ तन्त्रमुक्तावली
२७ त्रिपुरसुन्दरीसर्वस्वम्
२८ त्रिपुराटीका
२९ त्रिपुरातिलकतन्त्रम्
३० त्रिपुराशिरोमणिः
३१ त्रिपुरासारसर्वस्वम्
३२ भैरवतन्त्रम्
३३ भैरवसर्वस्वम्
३४ मन्त्रसागरः
३५ मुण्डमालातन्त्रम्
३६ रुद्रयामलतन्त्रम्
३७ वामकेश्वरतन्त्रम्
३८ विश्वनाथसारोद्धारः
३९ विश्वयामलतन्त्रम्
४० शारदाटीका
४१ शारदापटलः
४२ शारदातिलकम्
४३ श्यामातन्त्रम्
४४ श्यामारहस्यम्
४५ सिद्धसारस्वततन्त्रम्
४६ सुन्दरीशिरोमणिः
४७ सुन्दरीसर्वस्वम्
४८ स्वतन्त्रतन्त्रम्

---

### देवीरहस्ये बीजाक्षरपारिभाषिकसूची ॥

| | | | |
|---|---|---|---|
| अग्निः | रं | कान्तिः | ह, ह्रां |
| अच्छः | ह्सौ | कालिकं | क्रीं |
| अब्धिः | स, रू | काली | क्रीं |
| अभ्रं | व, वीं | कामः | क्लीं |
| अश्मरी | नमः | काङ्क्षा | भ्रं |
| आपः | स्वाहा | कुचः | जं |
| इन्दुजा | द्र | कुटं | वौषट् |
| औश्मकं | नमः | कुन्ती | क्रीं |
| कान्ता | स्त्रीं | कुलिशं | भ्यो |

| | |
|---|---|
| कूर्चं | हूं |
| कृपा | ॠं |
| केशः | ॐ |
| कौलः | हूँ |
| खं | आं |
| गौतमः | थ |
| चन्द्रः | सः, ऐं |
| छविः | ह , हां |
| जगत् | नमः |
| जिह्वा | ॠीं |
| जीमूतः | व |
| ज्योतिः | त्रौं |
| ढद्वयं | स्वाहा |
| डिम्बः | ह्लां |
| डुलिः | मां , म |
| तटं | हूं |
| तमः | लं |
| तमी | त |
| तारका | त्रौं |
| तारा | त्रौं |
| तारं | ओं |
| तुरगं | फट् |
| ऽयत्तं | ओं |
| देवः | ह्न |
| द्वादशमात्रा | ऐं |
| धनुर्धरः | रां |
| धरणिः | लं |
| नलिनी | ठः |
| निर्जरः | ह्न |
| पयः | स्वाहा |
| परा | ह्रीं |
| पङ्कजं | ठः |
| पातालं | थं |
| प्रणवः | ओं |
| पङ्गुः | छं |
| बिलं | थ |
| भद्रिका | भैं |
| भास्वती | भैं |
| भूः | ल |
| भृगुः | स |
| भेकी | मां, म |
| मठं | ग्लौं |
| मदनः | क्लीं |
| मन्मथः | क्लीं |
| मण्डूकः | मां |
| मत्स्य | प |
| मात्रादि | अ |
| मा | श्रीं |
| माया | ह्रीं |
| माराजित् | घो |
| मृत् | ह्लीं |
| मृत्स्ना | ह्लीं |

| | |
|---|---|
| मृद्वीकं | धूं |
| मेघः | वीं व |
| मोहः | लं |
| यादः | ग्लौं |
| रमा | श्रीं |
| रात्रिः | त |
| लता | ए |
| लवणं | न |
| लक्ष्मीः | श्रीं |
| लज्जा | ह्रीं |
| वधूः | स्त्रीं |
| वनं | स्वाहा |
| वज्रं | भ्यो |
| वस्त्रं | ह्सौः |
| वह्निः | रां |
| वह्निजाया | स्वाहा |
| वामाक्षि | ई |
| वायुः | य |
| वारुणं | व |
| वागुरा | प्रां |
| वाल्हीकं | ग्लौं |
| वायुपूज्या | प्रीं |
| वाक् | ऐं |
| वाणी | ऐं |
| वासना | ऐं |
| विः | ह्सौः |
| विभूतिः | ह्रीं |
| विश्वम् | नमः |
| वीची | वूं |
| वेदी | ह्सूरैं |
| वेश्या | ख्रीं |
| व्योषं | ह्रां |
| शरत् | सः , सौः |
| शक्तिः | सः सौः |
| शर्म | सौः, शां, श्रां, |
| शर्वः | गीं |
| शिरः | क |
| शिवः | ह्रां |
| शिवं | गं |
| शुभं | श |
| शोभा | हं , खं |
| शङ्का | सः |
| श्रीः | श्रीः |
| षडभिज्ञः | घो |
| सकला | ह्रीं |
| सर्पः | द |
| समीरः | य |
| सिन्धुरं | फ्रां |
| सिन्धुः | रु , रू |
| सूर्यः | ह्रां |
| स्तम्भं | नमः |
| स्पृहा | भ्रं |
| स्वान्तं | श्रं |
| हरितं | ह्सौ |
| हुतभुक् | रां |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १५ | २३ | खीं | खी |
| २० | ८ | सिन्दु | सिन्धु |
| २७ | पर्याये १ | भ्रकुटि | भ्रुकुटि |
| २६ | १० | सिध्यै | सिद्ध्यै |
| ३४ | १२ | कूटं | कुटं |
| ३५ | १ | षष्ठः | सप्तमः |
| ३७ | १७ | परं | परां |
| ५६ | ४ | संमोनं | संमोहनं |
| ६४ | १४ | मन्त्रोद्धार | यन्त्रोद्धार |
| ८३ | १३ | रक्तात्ताङ्गुली | रक्ताङ्गुली |
| १०७ | २६ | प्रपूज्थ | प्रपूज्य |
| १०६ | २० | लाज्येभ्रामर्त्यान्त्र | लाज्येभमत्स्यान्तः |
| ११६ | १४ | शिबामाला | शिवमाला |
| १४४ | ८ | विश्वमूः | विश्वसूः |
| १५५ | १६ | गणेशस्थ | गणेशस्य |
| १६३ | १७ | साधरम् | सादरम् |
| १६६ | १२ | चक्रायै | चक्राय |
| १७४ | ६ | कुंकुमांश्चितं | कुंकुमाश्चितं |
| २०० | २० | घ्रुवम् | ध्रुवम् |
| २१४ | ३ | दशशा | दशधा |
| २१६ | २ | वर्षिणि | वर्षिणि |
| २१६ | ४ | सुधोदेव्यै | सुधादेव्यै |
| २८१ | १२ | हितरत | हित रत |
| २८६ | ६ | साहस्रमजपा | सहस्रमजपा |
| ३०८ | २१ | निलनेश्वरी | निलयेश्वरी |
| ३१३ | १७ | भ्राजमान | भ्राजमाण |
| ३२५ | १ | न शंयेत् | न दर्शयेत् |
| ३५२ | १० | व्याप्त | व्याप्तं |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३७१ | २३ | धोत्तोल्प | धोत्तोल्य |
| ३७३ | १८ | क्रींकभ | क्रींकम |
| ३९३ | ४ | थोन्नत्ता | थोन्मत्ता |
| ४२९ | ११ | दात्त | दत्ता |
| ४४६ | १९ | थोचाटं | थोच्चाटं |
| ४४८ | १ | भक्त्या | भक्ताय |
| ४५३ | ९ | पावमानः | पवमानः |
| ४८९ | ८ | सिर्द्धि | सिद्धि |
| ४९६ | २६ | पत्रो | पात्रे |
| ५०५ | १५ | बिशुद्धा | विशुद्धा |
| ५०६ | १० | मदिररा | मदिरारचिता |
| ५२६ | ३ | पैं च्छ्रीं | पैं च्ह्रीं |
| ५३० | ६ | शच | शंच |

अथ

# श्रीदेवीरहस्यम्

उॅं श्रीगणेशाय नमः । नमस्त्रिपुरसुन्दर्यै ।

श्रीभैरव उवाच ।

अधुना देवि वक्ष्यामि रहस्यं परमाद्भुतम् ।
यन्न सर्वेषु तन्त्रेषु यामलादिषु भाषितम् ॥ १ ॥
परादेवीरहस्याख्यं तन्त्रं मन्त्रोच्चविग्रहम् ।
तत्त्वं श्रीषोडशाचार्याः सर्वस्वं मम पार्वति ॥ २ ॥
अप्रकाश्यमदातव्यं परमोच्चफलप्रदम् ।
भोगापवर्गदं लोके साधकानां सुखावहम्[1] ॥ ३ ॥

श्रीदेव्युवाच ।

भगवन् सर्वतन्त्रज्ञ कौलिकेश्वर शङ्कर ।
त्वत्प्रसादान्मया ज्ञातं तत्त्वं देव्याः सुदुर्लभम् ॥ ४ ॥
तन्त्रं मन्त्रात्मकं गुह्यं सूचितं भवता स्वयम् ।
परादेवीरहस्याख्यं दीक्षापूर्वं वदस्व मे ॥ ५ ॥

श्रीभैरव उवाच ।

देवीरहस्यमीशानि शृणु त्वं भक्तिपूर्वकम् ।
येन श्रवणमात्रेण कोटिपूजाफलं लभेत् ॥ ६ ॥
अथाहं निर्णयं वक्ष्ये परमं गुरुशिष्ययोः ।

---

[1] 'शुभावहम्' क. पाठः ।

विचार्य विधिवद्धीमान् दीक्षाकर्म समाचरेत् ॥ ७ ॥
ब्रह्मादिकीटपर्यन्तं जगत स्थावरजङ्गमम् ।
परादेव्या पशुत्वेन मोहितं विगतस्पृहम् ॥ ८ ॥
तथापि तत्प्रसादेन सेवया तत्पदाब्जयोः ।
कौलिकः पशुभावेन मुक्तो ज्ञानं भजेत् ततः ॥ ९ ॥
दीक्षां तस्याः शिवे मन्त्री लब्ध्वा गुरुपदार्चनात् ।
दीक्षितः स भवेज्ज्ञानी दीक्षाहीनो भवेत् पशुः ॥ १० ॥
यस्य दीक्षा शिवे नास्ति जीवनं तस्य निष्फलम्¹ ।
स जातु नोत्तरेद् देवि निरयाम्बुनिधेः क्वचित् ॥ ११ ॥
दीक्षाहीनस्य देवेशि पशोः कुत्सितजन्मनः ।
पापौघोऽन्तिकमायाति पुण्यं दूरं पलायते ॥ १२ ॥
तस्माद् यत्नेन दीक्षैषा ग्राह्या कृतिभिरुत्तमा ।
बाल्ये वा यौवने वापि वार्धक्येऽपि सुरेश्वरि ॥ १३ ॥
अन्यथा निरयी पापी पितॄन् स्वान् निरयं नयेत् ।
अतः पशुर्मनुष्यः सन् पशुयोनिं व्रजेच्छिवे ॥ १४ ॥
पूर्वजन्मार्जितां प्राप्य वासनां परमार्थदाम् ।
गुरुमन्वेषयेद् देवि कौलिकाचारदीक्षितम् ॥ १५ ॥
गुरुं कुलीनं तन्त्रज्ञं सर्वाङ्गैः सुमनोहरम् ।
निरामयं च निर्लोभं निःशेषागमपारगम् ॥ १६ ॥
लब्ध्वा भक्त्या प्रणम्यादौ तोषयित्वा विशेषतः ।
सिद्धसाध्यारिनिर्णीतां दीक्षां देव्या यथाविधि ॥ १७ ॥
गृह्णीयात् परया भक्त्या साधको येन जायते ।
गुरुश्च शिष्यं रम्याङ्गं कुलीनं गर्भदीक्षितम् ॥ १८ ॥
गुरुभक्तिरतं बालं युवानं धिषणायुतम् ।

¹'जीवनान्तं च जन्मिनः' ख. पाठः ।

देवीभक्तिरतं भक्तं पापभीतं कृतात्मकम् ॥ १९ ॥
दृष्ट्वा दीक्षां परां दद्यात् कृतभागी भवेत् ततः ।

श्रीदेव्युवाच ।

भगवन् करुणाम्भोधे संशयोऽयं महान् मम ।
यस्य चित्ते परा भक्तिर्गुरुर्नास्ति तथाविधः[1] ॥ २० ॥
कुलीनः सर्वतन्त्रज्ञो मन्त्रसाधनकक्षमः ।
भक्त्या परमया युक्तः स किं देव करिष्यति ॥ २१ ॥

श्रीभैरव उवाच ।

अदीक्षित उपाध्यायविहीनः शक्तिभक्तिमान् ।
गुरोरभावे देवेशि पुस्तकं गुरुमाचरेत् ॥ २२ ॥
यदि कश्चिद् भवेद् देवि गुरुस्तन्त्रविचक्षणः ।
दीक्षितः शिवमन्त्रेण वैष्णवः शुभलक्षणः ॥ २३ ॥
तं परित्यज्य यो देवि पराभक्तोऽपि भक्तिमान् ।
पुस्तकं तु गुरुं कुर्यात् स भवेच्छिवघातकः ॥ २४ ॥
गुरुं कुलीनं तन्त्रज्ञं भजेन्मन्त्रस्य सिद्धये ।
मूर्खं लोभात्मकं देवि कुलीनं च परित्यजेत् ॥ २५ ॥
पितुर्दीक्षां न गृह्णीयात् तथा मातामहस्य च ।
सोदरस्य कनिष्ठस्य मातुलस्य विशेषतः ॥ २६ ॥
दम्भं वित्तेच्छया लौल्यं न कुर्यान्मनसापि वा ।
परलोकेच्छया कुर्यात् परलोकभयाय वा ॥ २७ ॥

श्रीदेव्युवाच ।

भगवन् परमेशान साधकानां हितेच्छया ।
कदा दीक्षा परा ग्राह्या साधकैस्तद्वदस्व मे ॥ २८ ॥

श्रीभैरव उवाच ।

---

१ 'तथा विधिः' ख. पाठः ।

सुदिने शुभनक्षत्रे संक्रान्तावयनद्वये ।
नवरात्रिदिने पित्रोः श्राद्धे स्वजनिवासरे ॥ २९ ॥
नववर्षदिने देवि चन्द्रसूर्योपरागके ।
तिष्ये स्वजन्मनक्षत्रे दीक्षां दद्याद्विचक्षणः ॥ ३० ॥
तत्रादौ शुभनक्षत्रे स्नात्वा संपूज्य भैरवम् ।
गत्वा नदीतटं दिव्यं लताकुसुमसुन्दरम् ॥ ३१ ॥
द्वीपं वा परमं पुण्यं देवानामपि दुर्लभम् ।
देवतायतनं वापि प्राप्याशु प्रणमेत् ततः ॥ ३२ ॥
विलिप्य[1] विधिवद् देवि गुरुः कुर्यात् कृताह्निकः ।
वेदीमीशानदिग्भागे चतुष्कोणां मनोहराम् ॥ ३३ ॥
तत्र देवि परादेव्याः श्रीचक्रं तु विभावयेत् ।
सिन्दूरेण शिवे यन्त्रं मूलमन्त्रं समुच्चरन् ॥ ३४ ॥
त्रिकोणं बिन्दुसंयुक्तं षट्कोणं वृत्तमण्डलम् ।
वसुपत्रं त्रिवृत्ताङ्कं[2] भूगृहेणो[3]पशोभितम् ॥ ३५ ॥
दीक्षायन्त्रमिदं देवि दीक्षाकाले प्रपूजयेत् ।
गणेशधर्मवरुणाः कुबेरसहिताः शिवे ॥ ३६ ॥
विदिक्षु विदिगीशानाः पूजनीया यथाक्रमम् ।
तारमायारमाबीजैर्धूपदीपप्रसूनकैः ॥ ३७ ॥
मायां च मोहिनीं मेनां मङ्गलां सर्वमङ्गलाम् ।
महाविद्यां च देवेशि षट्कोणेषु प्रपूजयेत् ॥ ३८ ॥
तारमायारमाबीजैर्गन्धाक्षतप्रसूनकैः ।
गङ्गां च यमुनां देवि तदग्रेऽपि सरस्वतीम् ॥ ३९ ॥
त्रिकोणे पूजयेद् धीमानीशानाग्नेयपूर्वकम् ।
बिन्दौ श्रीमूलमन्त्रेण परादेवीं प्रपूजयेत् ॥ ४० ॥

---

१ 'विलिख्य' क. पाठः । २ 'वृताङ्ग' ख. पाठः । ३ 'गेहेनो' ख. पाठः ।

सदाशिवं महारौद्रं कामेशं कामनेश्वरम् ।
गन्धाक्षतप्रसूनाद्यैर्धूपदीपादितर्पणैः ॥ ४१ ॥
नैवेद्याचमनीयाद्यैस्ताम्बूलैश्च सुवासितैः ।
अष्टपत्रेषु देवेशि संपूज्या अष्ट मातरः ॥ ४२ ॥
ब्राह्म्याद्या देवि मन्त्रेण अष्टभैरवपूर्वकम् ।
ब्राह्मी नारायणी चैव कौमारी चापराजिता ॥ ४३ ॥
माहेश्वरी च चामुण्डा वाराही नारसिंहिका ।
वामावर्तक्रमेणैवं पूजनीया विशेषतः ॥ ४४ ॥
तत्रैव पूजयेदष्ट भैरवान् भैरवेश्वरि ।
महाकालं च कालाग्निं करालं विकरालकम् ॥ ४५ ॥
संहारं रुरुमीशानि सुप्तमुन्मत्तभैरवम् ।
संपूज्य विधिवत् तत्र गन्धाक्षतप्रसूनकैः ॥ ४६ ॥
यन्त्रमभ्यर्च्य देवेशि गुरुं संपूजयेत् ततः ।
पूर्वे ततः खनेत् कुण्डं योनिरूपं त्रिकोणकम् ॥ ४७ ॥
तत्रारणिं प्रपूज्यादौ वह्निमावाहयेच्छिवे ।
तारं वह्नित्रयं चाग्रे वैश्वानरपदं वदेत् ॥ ४८ ॥
प्रज्वलेति युगं प्रोच्येदिहागच्छेति संवदेत् ।
इह सन्निधिमाधत्स्व वरं मे देहि-युग्मकम् ॥ ४९ ॥
फड्वह्निजायां प्रोच्चार्य गन्धेनाभ्यर्चयेत् ततः ।
परादेव्यास्तु मन्त्रेण घृतमाज्यं चरेच्छिवे ॥ ५० ॥
मूलेनाग्नौ शिवे दद्यादाहुतीनां शतं परम् ।
घृतखण्डादिमृद्वीकाखर्जूराम्बुजपायसैः ॥ ५१ ॥
तत्र देवीं समावाह्य परां ध्यात्वा विशेषतः ।
प्राङ्मुखो गुरुरासीन उत्तराभिमुखं शिशुम् ॥ ५२ ॥
संस्थाप्य विधिवद् देवि कृत्वा विष्टरशोधनम् ।

भूतशुद्धिक्रमोपेतं प्राणार्पणविधिं चरेत् ॥ ५३ ॥
प्राणायामत्रयं कृत्वा विधायाचमनत्रयम् ।
तत्र मूलेन देवेशि दिशो बद्ध्वा परां स्मरेत् ॥ ५४ ॥
गुरुः शिष्याय शान्ताय पराप्रीत्यै महेश्वरि ।
वह्नेः समक्षं यन्त्राग्रे दीक्षां परमदुर्लभाम् ॥ ५५ ॥
कर्णमूले महाविद्यां श्रीविद्यां साधकेश्वरः ।
आनन्दासक्तहृदयः शनैस्त्रिस्त्रिः समर्पयेत् ॥ ५६ ॥
प्रथमं तु गणेशस्य मन्त्रं साङ्गं समर्पयेत् ।
ततो देव्याश्च गायत्रीं ततो मूलं महेश्वरि ॥ ५७ ॥
एवं समर्प्य देवेशि कृत्वा होमं यथाविधि ।
शिष्यो दीक्षां तु संप्राप्य गुरुमभ्यर्च्य शक्तितः ॥ ५८ ॥
तोषयित्वा प्रणामैश्च दक्षिणाभिः शुभाम्बरैः ।
तदाज्ञां सहसादाय जपाय परमेश्वरि ॥ ५९ ॥
यन्त्रं मन्त्रं च मालां च तन्त्रं वैकाङ्गमीश्वरि ।
पुनर्जातु शिवे शिष्यो गुरवेऽपि न दर्शयेत् ॥ ६० ॥
ततो होमं च संपाद्य वटुकं योगिनीगणम् ।
भूतान् सन्तर्प्य बलिना देवीं[1] देवं विसर्जयेत् ॥ ६१ ॥

श्रीदेव्युवाच ।

भगवन् देवदेवेश भक्तानुग्रहकारक ।
गणेशं चैव गायत्रीं मूलविद्यां जपेत् परम् ॥ ६२ ॥
शैवं मन्त्रं जपन्[2]यो वा वैष्णवं साधकेश्वरः ।
कां कां विद्यां स गृह्णीयाच्छिन्ध्येतत् संशयं मम ॥ ६३ ॥

श्रीभैरव उवाच ।

प्रथमेऽहनि देवेशि साधको गुरुभक्तितः ।

---

१ 'देवीदेवं' ख. पाठः । २ 'जपन् यो' ख. पाठः ।

गणेशं देवि गायत्रीं मूलविद्यां जपेत् परम् ॥ ६४ ॥
मुहूर्ते शुभदे देवि शैवं मन्त्रं जपेत् ततः ।
गुरोः पादप्रसादेन लब्ध्वा कतिपयैर्दिनैः ॥ ६५ ॥
ततो गुरुं शिवे भक्त्या वन्दनैः पूजनैः सदा ।
प्रार्थनाभिश्च संतोष्य श्रीविद्यां प्रार्थयेत् ततः ॥ ६६ ॥
विना श्रीविद्यया देवि साधकोऽदीक्षितः स्मृतः ।
अदीक्षितः पशुः प्रोक्तः पशुत्वान्निरयी भवेत् ॥ ६७ ॥
स्वजन्मनि शिवे तस्माद् गुरुमभ्यर्च्य भक्तितः ।
श्रीविद्यां प्रार्थयित्वादौ गृह्णीयात् सर्वसिद्धये ॥ ६८ ॥
महात्रिपुरसुन्दर्याः श्रीविद्यां प्राप्य दुर्लभाम् ।
सशिवां गिरिजे साङ्गां प्रार्थयेद् दक्षिणां ततः ॥ ६९ ॥
विना श्यामां न सिद्धिः स्यान्ममापि परमेश्वरि ।
द्वाविंशत्यक्षरीं विद्यां प्रजपेत् साधकोत्तमः ॥ ७० ॥
श्यामाविद्याजपेनाशु श्रीविद्या सिद्धिमेष्यति ।
तामसी कालिका प्रोक्ता राजसी षोडशाक्षरी ॥ ७१ ॥
सात्त्विकी च परादेवी महाश्रीषोडशाक्षरी ।
राज्यं देयं शिरो देयं देया सन्ततिरर्थिने ॥ ७२ ॥
वसुपूर्णं गृहं देयं न देया षोडशाक्षरी ।
विद्यां त्रिपुरसुन्दर्या लब्ध्वा गुरुप्रसादतः ॥ ७३ ॥
मनसापीति नो ब्रूयाच्छ्रीविद्योपासकोऽस्म्यहम् ।
श्यामां भजेत् पराविद्यां श्रीविद्याभेदरूपिणीम् ॥ ७४ ॥
तेन सिद्धिर्भवेदाशु देवानामपि दुर्लभा ।
यत्र[1] दृष्ट्वापि वै ब्रूयाद्गुरुस्तत्रं समाचरेत् ॥ ७५ ॥
गुरुरेव परा देवी गुरुरेव परा गतिः ।

---

१ 'तत्र' क. पाठः ।

गुरुमुल्लङ्घ्य यः कुर्यात् किञ्चित् स निरयं व्रजेत् ॥ ७६ ॥
एवं देवि पराभक्तो दीक्षितो गुरुपूजकः ।
गुरूपदेशतः कुर्याज् जपं पूजामहर्निशम् ॥ ७७ ॥
स्वयं दीक्षां गुरोर्लब्ध्वा दीक्षितः पुण्यभाजनम् ।
गुरुमभ्यर्च्य संप्राथ्य शक्तिदीक्षार्थमीश्वरि ॥ ७८ ॥
दीक्षिता यस्य नो शक्तिस्तस्य दीक्षा तु निष्फला ।
जन्मकोटिषु जप्तापि तस्य विद्या न सिध्यति ॥ ७९ ॥
ततः शिवे गुरुः शिष्यं संपूज्य परमार्थवित् ।
शिष्यस्त्रियं परारूपां देवीरूपां विचिन्तयेत् ॥ ८० ॥
अभ्यर्च्य परमां शक्तिं परावद् वन्दनैः स्तवैः ।
आदृत्य मातृवद् देवि कन्यावद् दीक्षयेत् तदा ॥ ८१ ॥
परावत् पूजयित्वादौ ततो दीक्षां समर्पयेत् ।
उपविश्य गुरुस्तत्र पश्चिमाभिमुखः शिवे ॥ ८२ ॥
दीक्षायै प्राङ्मुखीं कृत्वा पूजयेद् यन्त्रराजवत् ।
ततः संपूज्य देवेशि यन्त्राग्रे देवतागृहे ॥ ८३ ॥
शिवो भूत्वा पराविद्यां कर्णमूले समर्पयेत् ।
संप्राप्य सशिवां विद्यां गुरुं पितृवदर्चयेत् ॥ ८४ ॥
गन्धाक्षतप्रसूनाद्यैर्दक्षिणाम्बरपूर्वकैः ।
तदाज्ञां शिरसादाय जपं कुर्यात्तु सर्वदा ॥ ८५ ॥
शक्तिश्च दीक्षिता भूत्वा दीक्षितोऽपि स्वयं शिवे ।
मर्त्योऽपि सञ्छिवे जन्तुरमरत्वमवाप्नुयात् ॥ ८६ ॥
गुरोः पादप्रसादेन श्रीविद्या यदि लभ्यते ।
स श्यामा स शिवा देवि वश्यं तस्य जगत् त्रयम् ॥ ८७ ॥
इदं रहस्यं परमं तव भक्त्या मयेरितम् ।

---

'भाजनः' क. पाठः ।

दीक्षाविधेर्महादेवि गोपनीयं प्रयत्नतः ॥ ८८ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये दीक्षाविधि-
निरूपणं प्रथमः पटलः ॥ १ ॥

अथ

## द्वितीयः पटलः

श्रीभैरव उवाच ।

अधुना कथयिष्यामि मन्त्रान् साङ्गान् महेश्वरि ।
देवीनां वैष्णवाञ्छाक्ताञ्छैवांस्त्वं शृणु पार्वति ॥ १ ॥
त्रिपुरा त्र्यक्षरी बाला तथा त्रिपुरभैरवी ।
कालिका भद्रकाली च मातङ्गी भुवनेश्वरी ॥ २ ॥
उग्रतारा छिन्नशीर्षा सुमुखी च सरस्वती ।
अन्नपूर्णा महालक्ष्मीः शारिका शारदा ततः ॥ ३ ॥
इन्द्राक्षी बगला तुर्या राज्ञी ज्वालामुखी तथा ।
भीडा च कालरात्रिश्च भवानी वज्रयोगिनी ॥ ४ ॥
वाराही सिद्धलक्ष्मीश्च कुलवागीश्वरी ततः ।
(पद्मावती कुब्जिका च गौरी श्रीखेचरी ततः ॥ ५ ॥)
नीलसरस्वती देवि पराशक्तिः ततः स्मृता ।
एतासां देवि साङ्गानां शक्तीनां वच्म्यहं मनून् ॥ ६ ॥
शैवान् मन्त्रांस्ततो वक्ष्ये यथावच्छृणु पार्वति ।
मृत्युञ्जयोऽमृतेशानो वटुकोऽपि महेश्वरः ॥ ७ ॥
शिवः सदाशिवो रुद्रो महादेवः करालकः ।

विकरालो नीलकण्ठः शर्वः पशुपतिर्मृडः ॥ ८ ॥
पिनाकी गिरिशो भीमो गणेशः प्रमथाधिपः ।
कुमारः क्रोधनश्चेशः कपाली क्रूरभैरवः ॥ ९ ॥
संहार ईश्वरो भर्गो रुरुः कालाग्निरव्ययः ।
अघोरश्च महाकालः कामेश्वर इति स्मृतः ॥ १० ॥
वैष्णवाञ्छृणु देवेशि मन्त्रांस्तन्त्रेषु गोपितान् ।
ये[1]न श्रवणमात्रेण मन्त्री विष्णुपदं व्रजेत् ॥ ११ ॥
लक्ष्मीनारायणो राधाकृष्णो विष्णुर्नृसिंहकः ।
वराहो जामदग्न्यश्च सीतारामो जनार्दनः ॥ १२ ॥
विश्वक्सेनो वासुदेव इत्येवं दश वैष्णवाः ।
मन्त्रा अ[2]त्युत्तमा देवि जप्याः साधकसत्तमैः ॥ १३ ॥
एतेषां शाक्तशैवानां वैष्णवानां महेश्वरि ।
उद्धारान् वच्मि मन्त्राणां श्रुत्वा गोपय यत्नतः ॥ १४ ॥

(१) वाग्भवं कामराजश्च शक्तिर्मध्येऽभिधं न्यसेत् ।
नमोऽन्ते देवि बालाया मन्त्रोऽयं चाष्टवर्णकः ॥ १५ ॥
प्रका[3]शम्—" ऐं क्लीं सौः बालायै नमः " इति बाला ।

(२) वेधोबीजमधोऽध्यर्णमधो जिष्णुस्तमः परा ।
छविः शक्तिः शिरः कान्तिस्तमो माया शरत् शिरः ॥ १६ ।
तमो मायाञ्चले देव्या मन्त्रः पञ्चदशाक्षरः ।
[4]स्पष्टम्—" कएईलह्रीं हसकहलह्रीं सकलह्रीं " इति ।

(३) लक्ष्मीः परा मदनवाग्भवशक्तियुक्ता
तारं च भूतिकमले कथितापि विद्या ।
शक्त्यादिकं तु विपरीततया च प्रोक्तः
श्रीषोडशाक्षरविधिः शिवमस्तु पूर्णः ॥ १७ ।

---

१ 'येषां' ख. पाठः । २ 'अभ्युत्तमाः' क. पाठः । ३ 'प्रकाशं' ग. पाठः । ४ 'शुभदोस्तु' ख. पाठः

स्पष्टम्—"श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं कएईलह्रीं हसकहलह्रीं सकलह्रीं सौः ऐं क्लीं ह्रीं श्रीं" इति ।

देवि वक्ष्याम्यहं गुह्यं त्रिपुराया रहस्यकम् ।
नित्यायाः शक्तयः पूज्या वाग्भवीकामशक्तयः ॥ १८ ॥
तारमायारमाबीजैर्नाम मध्येऽश्वलेऽश्मरी ।
मन्त्रोऽयं सर्वशक्तीनां सर्वसाधारणो मतः ॥ १९ ॥
त्रिपुरापूजने देवि पृथग् जाप्ये पृथग्मनुः ।

(४) कालीत्रयं कूर्चयुग्मं लज्जायुग्मं समुच्चरेत् ॥ २० ॥
दक्षिणे कालिके चेति पुनर्बीजानि पूर्ववत् ।
ठद्वयं स्यान्मनोरन्ते मन्त्रोऽयं भुवनेश्वरः ॥ २१ ॥
द्वाविंशत्यक्षरी विद्या विद्याराज्ञी प्रकीर्तिता ।

स्पष्टम्—"क्रींक्रींक्रीं हूंहूं ह्रींह्रीं दक्षिणे कालिके क्रींक्रींक्रीं हूंहूं ह्रींह्रीं स्वाहा" इति काली ।

काल्याद्याः शक्तयः पूज्याः कालीबीजेन केवलम् ।
अन्यथा सिद्धिहानिः स्यात् कालिकापूजने परम् ॥ २२ ॥

(५) कालीत्रयं कूर्चयुग्मं लज्जायुग्मं च भद्रिकाम् ।
भद्रकालिपदं ब्रूयाद् बीजानि प्रतिलोमतः ॥ २३ ॥
ठद्वयेन समायुक्तो भद्रकाली-महामनुः ।

प्रकाशम्—"क्रींक्रींक्रीं हूंहूं ह्रींह्रीं भैं भद्रकालि भैं ह्रींह्रीं हूंहूं क्रींक्रींक्रीं स्वाहा" इति भद्रकाली ।

कालीकूर्चपराबीजैः परिवारादिशक्तयः ।
पूजनीया महादेवि भद्रकालीसमर्चने ॥ २४ ॥

(६) तारं परां समुद्धृत्य राजमातङ्गिनीति च ।
मम सर्वार्थसिद्धिं च देहि-युग्मं समुद्धरेत् ॥ २५ ॥
तुरगं ठद्वयं चान्ते मन्त्रोऽयं राजवल्लभः ।

प्रकाशम्—"ॐ ह्रीं राजमातङ्गिनि मम सर्वार्थसिद्धिं देहि २ फट् स्वाहा" इति मातङ्गी ।

तारेण पूज्या देवेशि शक्तयः परिवारगाः ।

(७) मायाबीजं नाम मध्ये नमो मन्त्राञ्चले वदेत् ।

एकाक्षरीयं विदिता भुवने भुवनेश्वरी ॥ २७ ॥

प्रकाशम्—" ह्रीं भुवनेश्वर्यै नमः " इति भुवनेश्वरी ।

मायाबीजेन संपूज्याः पूजाकालेऽत्र शक्तयः ।

(८) तारं परां वधूं कूर्चं तुरगं सकलाञ्चले ॥ २८ ॥

सार्धपञ्चाक्षरी तारा भवसागरतारिणी ।

स्पष्टम्—" ॐ ह्रीं स्त्रीं हूं फट् " इत्युग्रतारा ।

तारकान्तातटैः पूज्याः शक्तयश्चक्रमध्यगाः ॥ २९ ॥

(९) लक्ष्मीं लज्जां तथा मायां मात्रां द्वादशिकीमथ ।

वज्रवैरोचनीये द्वे माये फट्स्वाहया युते ॥ ३० ॥

स्पष्टम्—" श्रीं ह्रीं ह्रीं ऐं वज्रवैरोचनीये ह्रींह्रीं फट् स्वाहा " इति छिन्नमस्ता ।

मायायुग्मेन संपूज्याः शक्तयः परिवारगाः ।

(१०) वाग्भवं कामराजं च तथोच्छिष्ट–पदं वदेत् ॥ ३१ ॥

चण्डालिनीति प्रोच्चार्य सुमुखीदेवि चोद्धरेत् ।

महापिशाचिनि चेति मायार्णं पङ्कजत्रयम् ॥ ३२ ॥

वह्निजायाञ्चलो मन्त्रो गोपनीयो महेश्वरि ।

स्पष्टम्—" ऐं क्लीं उच्छिष्टचण्डालिनि सुमुखीदेवि महापिशाचिनि ह्रीं ठः ठः ठः स्वाहा " इति सुमुखी ।

वाक्कामबीजैः संपूज्याः शक्तयोऽन्याः परस्परम् ॥ ३३ ॥

(११) तारं माया च वाग्बीजं परा तारं महेश्वरि ।

सरस्वत्यै जगन्मन्त्रः प्रसिद्धोऽयं शिवाक्षरः ॥ ३४ ॥

स्पष्टं यथा–" ॐ ह्रीं ऐं ह्रीं ॐ सरस्वत्यै नमः " इति सरस्वती ।

तारमायाक्षरैः पूज्या देव्यो देवीसमीपगाः ।

(१२) तारं परापि कमला कामं विश्वं ततो वदेत् ॥ ३५ ॥

भगवति माहेश्वरि चान्नपूर्णे च ठद्वयम् ।

स्पष्टम्—"ॐ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा" इति अन्नपूर्णा ।

आदिबीजद्वयेनैव पूज्या देव्याः समीपगाः ॥ ३६ ॥

[*(१३)तारं परां रमां कामं वाग्भवं शक्तिबीजकम् ।

महालक्ष्मि प्रसीदेति युग्मं मा पङ्कजत्रयम् ॥ ३७ ॥

स्वाहान्तोऽयं महामन्त्रो महालक्ष्मीपदप्रदः ।

प्रकाशम्—"ॐ ह्रीं श्रीं क्लीं ऐं सौः महालक्ष्मि प्रसीद २ श्रीं ठः ठः ठः स्वाहा" इति महालक्ष्मीः ।

आदिबीजत्रयेणैव पूज्याः परमशक्तयः ॥ ३८ ॥ ]

(१४) तारं मायां श्रियं कूर्चं सिन्धुरं शर्म प्रो रेत् ।

नामाश्मरीं मनोरन्ते मन्त्रोऽयं भुवि दुर्लभः ॥ ३९ ॥

स्पष्टम्—"ॐ ह्रीं श्रीं हूं फ्रां आं शां शारिकायै नमः" इति शारिका ।

मायया पूजयेद् देवीः परिवारगताः शिवे ।

(१५) तारं माया स्मरः शक्तिरश्मरी नाम संवदेत् ॥ ४० ॥

भगवत्यै शारदायै मनोरन्ते परा वनम् ।

स्पष्टम्—"ॐ ह्रीं क्लीं सः नमो भगवत्यै शारदायै ह्रीं स्वाहा" इति शारदा ।

तारकामैः शिवे पूज्याः शक्तयः परमार्थदाः ॥ ४१ ॥

(१६) प्रणवं कमलां मायां वाग्भवं शक्तिमन्मथौ ।

इन्द्राक्षि वज्रहस्ते च हरमन्तेऽग्निवल्लभा ॥ ४१ ॥

मूलम्—"ॐ श्रीं ह्रीं ऐं सौः क्लीं इन्द्राक्षि वज्रहस्ते फट् स्वाहा" इति इन्द्राक्षी ।

आदिबीजत्रयेणैताः पूज्याः श्रीचक्रदेवताः ।

(१७) तारं मृत्स्नां च देवेशि बगलामुखि सर्वं च[1] ॥ ४३ ॥

दुष्टानां वाचं मुखकं पदं स्तम्भय–युग्मकम् ।

जिह्वां कीलय–युग्मं च मृत्तारं ठद्वयं मनुः ॥ ४४ ॥

---

* भ्रुकुटिबन्धान्तर्गतं क. पुस्तके नास्ति । १ 'सर्वदा' ख. ग. पाठः ।

प्रकाशम्—" ॐ ह्लीं बगलामुखि सर्वदुष्टानां वाचं मुखं पदं स्तम्भय २ जिह्वां कीलय २ ह्लीं ॐ स्वाहा " इति बगलामुखी ।

बीजद्वयेन संपूज्याः परिवारगताः पराः ।
(१८) प्रणवस्तारका ज्योतिस्तारा मध्येऽभिधं न्यसेत् ॥ ४५ ॥
अन्तेऽश्मरी महादेवि मन्त्रोऽयं शत्रुसूदनः ।

प्रकाशम्—" ॐ त्रुं त्रौं त्रों महातुर्यै नमः " इति महातुरी ।

प्रणवेनार्चयेद् देवि परिवारान् यथाक्रमम् ॥ ४६ ॥
(१९) तारं परा रमा वह्निः कामः शक्तिः षडक्षरः ।
भगवत्यै च राज्ञ्यै च माया ठद्वयमश्चले ॥ ४७ ॥

प्रकाशम्—" ॐ ह्रीं श्रीं रां क्लीं सौः भगवत्यै राज्ञ्यै ह्रीं स्वाहा " इति महाराज्ञी ।

ताराग्निभ्यां शिवे देवीपरिवारान् समर्चयेत् ।
(२०) तारं लज्जां श्रियं चैव ज्वालामुखि ममेति च ॥ ४८ ॥
सर्वशत्रून् भक्षय द्विरन्ते कूर्चं हरं पयः ।

प्रकाशम्—" ॐ ह्रीं श्रीं ज्वालामुखि मम सर्वशत्रून् भक्षय भक्षय हूं फट् स्वाहा " इति ज्वालामुखी ।

तारेण पूजयेद् देवि परिवारगताः पराः ॥ ४९ ॥
(२१) तारं परा रमा वेदी चन्द्रमन्मथशक्तयः ।
भीडाभगवतीत्येवं हंसरूपिणि ठद्वयम् ॥ ५० ॥

स्पष्टं यथा—" ॐ ह्रीं श्रीं ह्स्त्रैं ऐं क्लीं सौः भीडाभगवति हंसरूपिणि स्वाहा " इति भीडा ।

परारमार्णैर्देवेशि परिवारान् प्रपूजयेत् ।
(२२) प्रणवं वासना माया मन्मथः कमला ततः ॥ ५१ ॥
मध्ये नामाश्चले सर्वं वश्यं कुरुद्वयं वदेत् ।
वीर्यं देहि पुनर्नाम गणेश्वर्याश्मरी स्मृता ॥ ५२ ॥

प्रकाशम्—" ॐ ऐं ह्रीं क्लीं श्रीं कालरात्रि सर्वं वश्यं कुरु २ वीर्यं देहि २ गणेश्वर्यै नमः " इति कालरात्री ।

तारचन्द्रेण संपूज्य[1] परिवारांस्ततो यजेत् ।

(२३) तारं रमा रमा तारं तारं माया रमा रमा ॥ ५३ ॥

हूंफडन्तः समाख्यातो मन्त्रः सर्वार्थसाधकः ।

प्रकाशम्—"ॐ श्रीं श्रीं ॐ ॐ ह्रीं श्रीं श्रीं हूं फट्" इति भवानी ।

माबीजैः पूजयेद् देवि परिवारगताः पराः ॥ ५४ ॥

(२४) परार्णं वज्रयोगिन्यै ठद्वयं प्रणवादितः ।

मन्त्रोऽयं सर्वसिद्धीशः साधकानां जयप्रदः ॥ ५५ ॥

मूलम्—"ॐ ह्रीं वज्रयोगिन्यै स्वाहा" इति वज्रयोगिनी ।

मायाबीजेन देवेशि परिवारान् समर्चयेत् ।

(२५) चन्द्रवाह्लीकमोहार्णचन्द्रा मध्येऽभिधं न्यसेत् ॥ ५६ ॥

चन्द्रो मठं पद्मयुग्मं हरं नीरमयं मनुः ।

वासनामोहबीजेन पूजयेत् परिवारगान् ॥ ५७ ॥

मूलम्—"ऐं ग्लौं लं ऐं नमो भगवति वार्तालि[2] वाराहि देवते वराहमुखि ऐं ग्लौं ठः ठः फट् स्वाहा" इति धूम्रवाराही ।

(२६) तारं रमायुगं माया हरितं चन्द्रमन्मथौ ।

शक्तिर्नामाश्मरीमन्त्रः सिद्धलक्ष्म्या उदाहृतः ॥ ५८ ॥

प्रकाशम्—"ॐ श्रीं श्रीं ह्रीं हसौः[3] ऐं क्लीं सौः सिद्धलक्ष्म्यै नमः" इति सिद्धलक्ष्मीः ।

रमया पूजयेदन्याः परिवारगताः शिवे ।

(२७) तारं कामो डिम्बलक्ष्मीः कूर्चं कांक्षाभिधं ततः ॥ ५९ ॥

चन्द्रः पद्मः स्पृहा पद्मो वेश्या पद्मो वनं मनुः[4] ।

प्रकाशम्—"ॐ क्लीं ह्लां श्रीं हूं झं झषहस्ते कुलवागीश्वरि ऐं ठः झं ठः ख्रीं ठः स्वाहा" इति कुलवागीश्वरी ।

कामेन पूजयेद् देवि परिवारान् यथाक्रमम्[5] ॥ ६० ॥

(२८) तारं परा रमा कामा वीची पद्मावतीति च ।

---

१ 'संपूज्या' ख. पाठः । २ 'वार्त्तालि' ग. पाठः । ३ 'स्हौ' क. पाठः ।
४ 'ततः' ख. ग. पाठः । ५ 'क्रमात्' क. पाठः ।

मम वरं देहि-युग्मं हरं नीरमयं मनुः ॥ ६१ ॥

परया पूजयेद् देवीः परिवारगताः पराः ।

प्रकाशम्—"ॐ ह्रीं श्रीं क्लीं ब्लूं पद्मावति मम वरं देहि २ फट् स्वाहा" इति पद्मावती ।

(२९) तारं रमा वागुरार्णं नाम मध्ये ततः परा ॥ ६२ ॥

पद्मो वनमयं मन्त्रः सर्वसिद्धिफलप्रदः ।

वागुरार्णेन देवेशि पूजयेत् परिवारगाः ॥ ६३ ॥

प्रकाशम्—"ॐ श्रीं प्रीं कुब्जिके देवि ह्रीं ठः स्वाहा" इति कुब्जिका ।

(३०) प्रणवं कमला माया वाल्हीकं च शिवं ततः ।

गौरि शर्वो वनं देवि मन्त्रः सर्वार्थसिद्धिदः ॥ ६४ ॥

स्पष्टम्—"ॐ श्रीं ह्रीं ग्लौं गं गौरि गीं स्वाहा" इति गौरी ।

रमया परिवाराश्च पूजयेत् साधकोत्तमः ।

(३१) भेकी तमः परा शक्तिः खेचर्यै चाश्मरी ततः ॥ ६५ ॥

मन्त्रोऽयं खेचरो नाम खेचरत्वप्रदायकः ।

परया पूजयेद् देवीः परिवारगताः प्रिये ॥ ६६ ॥

स्पष्टम्—"मलह्रीं सौः खेचर्य्यै नमः" इति खेचरी ।

(३२) तारं व्योषं वाग्भवं च कूर्चं नीलसरस्वति ।

हरं नीरं मनोरन्ते मन्त्रोऽयं वाक्प्रदायकः ॥ ६७ ॥

व्योषेण पूजयेद् देवि परिवारा यथाविधि ।

प्रकाशम्—"ॐ ह्रां ऐं हूं नीलसरस्वति फट् स्वाहा" इति नीलसरस्वती ।

(३३) तारं रमा परा कामः शक्तिर्वस्त्रं ततोऽभिधम् ॥ ६८ ॥

वाग्भवं ठद्वयं देवि मन्त्रराजोऽयमीरितः ।

प्रकाशम्—"ॐ श्रीं ह्रीं क्लीं सौः ह्सौः पराशक्त्यै ऐं स्वाहा" इति पराशक्तिः ।

मूलेन पूजयेदन्या देवीस्तत्परिवारगाः ॥ ६९ ॥

इत्येष शाक्तमन्त्राढ्यः पटलो देवदुर्लभः ।

अधुना ते मनून् शैवान् वक्ष्यामि शृणु पार्वति ॥ ७० ॥
इदं रहस्यं परमं तव भक्त्या प्रकाशितम् ।
गुह्यातिगुह्यगुप्तं च गोपनीयं स्वयोनिवत् ॥ ७१ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये शाक्तमन्त्रो-
द्धारनिरूपणं द्वितीयः पटलः ॥ २ ॥

अथ

# तृतीयः पटलः ।

श्रीभैरव उवाच ।
यो देवदेवो देवेशि महामृत्युञ्जयः स्मृतः ।
मन्त्रोद्धारं प्रवक्ष्यामि तस्याहं शृणु पार्वति ॥ १ ॥
(१) त्र्यक्षं हृज्जं शक्तिशोभेऽपि शोङ्का
मां तस्माद्वै पालय द्विस्तथैव ।
तस्माच्छक्तिः खं शरद् हृज्जतारं
मन्त्रोद्धारो देवि मृत्युञ्जयस्य ॥ २ ॥
अमृतेशस्य वक्ष्यामि मन्त्रोद्धारं महेश्वरि ।
येन विज्ञातमात्रेण दीक्षाफलमवाप्नुयात् ॥ ३ ॥
(२) तारं हृज्जं शरन्नाम मध्ये विश्वं तथाश्वले ।
मन्त्रोऽयं सर्वसिद्धीशः सुमुखीशिववल्लभः ॥ ४ ॥
(३) प्रणवं भूतिबीजं च वटुकाय समुद्धरेत् ।

आपदुद्धारणायेति कुरुयुग्मं समुच्चरेत् ॥ ५ ॥

वटुकाय पराबीजं मन्त्रोऽयं देवदुर्लभः ।

(४) तारं व्योषं महादेवि ततो महेश्वराय च ॥ ६ ॥

विश्वमन्ते मनोर्दद्यान्मन्त्रोऽयं सर्वसिद्धिदः ।

(५) तारं विश्वं शिवायेति मन्त्रोऽयं भोगमोक्षदः ॥ ७ ॥

(६) तारं व्योषं शिवायेति नमोऽन्तेऽस्त्यपरो मनुः ।

इति शिवस्य मन्त्राः ।

(७) तारं वाणी शरत् कामः सदाशिवाय प्रोद्धरेत् ।

विश्वमन्ते स्मृतो मन्त्रो मन्त्रमौलिमणिः परः ॥ ८ ॥

इति सदाशिवस्य ।

(८) तारं व्योषं शिवो रुद्र प्रसीदेति युगं वदेत् ।

अन्ते ठद्वयमीशानि मन्त्रोऽयं देवदुर्लभः ॥ ९ ॥

इति रुद्रस्य ।

(९) तारं परा शिवो देवि महादेवाय ठद्वयम् ।

मन्त्रः[1] शिवप्रदो देवि शैवानां परमार्थदः ॥ १० ॥

(१०) तारं काली शिवो नाम तुरीरूपं[2] च ठद्वयम् ।

मन्त्रो भैरवविख्यातः कलौ भोगापवर्गदः ॥ ११ ॥

इति करालस्य ।

(११) तारं वाग्भवमामाया विकरालाय विन्यसेत् ।

अन्ते ठद्वयमुच्चार्य मन्त्रराजोऽयमीरितः ॥ १२ ॥

इति विकरालस्य ।

(१२) प्रणवं हरितं डिम्भं नीलकण्ठाय चाश्मरी ।

दुर्गेशनीलकण्ठस्य मन्त्रोद्धारो दशाक्षरः ॥ १३ ॥

(१३) तारं परा रमा-बीजं शर्वायेति पदं वदेत् ।

अन्तेऽश्मरी मनोर्देवि मन्त्रोऽयं भोगदः स्मृतः ॥ १४ ॥

---

१ 'मन्त्र' ङ. पाठः । २ तुरीरूपं चतुर्थ्यन्तमित्यर्थः ।

(१४) प्रणवो वाग्भवो मारः शक्तिः पशुपतेर्वनम् ।
मन्त्रोऽयं देवदेवस्य वल्लभो मुक्तिसाधनम् ॥ १५ ॥
(१५) तारं परा मृडायेति विश्वमन्ते मनुः स्मृतः ।
(१६) तारं हृज्जं परा लक्ष्मीर्मध्ये ब्रूयात्पिनाकिने ॥ १६ ॥
अन्तेऽश्मरी मनोर्देवि मन्त्रोऽयं वैरिसूदनः ।
(१७) तारं शिवो मठं देवि गिरिशायाश्मरी मनुः ॥ १७ ॥
(१८) तारं परा भद्रिका च भीमायान्तेऽश्मरी मनुः ।
(१९) माया शिवाक्षरं मायाः महागणपमुद्धरेत् ॥ १८ ॥
तयेऽश्मरी मनोरन्ते मन्त्रोऽयं विघ्नहारकः ।
(२०) तारं परा च वाह्लीकं प्रमथाधिपमुद्धरेत् ॥ १९ ॥
प्रसीद-द्वयमापोऽन्ते मन्त्रोऽयं देवदुर्लभः ।
(२१) छविः कुमाराय मनोरन्ते विश्वं मनुः परः ॥ २० ॥
सर्वदेवेन्द्रपददो भोगदो मोक्षदः स्मृतः ।
(२२) तारं काली शिवो देवि क्रोधनेशाय चाश्मरी ॥ २१ ॥
मन्त्रोऽयं सर्वसिद्धीशो वैरिवर्गनिवर्हणः ।
(२३) तारं परा रमा लक्ष्मीरीशायेति वनं मनुः ॥ २२ ॥
(२४) तारं शिवः कामराजः कपालीशाय संवदेत् ।
अन्ते ठद्वयमुद्धृत्य मन्त्रोऽयं स्याद् दशाक्षरः ॥ २३ ॥
(२५) तारं कालीयुगं माया क्रूरभैरव प्रोद्धरेत् ।
प्रसीद-द्वयमापोऽन्ते मन्त्रोऽयं सर्वसिद्धिदः ॥ २४ ॥
(२६) तारं वाणी शरत् कामः संहारायाश्वले वनम् ।
मन्त्रोऽयं देवदेवस्य वर्णितस्ते दशाक्षरः ॥ २५ ॥
(२७) तारं मा भूतिर्मा लक्ष्मीरीश्वरायाश्मरी मनुः ।
(२८) तारं च भास्वती माया भर्गायान्तेऽश्मरी मनुः ॥ २६ ॥
(२९) तारं चाब्धिः परा बीजं रुरवे चाश्मरी मनुः ।

(३०) प्रणवं कमला माया कालाग्नये-पदं ततः ।। २७ ॥
विश्वमन्ते मनोर्देवि मन्त्रराजोऽयमीरितः ।
(३१) तारं व्योषं शिवो देवि सद्योजाताय चाश्मरी ॥ २८ ॥
उग्रताराशिवस्यायमव्ययस्य मनुः स्मृतः ।
(३२) मात्रादिः षडभिज्ञवह्निकुलिशास्तस्माद्बिलं मारजि-
द्वह्नी वज्रकगौतमाग्नियुगलं रात्र्यग्निवज्राङ्कितम् ।
शङ्कौ वीं च तमी शुभौ बकयुतौ शक्त्यौ[?क्लि]र्वेवज्राश्मका
रात्र्यब्धीन्दुजसिन्दुमत्स्यकुलिशा मन्त्रोऽयमाघोरिकः ॥२९॥
(३३) कूर्चद्वन्द्वं महाकाल प्रसीदेति पदद्वयम् ।
मायाद्वयं वह्निजाया राजराजेश्वरो मनुः ॥ ३० ॥
(३४) वाग्भवं मदनशक्तितारका मा परा सकलविद्ययाश्रिता ।
वारयुक्तविपरीतबीजकः षोडशाक्षरविधिः शिवः स्मृतः ॥ ३१ ॥
इतीदं मन्त्रसर्वस्वं रहस्यं परमं परम् ।
तव भक्त्या मयाख्यातं नचाख्येयं दुरात्मने ॥ ३२ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये शिवमन्त्रो-
द्धारनिरूपणं तृतीयः पटलः ॥ ३ ॥

अथ

# चतुर्थः पटलः ।

श्रीभैरव उवाच ।

अधुना कथयिष्यामि वैष्णवांस्तत्त्वतो मनून् ।
येषां स्मरणमात्रेण दीक्षितो दीक्षितो भवेत् ॥ १ ॥
मन्त्रोद्धारं प्रवक्ष्यामि लक्ष्मीनारायणस्य ते ।
अष्टसिद्धिप्रदं सद्यः साधकानां सुदुर्लभम् ॥ २ ॥
(१) तारं परा च हरितं परा लक्ष्मीस्ततोऽभिधम् ।
लक्ष्मीनारायणायेति विश्वमन्ते मनुः स्मृतः ॥ ३ ॥
(२) तारं रमा वाग्भवकामशक्ति-
मायाग्निराधेति पदं वदेच्च ।
कृष्णाय कूर्चं हरठद्वयं स्या-
च्छ्रीकृष्णमन्त्रो मनुराजमौलिः ॥ ४ ॥
(३) तारं परायुगं तारं विष्णवे विश्वमश्वले ।
देवदेवस्य मन्त्रोऽयं विष्णोस्तव समीरितः ॥ ५ ॥
(४) तारं रमा भूबिजवाक्स्मराश्च
शक्तिर्नृबीजं नरसिंहदेवम् ।
तुर्याङ्कितं वाक् तटफड्वनं ते
प्रोक्तो हि लक्ष्मीनरसिंहमन्त्रः ॥ ६ ॥
(५) तारं रमार्णं सकला स्मरश्च
लक्ष्मीवराहाय-पदं वदेत् तु ।
अन्तेऽश्मरी वैष्णवधामदायी
लक्ष्मीवराहस्य मनुः स्मृतस्ते ॥ ७ ॥

(६) तारं परा भूति रमा कुचार्णं
श्रीजामदग्न्याय सरोजयुग्मम् ।
आपस्तथान्ते गदितोऽयमीड्यो
यथेष्टदो भार्गवराममन्त्रः ॥ ८ ॥

(७) तारं परा रमा लक्ष्मीसीतारामेति संवदेत् ।
प्रसीद–युगमापोऽन्ते मन्त्रोऽयं मुक्तिकारणम् ॥ ९ ॥

(८) तारं मा भूतिमा माख्यां वदेज्जनार्दनाय च ।
विश्वमन्ते मनोर्देवि मन्त्रोऽयं रिपुसूदनः ॥ १० ॥

(९) तारं परायुगं लक्ष्मीविश्वक्सेनाय संवदेत् ।
कूर्चं पद्मत्रयं नीरं वैष्णवानां सुदुर्लभः ॥ ११ ॥

(१०) तारं परा रमा वाणी कामो लक्ष्मीपदं वदेत् ।
वासुदेवाय विश्वं स्यान्मन्त्रोऽयं भोगमोक्षदः ॥ १२ ॥
इदं तत्त्वतमं गुह्यं रहस्यं परमाद्भुतम् ।
वैष्णवानां च सर्वस्वं गोपनीयं स्वयोनिवत् ॥ १३ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये वैष्णवमन्त्रोद्धारनिरूपणं चतुर्थः पटलः ॥ ४ ॥

अथ

# पञ्चमः पटलः ।

श्रीभैरव उवाच ।

अथ वक्ष्ये महत्तत्त्वं मन्त्राणां परमार्थदम् ॥
येन विज्ञातमात्रेण विद्या सिध्यति सत्वरम् ॥ १ ॥
उत्कीलनविधिं वक्ष्ये सर्वमन्त्ररहस्यकम् ।
अदातव्यमभक्तेभ्यो नाख्येयं यस्य कस्यचित् ॥ २ ॥
शाक्तानां देवि मन्त्राणां शैवानां च विशेषतः ।
वैष्णवानां मनूनां तु वक्ष्याम्युत्कीलनं परम् ॥ ३ ॥
प्रथमं देवि बालायास्त्र्यक्षर्याः शृणु पार्वति ।
वाणीमन्ते त्रिरुच्चार्य भवेदुत्कीलनं मनोः ॥ ४ ॥
अन्त्यकूटं वदेदादौ द्विर्देवि जपसिद्धये ।
भवेत् त्रिपुरभैरव्या मनोरुत्कीलनं परम् ॥ ५ ॥
कूटत्रयाणां प्रथमं वर्णं वर्णं समुद्धरेत् ।
जपेच्छ्रीषोडशाक्षर्या भवेदुत्कीलनं मनोः ॥ ६ ॥
अथ वक्ष्ये रहस्यं ते कालिकाया महेश्वरि ।
निष्कीलिता स्याद्विद्येयं द्वाविंशत्यक्षरी परा ॥ ७ ॥
भद्रिकां प्रथमं दद्यादन्ते कालीत्रयं वदेत् ।
भद्रकालीमनोर्देवि भवेदुत्कीलनं तथा ॥ ८ ॥
ठद्वयान्ते परां दद्यात् जपेत्[1] साधकसत्तमः ।
भवेदुत्कीलनं देवि राजमातङ्गिनीमनोः ॥ ९ ॥
विश्रान्ते सकलां दद्याज्जपेत् पार्वति जापकः ।

---

[1] 'जपेत्' ङ. पाठः ।

मनोः श्रीभुवनेश्वर्याः स्यादुत्कीलनमुत्तमम् ॥ १० ॥
वधूमादौ पठेदन्ते तारं जप्त्वा च पार्वति ।
अयमुत्कीलनो मन्त्रस्तारायाः समुदाहृतः ॥ ११ ॥
मात्रां द्वादशिकीमादौ जपेन्मन्त्रस्य पार्वति ।
छिन्नशीर्षामनोरेष स्यादुत्कीलनकः परः ॥ १२ ॥
मायामादौ वनान्ते च वाग्भवं साधको जपेत् ।
सुमुख्या मन्त्रराजस्य भवेदुत्कीलनं तथा ॥ १३ ॥
वाग्भवं प्रथमं दद्याद्विश्वान्ते प्रणवं जपेत् ।
सरस्वतीमनोर्देवि मन्त्रोऽस्त्युत्कीलनाभिधः ॥ १४ ॥
विश्वमादौ जपेद् देवि वनान्ते मदनं पठेत् ।
अन्नपूर्णामनोरेष स्यादुत्कीलनको मनुः ॥ १५ ॥
रमामादौ मनोर्दद्यात् पद्मत्रयमथाञ्चले ।
महालक्ष्मीमनोर्देवि मन्त्रोऽस्त्युत्कीलनाभिधः ॥ १६ ॥
सिन्धुरं सञ्जपेदादौ मायामन्ते महेश्वरि ।
शारिकामन्त्रराजस्य स्यादुत्कीलनको मनुः ॥ १७ ॥
वनमादौ च नामाग्रे तारं दत्त्वा जपेच्छिवे ।
शारदामन्त्रराजस्य मन्त्रोऽस्त्युत्कीलनाभिधः ॥ १८ ॥
शक्तिबीजं पठेदादौ ठद्वयान्ते च मन्मथम् ।
इन्द्राक्षीमन्त्रराजस्य स्यादुत्कीलनको मनुः ॥ १९ ॥
मृद्बीजं च मनोरादौ वनान्ते प्रणवं जपेत् ।
मन्त्रोऽयं बगलामुख्या मन्त्रोत्कीलनसिद्धिदः ॥ २० ॥
त्रिः पठेदश्मरीप्रान्ते प्रणवं साधकोत्तमः ।
तुरीमन्त्रस्य मन्त्रोऽयमुत्कीलनफलप्रदः ॥ २१ ॥
वह्निमादौ तथा चान्ते[1] तारं दत्त्वा महेश्वरि ।

---

१ 'न्ते व' ख. पाठः ।

जपेन्मन्त्रं महाराज्ञीमनूत्कीलनसिद्धये ॥ २२ ॥
रमामादौ जपेद् देवि मन्त्रान्ते सकलां जपेत् ।
ज्वालामुखीमनोरेष मन्त्रोऽस्त्युत्कीलनक्षमः ॥ २३ ॥
वेदीबीजं पठेदादौ नामान्ते प्रणवं जपेत् ।
भीडामन्त्रस्य मन्त्रोऽयमुत्कीलनफलप्रदः ॥ २४ ॥
विश्वान्ते वाग्भवं दद्यात् काममादौ जपेत् प्रिये ।
कालरात्रिमनोर्देवि स्यादुत्कीलनको मनुः ॥ २५ ॥
तारत्रयं पठेदन्ते मा-त्रयं प्रथमं जपेत् ।
भवानीमन्त्रराजस्य मन्त्रोऽयं कीलदोषनुत् ॥ २६ ॥
परामन्ते जपेद् देवि वज्रयोगेश्वरीमनोः ।
उत्कीलनाख्यो मन्त्रोऽयं मन्त्रसिद्धिफलप्रदः ॥ २७ ॥
मठमादौ जपेद् देवि ठद्वयान्ते हरं तथा ।
वाराहीमन्त्रराजस्य मन्त्रोऽस्त्युत्कीलनाभिधः ॥ २८ ॥
हरितं प्रथमं देवि विश्वान्ते वाग्भवं जपेत् ।
सिद्धलक्ष्मीर्मनोर्देवि मन्त्रोऽस्त्युत्कीलनाभिधः ॥ २९ ॥
वेश्यामादौ वनान्ते च डिम्बबीजं जपेच्छिवे ।
उत्कीलनाख्यो मन्त्रोऽयं कुलवागीश्वरीमनोः ॥ ३० ॥
वीचिबीजं जपेदादौ ठद्वयान्ते च तारकम् ।
पद्मावतीमनोर्देवि मन्त्रोऽस्त्युत्कीलनाभिधः ॥ ३१ ॥
वागुरां सञ्जपेदादौ वनान्ते सकलां जपेत् ।
कुब्जिकामन्त्रराजस्य मन्त्रोऽयं कीलदोषहृत् ॥ ३२ ॥
मठमादौ मनोर्देवि प्रणवं ठद्वयाश्चले ।
मन्त्रं जपेदयं मन्त्रो गौरीमन्त्रस्य कीलहृत् ॥ ३३ ॥
शक्तिमन्ते जपेद्विश्वं प्रथमं परमेश्वरि ।

---

१ ‘मन्त्रोत्कीलनको मनुः’ ख. ग. पाठः ।

खेचरीमन्त्रराजस्य स्यादुत्कीलनको मनुः ॥ ३४ ॥
कूर्चमादौ मनोरन्ते व्योषं दत्त्वा जपेच्छिवे ।
मनोर्नीलसरस्वत्याः स्यादुत्कीलनको मनुः ॥ ३५ ॥
शक्तिमादौ मनोर्देवि वासनामञ्चले जपेत् ।
पराशक्तेर्मनोर्देवि कीलदोषापहो मनुः ॥ ३६ ॥

श्रीभैरव उवाच ।

अधुना शैवमन्त्राणां केचिद् देवि मनूत्तमाः ।
निष्कीलिता मया ख्याताः केचित् पार्वति कीलिताः ॥ ३७ ॥
महेश्वरः शिवो रुद्रो महादेवः करालकः ।
विकरालः शिवो शर्वो मृडः पशुपतिस्तथा ॥ ३८ ॥
पिनाकी गिरिशो भीमः कुमारः प्रमथाधिपः ।
क्रोधेश ईश ईशानि कपाली क्रूरभैरवः ॥ ३९ ॥
संहार ईश्वरो भर्गो रुरुः कालाग्निभैरवः ।
एते मन्त्रा महादेवि कीलदोषविवर्जिताः ॥ ४० ॥
पुरश्चरणमात्रेण फलं दास्यन्ति सत्वरम् ।
अथवा देवदेवेशि वक्ष्ये तत्त्वं परात् परम् ॥ ४१ ॥
एतेषां शैवमन्त्राणां श्रुत्वा गोप्यतमं कुरु ।
मन्त्रादिबीजं देवेशि प्रतिमन्त्रं जपेत् सुधीः ॥ ४२ ॥
त्रिवारं साधको येन भवेदुत्कीलनं मनोः ।
मृत्युञ्जयोऽमृतेशानो वटुको नीलकण्ठकः ॥ ४३ ॥
सद्योजातो गणेशश्च देवेशोऽघोरभैरवः ।
महाकालो महादेवि कामेश्वर इति प्रिये ॥ ४४ ॥
एते मन्त्रा मया देवि कीलिता मन्त्रसिद्धये ।
एतेषां शृणु मन्त्राणां देवेश्युत्कीलनं परम् ॥ ४५ ॥
येनोच्चारणमात्रेण मन्त्रसिद्धिः प्रजायते ।

---
न्यसेत् ' ग. घ. पाठः ।

हृज्ञबीजं जपेदादौ अन्ते शक्तिं जपेत् प्रिये ॥ ४६ ॥
श्रीमृत्युञ्जयमन्त्रस्य मन्त्रोऽस्त्युत्कीलनाभिधः ।
तारमन्ते जपेदादौ शक्तिं मन्त्रस्य[1] पार्वति ॥ ४७ ॥
अमृतेश्वरमन्त्रस्य स्यादयं कीलदोषहृत् ।
*(परामादौ जपेदन्ते प्रणवं साधकोत्तमः ॥ ४८ ॥
मन्त्रो वटुकमन्त्रस्य स्यादयं कीलनाशकः ।)
हरितं प्रथमं दत्त्वा मन्त्रान्ते च शिवं जपेत् ॥ ४९ ॥
दुर्गाशिवस्य मन्त्रोऽयं नीलकण्ठस्य कीलनुत् ।
शिवमादौ जपेदन्ते तारं पार्वति साधकः ॥ ५० ॥
उग्रताराशिवस्यायं मन्त्रो मन्त्रस्य कीलहृत् ।
मायामन्ते जपेद् देवि शिवमादौ च साधकः ॥ ५१ ॥
महागणपतेर्मन्त्रो मनोरुत्कीलनाभिधः ।
विश्वमादौ मनोर्देवि मात्रादिं चाञ्चले जपेत् ॥ ५२ ॥
अघोरभैरवस्यायं मनोरुत्कीलनो मनुः ।
एषामपि महाकालो निष्कीलित इति स्मृतः ॥ ५३ ॥
अस्य मन्त्रप्रसादेन सर्वे निष्कीलिताः शिवे ।
कामेशकूटत्रयतः प्रथमार्णत्रयं जपेत् ॥ ५४ ॥
श्रीविद्याशिवमन्त्रस्य स्यादुत्कीलनको मनुः ।
अथाहं[2] वैष्णवानां ते मन्त्राणां वच्मि पार्वति ॥ ५५ ॥
उत्कीलनमनून् येषां जपमात्राच्छिवं भजेत्[3] ।
हरितं प्रथमं दद्यादन्ते प्रणवमीश्वरि ॥ ५६ ॥
लक्ष्मीनारायणस्यायं स्यादुत्कीलनको मनुः ।
शक्तिमादौ मनोरन्ते वाग्भवं साधको जपेत् ॥ ५७ ॥
श्रीराधाकृष्णमन्त्रस्य मन्त्रोऽयं कीलदोषहृत् ।

---

* अकुटिबन्धान्तर्गतं ख. पुस्तके नास्ति । १ ‘ नुत् ’ ख. पाठः । २ ‘ अद्याहं ’ ग. घ. पाठः । ३ ‘ शिवो भवेत् ’ क. पाठः ।

परायुगं जपेदन्ते विश्वमादौ जपेन्मनोः ॥ ५८ ॥
विष्णुमन्त्रस्य मन्त्रोऽयं स्यादुत्कीलनकाभिधः ।
स्मरमादौ जपेदन्ते नृबीजं साधकोत्तमः ॥ ५९ ॥
लक्ष्मीनृसिंहमन्त्रस्य मन्त्रोऽयं कीलदोषहृत् ।
तारमन्ते रमामादौ जपेत् साधकसत्तमः ॥ ६० ॥
लक्ष्मीवराहमन्त्रस्य भवेदुत्कीलनं परम् ।
कूर्चबीजं जपेदादौ मन्त्रान्ते पद्मयुग्मकम् ॥ ६१ ॥
मनोर्भार्गवरामस्य भवेदुत्कीलनं शिवे ।
परामन्ते रमामादौ जपेत् पार्वति सिद्धये ॥ ६२ ॥
श्रीसीतारामभद्रस्य मनोर्मन्त्रोऽस्ति कीलहृत् ।
मामन्ते प्रथमं मां च जपेत् पार्वति साधकः ॥ ६३ ॥
जनार्दनमनोर्मन्त्रः स्यादुत्कीलनकाभिधः ।
लक्ष्मीमादौ परामन्ते सकृदुच्चारयेत् सुधीः ॥ ६४ ॥
विश्वक्सेनमनोर्देवि स्यादुत्कीलनको मनुः ।
काममादौ च मन्त्रान्ते तारं देवि जपेत् सुधीः ॥ ६५ ॥
वासुदेवमनोर्मन्त्रः स्यादुत्कीलनकाभिधः ।
इति तत्त्वं महादेवि मन्त्राणां परमार्थदम् ।
तव स्नेहेन कथितं नाख्येयं ब्रह्मवादिभिः ॥ ६६ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये मन्त्रोत्कीलन-
विधिनिरूपणं पञ्चमः पटलः ॥ ५ ॥

अथ

# षष्ठः पटलः ।

श्रीभैरव उवाच ।

अथ ते वर्णयिष्यामि सञ्जीवनमनून् प्रिये ।
एषामुच्चारमात्रेण मन्त्रः सिद्धिप्रदो भवेत् ॥ १ ॥
बालाया देवि त्र्यच्चर्याः शक्तिमादौ पठेत् सुधीः ।
सञ्जीवनाख्यो मन्त्रोऽयं दिव्यो मन्त्रस्य सिद्धये ॥ २ ॥
परात्रयं पठेदादौ जीवनं भैरवीमनोः ।
कूटत्रयाणां देवेशि त्रिकूटाया जपेत् सुधीः ॥ ३ ॥
द्वितीयार्णत्रयं देवि भवेत् सञ्जीवनं मनोः ।
सिद्धविद्या महाश्यामा सर्वदोषविवर्जिता ॥ ४ ॥
जप्या सिध्यै सदा सद्भिर्ब्रह्मविद्भिर्मुमुक्षुभिः ।
भद्रिकायुगलं देवि दद्यादन्ते मनोः शिवे ॥ ५ ॥
भद्रकालीमनोरेष स्यात् सञ्जीवनको मनुः ।
तारं परां पठेदन्ते जपादौ साधकेश्वरि ॥ ६ ॥
राजमातङ्गिनीदेव्या भवेत् सञ्जीवनं मनोः ।
वारत्रयं पठेदादौ मूलमन्त्रस्य वै पराम् ॥ ७ ॥
मन्त्रस्य भुवनेश्वर्या भवेत् सञ्जीवनं परम् ।
कालीं तारं पठेदन्ते मन्त्रस्यास्य महेश्वरि ॥ ८ ॥
उग्रतारामनोरेष स्यात् सञ्जीवनको मनुः ।

---

१ 'कालीत्रयं' क. ख. ग. घ. पाठः ।

वासनां मूलमन्त्रस्य जपेदन्ते महेश्वरि ॥ ६ ॥
छिन्नमस्तामनोरेष स्यात् सञ्जीवनको मनुः ।
परामादौ जपेद् देवि काममन्ते तथैव च ॥ १० ॥
सुमुखीमन्त्रराजस्य भवेत् सञ्जीवनं प्रिये ।
तारद्वयं जपेन्मन्त्री मन्त्रान्ते मान्त्रिकेश्वरि ॥ ११ ॥
सरस्वतीमनोरेष स्यात् सञ्जीवनको मनुः ।
विश्वमन्ते जपेदादौ ठद्वयं कालिकेश्वरि ॥ १२ ॥
अन्नपूर्णामनोर्येन भवेत् सञ्जीवनं परम् ।
वाणीमन्ते जपेदादौ कामराजं च साधकः ॥ १३ ॥
महालक्ष्मीमनोर्देवि भवेत् सञ्जीवनं परम् ।
कूर्चमादौ परामन्ते जपेत् साधकसत्तमः ॥ १४ ॥
शारिकामूलमन्त्रस्य भवेत् सञ्जीवनं प्रिये ।
कामराजं जपेदादौ मायाबीजं तथाश्चले ॥ १५ ॥
शारदामन्त्रराजस्य सञ्जीवनमनुः स्मृतः ।
मन्मथं शक्तिबीजं च जपेदादौ च साधकः ॥ १६ ॥
इन्द्राक्षीमूलमन्त्रस्य सञ्जीवनमनुः परः ।
मृत्स्नाबीजं जपेद् देवि प्रणवं च वनाश्चले ॥ १७ ॥
बगलामन्त्रराजस्य भवेत् सञ्जीवनं परम् ।
तारकं मूलमन्त्रान्ते त्रिरुच्चार्य जपेत् प्रिये ॥ १८ ॥
तुर्यामन्त्रस्य निर्णीतः सञ्जीवनमनुः परः ।
वह्निबीजं जपेदन्ते शक्तिमादौ महेश्वरि ॥ १९ ॥
राज्ञीमन्त्रस्य मन्त्रोऽयं सञ्जीवनकरः स्मृतः ।
कूर्चमादौ च तुरगं जपेदन्ते महेश्वरि ॥ २० ॥
ज्वालामुखीमनोरेष मन्त्रः सञ्जीवनाभिधः ।
वाग्भवं प्रणवादौ च ठद्वयान्ते जपेत् पराम् ॥ २१ ॥
एष सञ्जीवनो मन्त्रो भीडाभगवतीमनोः ।

तारमन्ते रमामादौ जपेत् साधकसत्तमः ॥ २२ ॥
गणेश्वरीकालरात्र्याः स्यात् सञ्जीवनको मनुः ।
कूर्चमादौ हरान्ते मां जपेत् साधकसत्तमः ॥ २३ ॥
भवानीमूलमन्त्रस्य भवेत् सञ्जीवनं परम् ।
मायामुच्चार्य देवेशि त्रिरादौ त्रिस्तथाञ्चले ॥ २४ ॥
सञ्जीवनमनुर्देवि स्याद्वज्रयोगिनीमनोः ।
मठमन्ते मठं चादौ जपेत् पार्वति कौलिकः ॥ २५ ॥
मन्त्रोऽयं धूम्रवाराह्या मनोः सञ्जीवनाभिधः ।
हरितं मूलमन्त्रान्ते जपेदादौ च मन्मथम् ॥ २६ ॥
सिद्धलक्ष्मीमनोरेष स्यात् सञ्जीवनको मनुः ।
काङ्क्षामादौ रमामन्ते जपेत् साधकसत्तमः ॥ २७ ॥
भवेत् सञ्जीवनं देवि कुलवागीश्वरीमनोः ।
काममादौ महादेवि जपेदन्ते रमां शिवे ॥ २८ ॥
पद्मावतीमनोरेष स्मृतः सञ्जीवनो मनुः ।
वागुरां पङ्कजान्ते च प्रणवादौ परां जपेत् ॥ २९ ॥
कुब्जिकामूलमन्त्रस्य मन्त्रोऽयं जीवनाभिधः ।
वाह्नीकं प्रणवादौ च मूलान्ते तु शिवं जपेत् ॥ ३० ॥
गौरीमन्त्रस्य मन्त्रोऽयं स्यात् सञ्जीवनकाभिधः ।
कूटमन्ते विश्वमादौ जपेत् पार्वति साधकः ॥ ३१ ॥
खेचरीमन्त्रराजस्य भवेत् सञ्जीवनं शिवे ।
वाणीमादौ परामन्ते जपेन्मान्त्रिकसत्तमः ॥ ३२ ॥
भवेत् सञ्जीवनं देवि नीलासरस्वतीमनोः ।
वाग्भवं प्रणवादौ च काममन्ते जपेत् शिवे ॥ ३३ ॥
एष सञ्जीवनो मन्त्रः पराशक्तिमनोः स्मृतः ।

---

१ 'तत्परम्' ख. पाठः । २ 'पार्वति साधकः' ख. पाठः । ३ 'न्तेऽपि' ख. पाठः ।

अधुना शैवमन्त्राणां निष्कीलानां महेश्वरि ॥ ३४ ॥
वक्ष्ये तत्त्वं रहस्यं ते सञ्जीवनकरं परम् ।
मूलमन्त्राञ्चले मन्त्री जपेत् तारं पृथक् पृथक् ॥ ३५ ॥
सर्वेषां शैवमन्त्राणां भवेत् सञ्जीवनं प्रिये ।
तथापि कीलितानां ते सञ्जीवनमनून् ब्रुवे ॥ ३६ ॥
येषां साधनमात्रेण मूलविद्याशु सिध्यति ।
सूर्यनामाक्षरद्वन्द्वं जपेदादौ च साधकः ॥ ३७ ॥
मृत्युञ्जयमनोरेष मन्त्रः सञ्जीवनाभिधः ।
विश्वमादौ विश्वमन्ते जपेन्मान्त्रिकनायकः ॥ ३८ ॥
अमृतेश्वरमन्त्रस्य भवेत् सञ्जीवनं परम् ।
वटुकायेति तारादौ जपेत् पार्वति साधकः ॥ ॥ ३९ ॥
सञ्जीवनमनुः प्रोक्तो वटुकस्यैष दुर्लभः ।
शिवं च प्रणवादौ तु जपेत् साधकवन्दिते ॥ ४० ॥
श्रीनीलकण्ठमन्त्रस्य मन्त्रः सञ्जीवनाभिधः ।
परामादौ त्रिरुच्चार्य जपादौ सञ्जपेत् सुधीः ॥ ४१ ॥
सद्योजातमनोरेष स्मृतः सञ्जीवनो मनुः ।
शिवमन्ते द्विरुच्चार्य जपेद् देवि जपादितः ॥ ४२ ॥
महागणपतेर्मन्त्रो मनोः सञ्जीवनाभिधः ।
वज्रबीजानि मूलादौ जपेत् पार्वति साधकः ॥ ४३ ॥
अघोरदेवमन्त्रस्य मनुः सञ्जीवनः स्मृतः ।
निर्दोषो मन्त्रराजोऽयं महाकालस्य पार्वति ॥ ४४ ॥
अस्योच्चारणमात्रेण मन्त्राः सिध्यन्ति सर्वदा ।
कूटत्रयेभ्यो देवेशि द्वितीयाक्षरमुच्चरेत् ॥ ४५ ॥
जपेत् कामेशमन्त्रस्य भवेत् सञ्जीवनं शिवे ।
अथाहं वैष्णवानां ते मनूनां वच्मि जीवनम् ॥ ४६ ॥

याञ्जप्त्वा साधको देवि भवेद्भैरवसन्निभः ।
हरितं मूलमन्त्रान्ते जपेत् पार्वति साधकः ॥ ४७ ॥
लक्ष्मीनारायणमनोर्भवेत् सञ्जीवनं परम् ।
शक्तिमन्ते मनोरादौ वाग्भवं साधको जपेत् ॥ ४८ ॥
श्रीराधाकृष्णमन्त्रस्य सञ्जीवनमनुः स्मृतः ।
विश्वान्ते प्रणवं देवि जपेत् साधकसत्तमः ॥ ४९ ॥
विष्णुमन्त्रस्य मन्त्रोऽयं स्मृतः सञ्जीवनाभिधः ।
नृबीजं प्रथमं देवि प्रणवं चाञ्चले जपेत् ॥ ५० ॥
लक्ष्मीनृसिंहमन्त्रस्य मन्त्रः सञ्जीवनाभिधः ।
रमामन्ते त्रिरुच्चार्य जपेदानन्दनिर्भरे ॥ ५१ ॥
लक्ष्मीवराहमन्त्रस्य सञ्जीवनमनुः स्मृतः ।
परायुग्मं जपेदादौ मन्त्रराजस्य पार्वति ॥ ५२ ॥
मन्त्रो भार्गवरामस्य मनोः सञ्जीवनः स्मृतः ।
मन्त्रान्ते प्रणवं देवि तारादौ सकलां जपेत् ॥ ५३ ॥
श्रीसीताराममन्त्रस्य मनोः सञ्जीवनो मनुः ।
विश्वमादौ परामन्ते जपेत् पार्वति मान्त्रिकः ॥ ५४ ॥
जनार्दनमनोरेष मन्त्रः सञ्जीवनः स्मृतः ।
परामादौ परामन्ते सतारां साधको जपेत् ॥ ५५ ॥
विश्वक्सेनमनोरेष स्यात् सञ्जीवनको मनुः ।
रमामादौ रमामन्ते जपादौ सञ्जपेत् सुधीः ॥ ५६ ॥
श्रीलक्ष्मीवासुदेवस्य मनोः सञ्जीवनो मनुः ।
इतीदं मन्त्रसर्वस्वं रहस्यं सारमद्भुतम् ।
तव भक्त्या मयाख्यातं गोपनीयं स्वयोनिवत् ॥ ५७ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये मन्त्रसञ्जीवन-
विधिनिरूपणं षष्ठः पटलः ॥ ६ ॥

अथ

# सप्तमः पटलः ।

श्रीभैरव उवाच ।

अधुना कथयिष्यामि विद्यां शापहरीं शिवे ।
सर्वेषामेव मन्त्राणां कलौ निस्तेजसां शृणु ॥ १ ॥
या बाला भैरवी सैव सैव त्रिपुरसुन्दरी ।
त्रिपुरा बास्ति सा काली श्यामा सैव परा स्मृता ॥ २ ॥
तारं परां रमां बाले शिवशापं विमोचय ।
विमोचय हरं नीरं बालाशापहरी स्मृता ॥ ३ ॥
वाणी शरत् स्मरो रुद्रशापं मोचय मोचय ।
तुरगं ठद्वयं देवि भैरवीशापमोचनम् । ॥ ४ ॥
बालाबीजत्रयं कूटमाद्यं तारं परां रमाम् ।
सदाशिवस्य शापं च मोचय-द्वयमुद्धरेत् ॥ ५ ॥
शरत् कूटं पठेदन्ते विद्येयं शापहारिणी ।
श्यामा परमविद्येयं द्वाविंशत्यक्षरी परा ॥ ६ ॥
महाश्रीषोडशीविद्या सर्वदोषविवर्जिता ।
तथापि दुर्लभां विद्यां वक्ष्येऽहं शापहारिणीम् ॥ ७ ॥
द्वाविंशत्यक्षरीदेव्या यथा मन्त्रो हि सिद्ध्यति ।
कालीं कूर्चं परं नाम दक्षिणे कालिके तथा ॥ ८ ॥
वसिष्ठशापं प्रोच्चार्य मोचय-द्वयमीश्वरि ।
कालीं कूर्चं परां नीरमेषा स्याच्छापहारिणी ॥ ९ ॥
कालीं भीमां तटं भद्रकालि भीमां शिवस्य हि ।

शापं मोचय-युग्मापो विद्येयं शापहारिणी ॥ १० ॥
तारं परां च मातङ्गि कालशापं विमोचय ।
तुरगं नीरमन्ते तु विद्येयं शापहारिणी ॥ ११ ॥
मायां भैरवशापं च मोचय-द्वयमश्वले ।
मायां स्याद्भुवनेश्वर्या विद्येयं शापहारिणी ॥ १२ ॥
प्रणवं कामिनीं मायां ब्रह्मशापं विमोचय ।
विमोचयापस्ताराया विद्येयं शापहारिणी ॥ १३ ॥
वासनां कमलां मायां रुद्रशापं विमोचय ।
मोचयापो मयाख्यातं छिन्नमस्ताङ्कमोचनम् ॥ १४ ॥
वाग्भवं कामराजं च शिवशापं विमोचय ।
परां नीरमियं विद्या सुमुख्याः शापहारिणी ॥ १५ ॥
प्रणवं वासनां तारं सरस्वति वदेत् ततः ।
दुर्वासःशापं मुञ्चाशु ठद्वयं शापमोचनम् ॥ १६ ॥
तारं परामन्नपूर्णे शिवशापं विमोचय ।
कूर्चं हरं वनं देवि विद्येयं शापहारिणी ॥ १७ ॥
तारं रमां महालक्ष्मि विष्णुशापं विमोचय ।
तुरगं नीरमीशानि विद्येयं शापहारिणी ॥ १८ ॥
तारं च सिन्धुरं देवि शारिके ब्रह्मलाञ्छनम् ।
मोचय-द्वयमापश्च विद्येयं शापहारिणी ॥ १९ ॥
तारं मायां शारदे च विष्णुशापं विमोचय ।
शक्तिर्नीरं महादेवि विद्येयं शापहारिणी ॥ २० ॥
तारं वाणीं शरत्काममिन्द्राक्षि ब्रह्मलाञ्छनम् ।
मोचय-द्वयमापश्च विद्येयं शापहारिणी ॥ २१ ॥
तारं मृत्स्नां च बगले रुद्रशापं विमोचय ।
तारं मृदं वनं देवि विद्येयं शापहारिणी ॥ २२ ॥

तारं तारां च तुर्ये तु शिवशापं विमोचय ।
तारकं ठद्वयं देवि विधेयं शापहारिणी ॥ २३ ॥
तारं वह्निं शरद्राज्ञि ब्रह्मशापं विमोचय ।
विमोचय वनं देवि विधेयं शापहारिणी ॥ २४ ॥
तारं रमां परां ज्वालामुखि भैरवलाञ्छनम् ।
कूर्चं नीरं महादेवि विधेयं शापहारिणी ॥ २५ ॥
तारं परां रमां भीडे ध्रुवशापं विमोचय ।
मोचयापो महादेवि विधेयं शापहारिणी ॥ २६ ॥
तारं वाणीं च डिम्बं च कालरात्रि शिवस्य च ।
शापं मोचय नीरं च विधेयं शापहारिणी ॥ २७ ॥
तारं रमां रमां तारं रुद्रशापं विमोचय ।
कूर्चं हरं वनं देवि विधेयं शापहारिणी ॥ २८ ॥
तारं परां परां तारं वज्रयोगिनि प्रोद्धरेत् ।
शिवशापं मोचयापो विधेयं शापहारिणी ॥ २९ ॥
तारं रमां च वाराहि नारदाङ्कं विमोचय ।
मठं नीरं महादेवि विधेयं शापहारिणी ॥ ३० ॥
तारं रमां सिद्धलक्ष्मि सिद्धशापं विमोचय ।
वाणी शरत् स्मरो नीरं विधेयं शापहारिणी ॥ ३१ ॥
तारं व्योषं रमां काञ्चां कुलवागीश्वरि स्फुटम् ।
शिवशापं च मुञ्चापो विधेयं शापहारिणी ॥ ३२ ॥
तारं मायां च पद्मं च पद्मावति हरेस्तथा ।
शापं मुञ्चयुगं नीरं विधेयं शापहारिणी ॥ ३३ ॥
तारं मायां कुब्जिके च जह्नुशापं विमोचय ।
नीरमन्ते महादेवि विधेयं शापहारिणी ॥ ३४ ॥
तारं शिवं गौरि भृगोः शापं मोचय मोचय ।

नीरमन्ते मनोर्देवि विद्येयं शापहारिणी ॥ ३५ ॥
*(तारं खेचरि रुद्रस्य शापं मोचय मोचय ।
परां नीरं महादेवि विद्येयं शापहारिणी ॥ ३६ ॥)
तारं वाणी च नीलेति सरस्वति हरिच्छलम् ।
मोचयापो मनोरन्ते विद्येयं शापहारिणी ॥ ३७ ॥
तारं शक्तिः पराशक्ते शिवशापं विमोचय ।
विमोचय शरन्नीरं विद्येयं शापहारिणी ॥ ३८ ॥
अधुना शैवमन्त्राणां कीलितानां महेश्वरि ।
सर्वसाधारणीं विद्यां वक्ष्येऽहं शापहारिणीम् ॥ ३९ ॥
निष्कीलितानां मन्त्राणां विद्यां शापहरीं शृणु ।
यस्या उच्चारमात्रेण दुष्टमन्त्रोऽपि सिध्यति ॥ ४० ॥
तारं परां रमां वाणीं कामं शक्तिं सदाशिव ।
शिवशापं मोचयापो विद्येयं शापहारिणी ॥ ४१ ॥
तारं हृज्ञं शरद्रुद्रशापं मोचय मोचय ।
शरद्हृज्ञं च तारं च विद्येयं शापहारिणी ॥ ४२ ॥
तारं ततोऽमृतेशान शिवशापं विमोचय ।
युग्ममन्ते तथा तारं विद्येयं शापहारिणी ॥ ५३ ॥
तारं परां च वटुक ब्रह्मशापं विमोचय ।
द्वयं च देवीप्रणवो विद्येयं शापहारिणी ॥ ४४ ॥
तारं च नीलकण्ठेति दुर्वासाङ्कं विमोचय ।
मोचयापो महादेवि विद्येयं शापहारिणी ॥ ४५ ॥
तारं छविः परा तारं सद्योजात रविच्छलम् ।
मोचय ठद्वयं देवि विद्येयं शापहारिणी ॥ ४६ ॥
तारं शिवं गणेशान रुद्रशापं विमोचय ।

---

* ख. पुस्तके अधिकः ।

वनमन्ते महादेवि विद्येयं शापहारिणी ॥ ४७ ॥
तारमाद्यस्वरहविर्देव स्वच्छन्दनायक ।
शिवशापं मोचयापो विद्येयं शापहारिणी ॥ ४८ ॥
तारं कूर्चं परां देवि महाकाल विधिच्छलम् ।
मोचय-द्वयमापश्च विद्येयं शापहारिणी ॥ ४९ ॥
वाग्भवं कामशक्तिश्च भैरवाङ्कं विमोचय ।
तारं परामाद्यबीजं विद्येयं शापहारिणी ॥ ५० ॥
अथ वैष्णवमन्त्राणां शृणु पार्वति सादरम् ।
विद्यां शापहरीं सद्यो मन्त्रसिद्धिर्भवेद् यतः ॥ ५१ ॥
तारं रमां च लक्ष्मीति नारायण शिवच्छलम् ।
मोचय-द्वयमापश्च विद्येयं शापहारिणी ॥ ५२ ॥
तारं शक्तिः परा तारं राधाकृष्ण विधिच्छलम् ।
मोचयापो महादेवि विद्येयं शापहारिणी ॥ ५३ ॥
तारं परां रमां विष्णो रुद्रशापं विमोचय ।
तारं ठद्वयमन्ते च विद्येयं शापहारिणी ॥ ५४ ॥
तारं परां नृबीजं च नरसिंह शिवच्छलम् ।
मोचय-द्वयमापश्च[1] विद्येयं शापहारिणी ॥ ५५ ॥
तारं रमां[2] च लक्ष्मीति वराह हरिलाञ्छनम् ।
मोचय-द्वयमापोऽन्ते विद्येयं शापहारिणी ॥ ५६ ॥
तारं कूर्चं भार्गवेति शुक्रशापं विमोचय ।
तुरगं ठद्वयं देवि विद्येयं शापहारिणी ॥ ६७ ॥
तारं रमां रामभद्र गुरुशापं विमोचय ।
हरं ठद्वयमन्ते च विद्येयं शापहारिणी ॥ ५८ ॥
*(तारं रमा रमा तारं जनार्दन विधिच्छलम् ।

---

१ 'पोऽन्ते' ख. पाठः । २ 'परां' ख. पाठः । * ख. पुस्तके अधिकः पाठः ।

मोचयापो महादेवि विद्येयं शापहारिणी ॥ ५९ ॥)
तारं परां रमां तारं विश्वक्सेन मनुच्छलम् ।
मोचय-द्वयमापश्च विद्येयं शापहारिणी ॥ ६० ॥
तारं रमा रमा लक्ष्मीवासुदेव शिवच्छलम् ।
मोचय-द्वयमापश्च विद्येयं शापहारिणी ॥ ६१ ॥
इतीदं परमं तत्त्वं रहस्यं सारमुत्तमम् ।
गुह्यं सर्वस्वमीशानि गोपनीयं विशेषतः ॥ ६२ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये शापहरीविद्योद्धार-
निरूपणं सप्तमः पटलः ॥ ७ ॥

अथ

## अष्टमः पटलः

श्रीभैरव उवाच ।

अधुना कथयिष्यामि जपसाधनमुत्तमम् ।
येन साधितमात्रेण मन्त्रसिद्धिः प्रजायते ॥ १ ॥
गुरुपादप्रसादेन श्रीविद्या यदि लभ्यते ।
पुरस्क्रियाजपेनैव चेत्तां साधयितुं क्षमः ॥ २ ॥
वाग्मी धनी जयी शूर इह भोगी स भूपतिः ।
परत्र साधको देवि भवेद् भैरवसन्निभः ॥ ३ ॥
सुदिने शुभनक्षत्रे प्रातःकृत्यं विधाय च ।

स्वगृहं स्वगुरुं नीत्वा नत्वा पादौ महेश्वरि ॥ ४ ॥
प्रक्षाल्य पूजायतने श्रीचक्रं पूजयेच्छिवे ।
सिन्दूरेण लिखेत् त्र्यस्रं गुरुं तत्र निवेशयेत् ॥ ५ ॥
तारं शिवत्रयं देवि गुरवे पदमुच्चरेत् ।
विश्वमन्ते महादेवि गुरुमन्त्रोऽयमुत्तमः ॥ ६ ॥
अनेन मूलमन्त्रेण गुरुं संपूजयेत् सुधीः ।
मातृकाभिः समं देवि यथास्थानेषु पार्वति ॥ ७ ॥
गन्धाक्षतप्रसूनाद्यैर्द्रव्यैर्देवि शुभाम्बरैः ।
गुरुं सन्तोषयेत् तत्र दक्षिणाभिः कुलामृतैः ॥ ८ ॥
तदाज्ञां शिरसादाय जपाय साधकोत्तमः ।
रवौ प्रातर्महादेवि गुरुं नत्वा च साधकः ॥ ९ ॥
प्राङ्मुखः प्रणतो भूत्वा जपेदष्टोत्तरं शतम् ।
शिवशक्त्योः पृथग् देवि जपं संपाद्य साधकः ॥ १० ॥
षडङ्गं मूलमन्त्रस्य दशांशेन जपेत् ततः ।
ततो देवि जपेन्मन्त्री छन्दोमुनिमनुं ततः ॥ ११ ॥
ततो देवि जयी जप्त्वा होमं कुर्याद् दशांशतः ।
तर्पयित्वा दशांशेन मार्जयेत् तद्दशांशतः ॥ १२ ॥
भोजयित्वा दशांशेन जपसिद्धिर्भवेत् ततः ।
जपात् सिद्धिर्जपात् सिद्धिर्जपात् सिद्धिर्महेश्वरि ॥ १३ ॥
न स्तवान्नार्चनाद् ध्यानात् सिद्धिर्भवति तादृशी ।
पारायणजपेनास्ति यादृशी मन्त्रिणां शिवे ॥ १४ ॥

श्रीदेव्युवाच ।

भगवन् परमेशान साधकानां हितेच्छया ।
पारायणजपं ब्रूहि यद्यहं तव वल्लभा ॥ १५ ॥

श्रीभैरव उवाच ।

देवि पारायणं वक्ष्ये विद्याजपफलाप्तये ।
येन सिद्धियुतो मन्त्री भवेद्भैरवसन्निभः ॥ १६ ॥
असंख्याताश्च विख्याताः पारायणजपाः प्रिये ।
तेषां तत्त्वं परं वक्ष्ये येन ब्रह्ममयो भवेत् ॥ १७ ॥
पारायणस्तु स जपः सम्यग् यद् ब्रह्मचिन्तनम् ।
तस्यैव सगुणस्यात्र चिन्तनं घटिकाजपः ॥ १८ ॥
द्विविधोऽयं जपो देवि सगुणो निर्गुणस्तथा ।
सिद्धः साध्य इति स्मृत्वा जपेत् पारायणं मनुम् ॥ १९ ॥
कलेर्युगारम्भदिने दिनेशो हृल्लेखबीजेऽभ्युदितो बभूव ।
तदादि नित्यं घटिकैकमानात् प्रत्यक्षरं याति दिने दिनेऽर्कः ।२०।
नवार्णमन्त्रावलिमेति सूर्यो मध्यन्दिने सायमथ प्रभाते ।
त्रिभागमाद्यन्तरयोस्तथान्ते विधाय मन्त्रस्य जपेन्मुमुक्षुः ॥२१॥
एकादिपञ्चाशतिवर्णपङ्क्त्या संयोज्य मन्त्रस्य नवाक्षराणि ।
घटीप्रमाणाः कुलमातृकाया भवन्ति वर्णा मनुराजसिद्ध्यै ॥२२॥
आई-विभूषितां कृत्वा मातृकां हंसभूषिताम् ।
मूलविद्यां जपेन्मन्त्री शिवशक्तिमयीं शिवे ॥ २३ ॥
पञ्चनादान् परित्यज्य यो जपेत् षोडशाक्षरीम् ।
पञ्चषष्ट्यक्षरीमूलान् पञ्चनादात्मको भवेत् ॥ २४ ॥
आदितो देवि विद्यादौ विद्यामध्ये तदग्रतः ।
विद्यान्तेऽपि त्यजेद्विद्यां शिवरूपां शिवो भवेत् ॥ २५ ॥
शहके विश्वरूपोऽपि सूर्योऽकार तदोदितः ।
तदा प्रभृति लोकेऽस्मिन् मातृकासु चरेद्रविः ॥ २६ ॥
वासनावशतस्त्र्यक्षो वह्नितेजोमयो भवेत् ।
लक्ष्मीं प्राप्य शिवो मन्त्री सौभाग्यान्तां यथाक्रमम् ॥ २७ ॥
पयोदत्रियया विद्यामाई-पल्लवितां क्रमात् ।

हंसान्तां सञ्जपेद् देवि मन्त्री मातृकया सदा ॥ २८ ॥
अयं पारायणो नाम जपः सिद्धिप्रदः कलौ ।
महाश्रीषोडशीविद्यामष्टभूतिमयीं पराम् ॥ २९ ॥
वेदादिभूतां प्रजपेन्मातृकाभिः कुलाश्रयः ।
इदं रहस्यं परमं पारायणजपात्मकम् ।
ब्रह्मविद्यालयोत्थानं नाख्येयं ब्रह्मवादिभिः ॥ ३० ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये पारायणजपविधि-
निरूपणमष्टमः पटलः ॥ ८ ॥

अथ

# नवमः पटलः ।

श्रीभैरव उवाच ।

अथाहं सर्वमन्त्राणां वक्ष्ये संपुटसङ्क्रमम् ।
यं विज्ञाय भवेद् देवि सर्वसौख्यमयः सुधीः ॥ १ ॥
बालायाः शक्तिबीजं तु दद्यादादौ महेश्वरि ।
बालात्रिपुरसुन्दर्याः संपुटाख्योऽस्त्ययं मनुः ॥ २ ॥
मायात्रयं पठेदन्ते त्रिकूटाया महेश्वरि ।
साध्यस्त्रिपुरभैरव्याः संपुटाख्योऽस्त्ययं मनुः ॥ ३ ॥
शक्त्यादिकूटं मन्त्रस्य दद्यादादौ जपेन्मनुम् ।
महात्रिपुरसुन्दर्या मन्त्रोऽयं संपुटाभिधः ॥ ४ ॥
श्यामास्ति दक्षिणाकाली द्वाविंशत्यक्षरी शिवे ।

सर्वदोषविनिर्मुक्ता पुरापि कथितं मया ॥ ५ ॥
भद्रिकामञ्चले दत्त्वा जपेन्मूलं महेश्वरि ।
भद्रकाल्या अयं मन्त्रः संपुटाख्योऽस्ति सुन्दरि' ॥ ६ ॥
तारमन्ते जपेद्* देवि त्रिवारं प्रोच्चरेत् सुधीः ।
राजमातङ्गिनीदेव्याः संपुटाख्योऽस्त्ययं मनुः ॥ ७ ॥
विश्वान्ते च पराबीजं दशवारं पठेच्छिवे ।
मन्त्रोऽयं भुवनेश्वर्याः संपुटाख्यः सुसिद्धिदः ॥ ८ ॥
तुरगं मूलमन्त्रादौ जपेत् पार्वति साधकः ।
उग्रतारामनोरेष मन्त्रः श्रीसंपुटाभिधः ॥ ९ ॥
मायाद्वयं जपेदन्ते साधकः साधकेश्वरि ।
मन्त्रोऽयं छिन्नमस्तायाः संपुटाख्योऽतिदुर्लभः ॥ १० ॥
पद्मत्रयं पठेदादौ मायामन्ते महेश्वरि ।
देव्या उच्छिष्टमातङ्ग्याः संपुटाख्योऽस्त्ययं मनुः ॥ ११ ॥
वाग्भवं च मनोरन्ते पठेत् साधकसत्तमः ।
सरस्वत्या मनोर्देवि मन्त्रोऽयं संपुटाभिधः ॥ १२ ॥
तारं कामं मनोरन्ते दद्यात् पार्वति साधकः ।
अन्नपूर्णामनोरेष मनुः स्यात् संपुटाभिधः ॥ १३ ॥
वाग्भवं प्रथमं दद्यादन्ते दद्याच्च मन्मथम् ।
देवताया महालक्ष्म्याः संपुटाख्योऽस्त्ययं मनुः ॥ १४ ॥
सिन्धुरं साधको दद्यान्मनोरन्ते महेश्वरि ।
शारिकामूलमन्त्रस्य मन्त्रः संपुटकाभिधः ॥ १५ ॥
तारं कामं मनोरन्ते पठेत् साधकसत्तमः ।
शारदायाः सरस्वत्या मन्त्रोऽयं संपुटाभिधः ॥ १६ ॥
शक्तिमादौ पठेन्मन्त्री वाणीमन्ते महेश्वरि ।

---

' पार्वति ' ङ. पाठः ।  * ' जपे ' इति स्यात् ।

इन्द्राख्या वज्रहस्ताया मन्त्रोऽयं संपुटाभिधः ॥ १७ ॥
रसनां मृत्तिकाबीजं मनोरन्ते पठेत् सुधीः ।
श्रीदेव्या बगलामुख्या मन्त्रः संपुटकाभिधः ॥ १८ ॥
तारं दद्यान्मनोरन्ते जपेत् पार्वति साधकः ।
महातुर्या मनोरेष संपुटाख्योऽस्ति सिद्धिदः ॥ १९ ॥
वह्निं वार्णीं पठेदन्ते जपेत् पार्वति साधकः ।
महाराज्ञ्या मनोरेष मनुः स्यात् संपुटाभिधः ॥ २० ॥
कूर्चमादौ हरं चान्ते जपेन्मूलं महेश्वरि ।
ज्वालामुख्या अयं मन्त्रः संपुटाख्योऽस्ति पार्वति ॥ २१ ॥
तारं शक्तिं मनोरन्ते ठद्वयं प्रथमं पठेत् ।
संपुटाख्योऽस्त्ययं मन्त्रो भीडाया देवदुर्लभः ॥ २२ ॥
कुरु-बीजं जपेदादौ विश्वान्ते प्रणवं पठेत् ।
कालरात्रिमनोरेष मन्त्रः संपुटकारणम् ॥ २३ ॥
रमां तारं पठेदन्ते कूर्चमादौ महेश्वरि ।
भवानीमूलमन्त्रस्य संपुटोऽयं मयेरितः ॥ २४ ॥
तारादौ सकलां दद्यादन्ते तारं जपेत् प्रिये ।
संपुटो वर्णितो देवि श्रीवज्रयोगिनीमनोः ॥ २५ ॥
मठबीजं जपेदादौ मन्त्रान्ते पङ्कजं जपेत् ।
मन्त्रोऽयं धूम्रवाराह्याः संपुटाख्यो मयेरितः ॥ २६ ॥
कामराजं जपेदादौ विश्वान्ते वाग्भवं जपेत् ।
सिद्धलक्ष्मीमनोरेष संपुटो वर्णितो मया ॥ २७ ॥
स्पृहामादौ जपेद् देवि वनान्ते पङ्कजं जपेत् ।
मन्त्रोऽयं संपुटाख्योऽस्ति कुलवागीश्वरीमनोः ॥ २८ ॥
कामराजं जपेदादौ वनान्ते सकलां जपेत् ।
पद्मावतीमनोरेष मन्त्रः स्यात् संपुटाभिधः ॥ २९ ॥

वागुरां प्रणवादौ च वनान्ते पङ्कजं जपेत् ।
कुब्जिकामूलमन्त्रस्य मन्त्रोऽयं संपुटाभिधः ॥ ३० ॥
मठमादौ महादेवि ठद्वयान्ते शिवं जपेत् ।
गौरीमन्त्रस्य मन्त्रोऽयं संपुटो वर्णितो मया ॥ ३१ ॥
विश्वान्ते सञ्जपेत् कूटं कूटादौ शरदं जपेत् ।
खेचरीमूलमन्त्रस्य मन्त्रोऽयं संपुटाभिधः ॥ ३२ ॥
कूर्चं जपेन्मनोरादौ वनान्ते तुरगं जपेत् ।
मनोर्नीलसरस्वत्याः संपुटो वर्णितो मया ॥ ३३ ॥
वाग्भवं प्रथमं देवि प्रणवं ठद्वयाञ्चले ।
पराशक्तिमनोरेष मन्त्रः संपुटकारणम् ॥ ३४ ॥
निष्कीलितानां मन्त्राणां शैवानां कुलपूजिते ।
सर्वसाधारणं वक्ष्ये संपुटं सुरपूजिते ॥ ३५ ॥
तारद्वयं जपेदादौ मध्ये नामाञ्चले पराम् ।
सर्वेषां शैवमन्त्राणां संपुटाख्योऽस्त्ययं मनुः ॥ ३६ ॥
तारं हृज्जं पठेन्मध्ये पालय-द्वयमादितः ।
मृत्युञ्जयमनोरेष संपुटो वर्णितो मया ॥ ३७ ॥
विश्वमादौ महादेवि शक्तिमन्ते जपेत् सुधीः ।
अमृतेश्वरमन्त्रस्य संपुटाख्योऽस्त्ययं मनुः ॥ ३८ ॥
कुरु-द्वयादौ प्रणवं परान्तेऽपि कुरु-द्वयम् ।
संपुटाख्यो मनुः प्रोक्तो वटुकस्य मया शिवे ॥ ३९ ॥
हरितं द्विः समुच्चार्य मध्ये नाम ततः पराम् ।
मन्त्रोऽयं नीलकण्ठस्य संपुटाख्यो मयेरितः ॥ ४० ॥
तारमन्ते परामादौ जपेत् साधकसत्तमः ।
सद्योजातस्य मन्त्रस्य मन्त्रोऽयं संपुटाभिधः ॥ ४१ ॥
पराद्वयं शिवान्ते च प्रणवान्ते शिवत्रयम् ।

महागणपतेरेष मन्त्रः संपुटकारकः ॥ ४२ ॥
विश्वबीजं जपेदादौ विश्वमन्ते जपेत् प्रिये ।
मन्त्रोऽस्त्यघोरदेवस्य वर्णितः संपुटाभिधः ॥ ४३ ॥
कूटमादौ महादेवि कूटान्ते वाग्भवं जपेत् ।
श्रीकामेश्वरमन्त्रस्य मन्त्रोऽयं संपुटाभिधः ॥ ४४ ॥
एतेषामपि मन्त्राणां शैवानां कुलनायिके ।
निष्कीलितो महाकालमन्त्रो दोषविवर्जितः ॥ ४५ ॥
अधुना वैष्णवानां ते मन्त्राणां परमेश्वरि ।
वक्ष्ये संपुटमन्त्रांश्च साधकानां हितेच्छया ॥ ४६ ॥
नामान्ते कमलां देवि विश्वान्ते प्रणवं जपेत् ।
लक्ष्मीनारायणमनोर्मन्त्रोऽयं संपुटाभिधः ॥ ४७ ॥
हरमादौ महादेवि ठद्वयान्ते रमां जपेत् ।
श्रीराधाकृष्णमन्त्रस्य मन्त्रोऽयं संपुटाभिधः ॥ ४८ ॥
तारमन्ते जपेदादौ विश्वं विश्वसमर्चिते ।
श्रीविष्णुमूलमन्त्रस्य[1] मन्त्रोऽयं संपुटाभिधः ॥ ४९ ॥
स्मरमादौ जपेद् देवि रमाबीजं तथाञ्चले ।
लक्ष्मीनृसिंहमन्त्रस्य मन्त्रोऽयं संपुटाभिधः ॥ ५० ॥
विश्वमादौ मनोर्देवि नाम्नोऽग्रे सकलां जपेत् ।
लक्ष्मीवराहमन्त्रस्य मन्त्रोऽयं संपुटाभिधः ॥ ५१ ॥
सरोजं प्रथमं देवि वनान्ते च रमां जपेत् ।
जामदग्न्यमनोरेष मन्त्रः संपुटकारकः ॥ ५२ ॥
तारमन्ते वनं चादौ जपेत् साधकसत्तमः ।
श्रीसीतराममन्त्रस्य मन्त्रोऽयं संपुटाभिधः ॥ ५३ ॥
विश्वान्ते नाम देवेशि मायुगं प्रथमं जपेत् ।

---

१ 'विष्णोः' क. ख. पाठः ।

श्रीजनार्दनमन्त्रस्य मन्त्रोऽयं संपुटाभिधः ॥ ५४ ॥
परामादौ परामन्ते जपेत् साधकनायकः ।
विश्वक्सेनमनोरेष मन्त्रः संपुटकारकः ॥ ५५ ॥
वाणीमादौ जपेद् देवि लक्ष्मीमन्ते महेश्वरि ।
श्रीवासुदेवमन्त्रस्य मन्त्रोऽयं संपुटाभिधः ॥ ५६ ॥
इतीदं मन्त्रसर्वस्वं रहस्यं तत्त्वमुत्तमम् ।
तव स्नेहेन निर्णीतं गोपनीयं मुमुक्षुभिः ॥ ५७ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये संपुटवि-
धिनिरूपणं नवमः पटलः ॥ ९ ॥

अथ

## दशमः पटलः

श्रीभैरव उवाच ।

अधुना देवि वक्ष्येऽहं पुरश्चरणसाधनम् ।
येन साधितमात्रेण मन्त्रः सिद्धिप्रदो भवेत् ॥ १ ॥
जीवहीनो यथा देही[1] सर्वकर्मसु न क्षमः ।
पुरश्चरणहीनो हि न मन्त्रः सिद्धिदायकः ॥ २ ॥
वर्णलक्षं जपेन्मन्त्रं तदर्धं वा महेश्वरि ।
एकलक्षावधिं कुर्यान्नातो न्यूनं कदाचन ॥ ३ ॥
वटेऽरण्ये श्मशाने च शून्यागारे चतुष्पथे ।

---

१ 'देहः' ख. पाठः ।

अर्धरात्रेऽपि मध्याह्ने पुरश्चरणमारभेत् ॥ ४ ॥
सुदिने शुभनक्षत्रे सुमुहूर्ते महेश्वरि ।
स्वगुरुं पूजयित्वादौ पुरश्चर्यां समारभेत् ॥ ५ ॥
गुरोराज्ञां समादाय स्नात्वा वेदीं चरेत् सुधीः ।
चतुष्कोणामीशदिशि स्वहस्तपरिविस्तृताम् ॥ ६ ॥
तत्र लिख्वा महादेवि सिन्दूरेणाष्टगन्धकैः ।
लिखेद् बिन्दुत्र्यस्रमादौ षडश्रं वृत्तमण्डलम् ॥ ७ ॥
वसुपत्रं रवृत्ताढ्यं भूगेहेनोप[1]शोभितम् ।
पुरश्चर्यायन्त्रमेतद्गदितं गिरिजे मया ॥ ८ ॥
सर्वसाधारणं पूज्यं साधकैस्तत्त्वदर्शिभिः ।
इन्द्राग्नियमभांसाद–वरुणानिलवित्तदाः ॥ ९ ॥
सेश्वरा लरय(ट)क्षाभ्रयसे[2]हंबीजमण्डिताः ।
पूज्या सहेतयो देवि धराभवनमण्डले ॥ १० ॥
ब्राह्मी च वैष्णवी रौद्री कौमारी नारसिंहिका ।
वाराही चण्डिका देवि पूजनीयापराजिता ॥ ११ ॥
सभैरवा वसुदले वामावृत्त्या मुमुक्षुभिः ।
पार्वती कुब्जिका दुर्गा चामुण्डा नीलतारिणी ॥ १२ ॥
कात्यायनी पूजनीया षडश्रेषु महत्तरैः ।
गङ्गा च यमुना देवि पूज्या त्र्यश्रे सरस्वती ॥ १३ ॥
बिन्दौ पूज्या च सशिवा साधकैरिष्टदेवता ।
मूलमन्त्रेण गन्धार्घ्यपुष्पधूपादिदीपकैः ॥ १४ ॥
तत्र बिन्दौ न्यसेद्यन्त्रं स्वेष्टदेव्या महेश्वरि ।
वेदीविदिक्षु संस्थाप्य मन्त्री घटचतुष्टयम् ॥ १५ ॥
मूलेन साधको देवि यवान् संमन्त्र्य वापयेत् ।

---

१ 'गृहेणो' क. ख. पाठः । २ 'म' क. पाठः ।

वह्निनिर्ऋतिवातेशक्रमेणैवं समर्चयेत् ॥ १६ ॥
गणेशं भारतीं दुर्गां क्षेत्रपालं घटेषु च ।
स्वस्वमूलेन देवेशि तत्र पूजां तथाह्निकीम् ॥ १७ ॥
कुर्यात् तदग्रतो देवि पुरश्चरणमारभेत् ।
श्रीचक्रं पूजयित्वादौ ततः कुर्याज्जपं सुधीः ॥ १८ ॥
शान्तो दम्भं तथा लौल्यं त्यजेन्मन्त्रस्य सिद्धये ।
ब्रह्मचर्यधरो मन्त्री ध्यायन् देवीं वरप्रदाम् ॥ १६ ॥
जपेन्मूलं वशी लक्षं नियमेन समाहितः ।
हविष्याशी महादेवि ततः सिद्धमनुर्भवेत् ॥ २० ॥
जप्त्वा मन्त्री मन्त्रराजं हुत्वा देवि दशांशतः ।
तर्पयेत् तद्दशांशेन मार्जयेत् तद्दशांशतः ॥ २१ ॥
भोजयेत् तद्दशांशेन मन्त्रसिद्धिर्भवेद् ध्रुवम् ।
अथवान्यप्रकारेण पुरश्चरणमिष्यते ॥ २२ ॥
रात्रौ परस्त्रियं बालां श्यामां वा मदनातुराम् ।
आनीय पूजयेन्मन्त्री यथोक्तविधिना शिवे ॥ २३ ॥
नग्नो मुक्तकचो धीरो मधुपानपरायणः ।
शक्तिवक्षःसमाश्लिष्टो जपेन्मूलं यथाविधि ॥ २४ ॥
लक्षमेकं दशांशेन संस्कृतं[1] होमतर्पणैः ।
मन्त्रसिद्धिर्भवेत् तस्य देवानामपि दुर्लभा ॥ २५ ॥
अथवान्यप्रकारेण पुरश्चरणमिष्यते ।
पुत्रजन्मोत्सवदिने सूतिकाकुलमन्दिरे ॥ २६ ॥
मान्त्रिको मूलमन्त्रं स्वं जपेद् दशदिनावधि ।
दशांशसंस्कृतं[2] मन्त्रं कुर्यात् सिद्धो भवेन्मनुः ॥ २७ ॥
अथवान्यप्रकारेण पुरश्चरणमिष्यते ।

---

१ 'संस्कृतः' ख. ग. पाठः । २ 'तः' ख. ग. पाठः ।

मृतकाशौचदिवसे प्रथमे साधको जपेत् ॥ २८ ॥
मनुं वशी दिने रात्रौ वीरो भूत्वा यथार्थतः ।
एकादशेऽहनि सुधीः कुर्यान्मन्त्रं तु संस्कृतम् ॥ २९ ॥
कर्मणा मनसा वाचा मन्त्रः कल्पद्रुमो भवेत् ।
अथवान्यप्रकारेण पुरश्चरणमिष्यते ॥ ३० ॥
सूर्योदयात् समारभ्य यावत् सूर्योदयान्तरम् ।
तावज्जप्त्वा निरातङ्को मन्त्रः कल्पद्रुमो भवेत् ॥ ३१ ॥
अथवान्यप्रकारेण पुरश्चरणमिष्यते ।
सूर्योपरागवेलायां जपेन्मन्त्रं महेश्वरि ॥ ३२ ॥
जप्त्वा होमादिकं कृत्वा मन्त्रसिद्धिर्भवेद् ध्रुवम् ।
अथवान्यप्रकारेण पुरश्चरणमिष्यते ॥ ३३ ॥
चन्द्रोपरागे देवेशि जपेन्मूलं यथाविधि ।
दशांशसंस्कृतो मन्त्रो भवेच्चिन्तामणिः क्षणात् ॥ ३४ ॥
यस्य नास्ति जपे शक्तिः पञ्चरत्नेश्वरीं जपेत् ।
वर्णलक्षपुरश्चर्याफलमाप्नोति साधकः ॥ ३५ ॥
इदं तत्त्वं हि मन्त्राणां सारात् सारं परात् परम् ।
अवाच्यं गुह्यमीशानि गोपनीयं मुमुक्षुभिः ॥ ३६ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये पुरश्चर्या-
विधिनिरूपणं दशमः पटलः ॥ १० ॥

अथ

# एकादशः पटलः ।

—=-:*०*:-=—

श्रीभैरव उवाच ।

अधुना देवि वक्ष्येऽहं पुरश्चर्याफलं परम् ।
यं लब्ध्वा साधको देवि मर्त्योऽप्यमरतां लभेत् ॥ १ ॥

श्रीदेव्युवाच ।

भगवंस्तत्त्ववेत्ता त्वं सकलागमपारगः ।
पुरश्चरणहोमस्य वद मेऽद्य विधिं विभो ॥ २ ॥

श्रीभैरव उवाच ।

जप्त्वा मनुं लक्षसंख्यं साधको मन्त्रसाधकः ।
गत्वा रहःस्थलं देवि होमं कुर्याद् दशांशतः ॥ ३ ॥
सुदिने शुभनक्षत्रे साधको भैरवार्चने ।
गृहीत्वा होमसंभारं व्रजेत् प्रयतमानसः ॥ ४ ॥
तत्रैकतः श्मशानं तु धृत्वा संमुखपृष्ठयोः ।
ऐशान्यां दिशि देवेशि लिखेच्छ्रीचक्रमुत्तमम् ॥ ५ ॥
तत्समभ्यर्च्य विधिना श्रीचक्रं मूलविद्यया ।
ततो मन्त्रं जपेत् सिद्धमष्टोत्तरशतावधि ॥ ६ ॥
पूर्वस्यां दिशि सद्यत्नात् खनेत् कुण्डं त्रिकोणकम् ।
हस्तैकविस्तृतं चाधो हस्तैकपरिमाणतः ॥ ७ ॥
कुण्डेऽस्मिन् त्रिलिखेद्यन्त्रं त्र्यश्रं बिन्दुविराजितम् ।
षट्कोणमष्टपत्रं च त्रिवृत्तं भूगृहाङ्कितम् ॥ ८ ॥
ततः पूजां चरेद् देवि कुण्डचक्रस्य पार्वति ।
यथोक्तविधिना येन साधको दीक्षितो भवेत् ॥ ९ ॥

गणेशधर्मवरुणाः कुबेरसहितास्तथा ।
चतुर्द्वारेषु संपूज्याश्चत्वारो द्वारपालकाः ॥ १० ॥
माया च मोहिनी मत्ता माधवी वह्निवल्लभा ।
वर्तुली[1] वीरसूर्वाम्या पूज्या अष्टदलस्थिताः ॥ ११ ॥
अम्बालिकाम्बा बगला च्छिन्नशीर्षाम्बिका भगा ।
षट्कोणमध्यगाः पूज्याः कुण्डचक्रे महेश्वरि ॥ १२ ॥
वह्निं वैश्वानरं चाग्निं त्रिकोणे पूजयेच्छिवे ।
स्वाहाभगवतीं बिन्दौ जातवेदसमर्चयेत् ॥ १३ ॥
अग्निं मूलेन देवेशि वह्नेर्दशकलास्ततः ।
तारं वह्निः शिवोऽब्धिश्च हृज्जं शक्तिर्महेश्वरि ॥ १४ ॥
अग्ने वैश्वानरं ब्रूयाज्जटाभारेति संवदेत् ।
भास्वरेति त्रिनेत्रेति ज्वालामुख-पदं वदेत् ॥ १५ ॥
प्रज्वलेति युगं ब्रूयाज्जातवेदासि संवदेत् ।
ठद्वयं संवदेदन्ते मन्त्रोऽयं वह्निवल्लभः ॥ १६ ॥
अनेन मूलमन्त्रेण वह्निचक्रं प्रपूजयेत् ।
गन्धाक्षतप्रसूनैश्च धूपदीपादितर्पणैः ॥ १७ ॥
नैवेद्याचमनीयाद्यैस्ताम्बूलैश्च सुवासितैः ।
तत्र संपूज्य देवेशि श्रीचक्रं नवयोनिकम् ॥ १८ ॥
ततो दिग्भैरवान् भूतानर्चयेत् कुसुमैः परम् ।
ततो देवि प्रमथ्याग्निं कुण्डचक्रे कुलेश्वरि ॥ १९ ॥
बिन्दौ वह्निं समावाह्य मूलेनोज्ज्वालयेच्छिवे ।
अग्निं सन्दीप्य मूलेन प्रणमेद् वह्निमुद्रया ॥ २० ॥
मूलेनाहुतिभिर्वह्निं हुनेत् षोडशभिस्ततः ।
अष्टोत्तरशतावृत्त्या दद्यादाज्येन पार्वति ॥ २१ ॥

---

१ 'वार्ताली' ग. पाठः ।

आहुतीः पायसैर्देवि मृद्वीकागुरुपुष्पकैः ।
मत्स्यखण्डशर्कराचन्द्रैः कस्तूरीदृषदङ्कितैः ॥ २२ ॥
ततो जप्त्वा महाविद्यां साधकान् पूजयेच्छिवे ।
पञ्च वा नव वा देवि तथैकादश वा शिवे ॥ २३ ॥
कुलीनान् धार्मिकाञ्छुद्धान् दीक्षितान् वाप्यदीक्षितान् ।
दृढव्रताञ्छुभाचारान् देवीभक्तिरतांस्तथा ॥ २४ ॥
वैष्णवान् गिरिजे शैवान् गुरुभक्तिपरायणान् ।
तत्र संपूज्य विधिवज् ज्ञात्वा भैरवसन्निभान् ॥ २५ ॥
पाद्यार्घ्यमधुपर्काद्यैर्गन्धाक्षतसुपुष्पकैः ।
तान् संपूज्य महादेवि दशांशं होममाचरेत् ॥ २६ ॥

श्रीदेव्युवाच ।

भगवन् देवदेवेश तन्त्रज्ञ परमेश्वर ।
कुलसाधकपूजायां संशयं छेत्तुमर्हसि ॥ २७ ॥
तत्र पूजाविधौ नाथ सर्वे पूज्या द्विजोत्तमाः ।
अथवा क्षत्रिया वैश्याः शूद्रा वा वद विस्तरात् ॥ २८

श्रीभैरव उवाच ।

प्रवृत्ते भैरवे तन्त्रे सर्वे वर्णा द्विजोत्तमाः ।
निवृत्ते भैरवे तन्त्रे सर्वे वर्णाः पृथक् पृथक् ॥ २९ ॥
सर्वदा शिवचक्रेऽस्मिन् संप्रदायोऽयमीरितः ।
न पुरश्चरणार्चायां तत्र सर्वे द्विजोत्तमाः ॥ ३० ॥
एकस्तु क्षत्रियः पुण्यो दाता वैष्णवसत्तमः ।
दृढव्रतः शुभाचारः कुलीनः शिवपूजकः ॥ ३१ ॥
शाक्तः परमभक्तश्च कुलचक्रे निगद्यते ।
तत्र होमं च संपाद्य दद्यान्नैवेद्यमादरात् ॥ ३२ ॥
कुलचक्रगतान् देवि ब्राह्मणान् साधकोत्तमान् ।

पूजयेत् क्षत्रियो वीरो भक्तिश्रद्धासमन्वितः ॥ ३३ ॥
गन्धाक्षतसुपुष्पैश्च धूपदीपादिभिः शिवे ।
नैवेद्याचमनीयाद्यैर्भक्ष्यैर्भोज्यैश्च लेह्यकैः ॥ ३४ ॥
सन्तर्प्य साधकान् देवि परमानन्दसेवितः ।
साधकः क्षत्रियं वीरं दातारं वीरसेवकम् ॥ ३५ ॥
आशीर्भिर्वर्धयेद् देवि प्रणमेत् त्रिपुराम्बिकाम् ।
कुलचक्रगता वीराः कुलचक्रप्रपूजकाः ॥ ३६ ॥
सर्वे ते कुलदेव्यन्ते यान्ति शीघ्रं कुलालयम् ।
क्षत्रियोऽपि महादेवि कुलसङ्गान् कुलार्थवित् ॥ ३७ ॥
सर्वपापविनिर्मुक्तः सर्वसिद्धिसमन्वितः ।
इह लोके श्रियं प्राप्य भुक्त्वा भोगान् यथेप्सितान् ॥ ३८ ॥
परत्र परमेशानि मृतो देवीपदं व्रजेत् ।
एवं विधाय मन्त्रज्ञो होमं जपफलाप्तये ॥ ३९ ॥
पुरश्चर्याफलं देवि वर्णलक्षस्य सोऽश्नुते ।
वर्णलक्षजपस्यैवं फलमाप्नोति कौलिकः ॥ ४० ॥
सर्वे तत्र स्थिता नत्वा श्मशानस्थं च भैरवम् ।
संहारमुद्रया देवीं विसृज्य सशिवां शिवे ॥ ४१ ॥
सर्वे ते साधकश्रेष्ठा भवेयुः कुलभागिनः ।
इदं रहस्यं देवेशि भक्त्या तव मयोदितम् ।
अप्रकाश्यमदातव्यमित्याज्ञा पारमेश्वरी ॥ ४२ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये पुरश्चर्याहोम-
विधिनिरूपणमेकादशः पटलः ॥ ११ ॥

अथ

# द्वादशः पटलः ।

श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि गुह्यं सर्वस्वमुत्तमम् ।
श्रीचक्रनिर्णयं नाम पटलं देवदुर्लभम् ॥ १ ॥
देवीनां परमप्रीत्या यन्त्रोद्धारं ब्रवीम्यहम् ।
यस्य कस्य न वक्तव्यं गोपनीयं विशेषतः ॥ २ ॥
त्रयस्त्रिंशतिदेवानां कोटयः स्युर्महेश्वरि ।
देवीनां च तथा देवि त्रयस्त्रिंशतिकोटयः ॥ ३ ॥
तासां मध्ये प्रधानाः स्युस्त्रयस्त्रिंशतिदेवताः ।
पूर्वोक्ता या महादेवि तासां मन्त्रोत्तमाञ्छृणु ॥ ४ ॥
(१) अथ वक्ष्ये तव प्रीत्या बालायन्त्रं महेश्वरि ।
सर्वार्थसाधकं देवि सर्वाशापरिपूरकम् ॥ ५ ॥
बिन्दुस्त्रिकोणरसकोणकनागपत्र-
वृत्तत्रयाश्चितमहीसदनत्रयं च ।
बालादिचक्रमिदमार्तिहरं गिरीश-
ब्रह्मेन्द्रविष्णुनमितं गदितं मया ते ॥ ६ ॥
(२) अथो त्रिपुरभैरव्या यन्त्रोद्धारं ब्रवीम्यहम् ।
सकलागमसाराढ्यमापदुद्धारणक्षमम् ॥ ७ ॥
बिन्दुस्त्र्यश्रं नागकोणं दशारं
वृत्ताश्चितं वसुपत्रं कलारम् ।

---

१ 'यार्चित' क. ख. ग. पाठः । २ 'र्चितं' क. ख. पाठः ।

वृत्तत्रयं भूनिकेतत्रयं च
श्रीचक्रं ते वर्णितं भैरवीयम् ॥ ८ ॥

(३) अथो त्रिपुरसुन्दर्या वक्ष्ये श्रीचक्रनिर्णयम् ।
सर्वसंमोनं देवि सर्वसिद्धिप्रवर्तकम् ॥ ९ ॥

शून्यं मध्यगमग्निकोणसहितं दिग्दन्तिकोणाङ्कितं
विंशारं मनुमिश्रितं करिदलश्रीषोडशाराश्रितम् ।
सद्वृत्तत्रयसंयुतं च धरणीगेहाङ्कितं त्रैपुरं
भक्त्याभीष्टफलप्रदं कलियुगे श्रीचक्रमुद्द्योतते ॥ १० ॥

बिन्दुस्त्रिकोणवसुकोणदशारयुग्म-
मन्वश्रनागदलसङ्गतषोडशारम् ।
वृत्तत्रयं च धरणीसदनत्रयं च
श्रीचक्रमेतदुदितं परदेवतायाः ॥ ११ ॥

(४) अथाहं कालिकायास्ते यन्त्रोद्धारं ब्रवीम्यहम् ।
सर्वार्थसिद्धिदं लोके सर्वकामप्रपूरकम् ॥ १२ ॥

त्रिकोणस्थं शून्यं तदुपरि शरत्कोणसहितं
त्रिकोणं षट्कोणं भगवति च वृत्तं वसुदलम् ।
त्रिवृत्तं तद्बाह्ये क्षितिभुवनयुक्तं च जयता-
दिदं श्यामायन्त्रं मरणभयवर्गप्रमथनम् ॥ १३ ॥

(५) अथाहं भद्रकाल्यास्ते यन्त्रोद्धारं सुरप्रियम् ।
ब्रवीमि दयया देवि सर्वसारस्वतप्रदम् ॥ १४ ॥

मध्ये तुर्यवरं खमण्डलयुतं द्विःसप्तकाराङ्कितं
द्विस्तुर्यारयुगं चतुर्गुणचतुष्पत्रावलीशोभितम् ।
सद्वृत्तत्रयमण्डितं बहिरिलागेहत्रयोद्भासितं
जीयाद्यन्त्रमिदं यथेष्टफलदं [1]श्रीभद्रकालीप्रियम् ॥ १५ ॥

(६) अथ वक्ष्यामि मातङ्ग्या यन्त्रं तन्त्रविनिश्चितम् ।

---

१ "भैं" ख. ग पाठः ।

देवदेवि तव प्रीत्या नचान्यत्र प्रकाशयेत् ॥ १६ ॥

बिन्दुस्त्रिकोणं वसुकोणयुक्तं
वृत्तं ततो नागदलं त्रिवृत्तम् ।
भूमन्दिरं पार्वति वह्निरेखं
मातङ्गिनीयन्त्रमिदं प्रदिष्टम् ॥ १७ ॥

(७) अथाहं भुवनेश्वर्या यन्त्रोद्धारं ब्रवीमि ते ।
प्रीत्या भक्त्या महेशानि नचाख्येयं महात्मभिः ॥ १८ ॥

बिन्दुस्त्रिकोणं रसकोणसंयुतं
वृत्ताश्रितं[1] नागदलेन मण्डितम् ।
[2]कैलारवृत्तत्रयभूगृहाङ्कितं
श्रीचक्रमेतद् भुवनेश्वरीप्रियम् ॥ १९ ॥

(८) अथ वक्ष्यामि तारया यन्त्रोद्धारमनुत्तमम् ।
भोगमोक्षप्रदं देवि गोप्यं कुरु महेश्वरि ॥ २० ॥

बिन्दुस्त्रिकोणं च षडस्रयुक्तं
वृत्तं तथाष्टारमलं त्रिवृत्तम् ।
सभूपुरं चैकजटाविलास–
गेहं मया यन्त्रमिदं प्रदिष्टम् ॥ २१ ॥

(९) अथाहं छिन्नमस्ताया यन्त्रोद्धारमनुत्तमम् ।
प्रवक्ष्यामि तव प्रीत्या न वक्तव्यं मुमुक्षुभिः ॥ २२ ॥

बिन्दुस्त्रिकोणं च बहिस्त्रिकोणं
त्रिकोणमूर्ध्वं शुभवृत्तबिम्बम् ।
वस्वश्रयुक्तं धरणीगृहं स्यात्
श्रीचक्रमेतत् परदेवतायाः ॥ २३ ॥

(१०) अथ वक्ष्यामि ते देव्या यन्त्रोद्धारं महेश्वरि ।

---

१ 'चिंतं' क. ख.ग. पाठः । २ 'कराल' क. ख. ग. पाठः ।

सुमुख्याः सारसर्वस्वं न देयं ब्रह्मवादिभिः ॥ २४ ॥

बिन्दुं चानलकोणगं च विलिखेद् बाणाश्रकोणाङ्कितं
वृत्तं नागदलेन मण्डितमथो श्रीषोडशाराङ्कितम् ।
सद्वृत्तत्रयसंयुतं च धरणीगेहाङ्कितं पार्वति
श्रीचक्रं सुमुखीप्रियं विजयताद् भोगापवर्गप्रदम् ॥ २५ ॥

(११) अथ वक्ष्यामि तत्त्वं ते यन्त्रोद्धारं महेश्वरि ।
सरस्वत्याः कौलिकानां भुक्तिमुक्तिफलप्रदम् ॥ २६ ॥

त्रिकोणं सबिन्दुं ततः षट्ककोणं
सवृत्तं ततो नागपत्रं त्रिवृत्तम् ।
धरामन्दिरं वह्निरेखोज्ज्वलं ते
मयोक्तं हि सारस्वतं यन्त्रमेतत् ॥ २७ ॥

(१२) अथाहमन्नपूर्णाया यन्त्रराजं ब्रवीमि ते ।
सर्वसंमोहनं देवि सर्वभोगैकसाधनम् ॥ २८ ॥

त्रिकोणं रसारं त्रिकोणं त्रिकोणं
त्रिकोणं त्रिकोणं त्रिकोणं हि वृत्तम् ।
ततो नागपत्राश्रितं[1] चाग्निवृत्तं
धरामन्दिरं चान्नपूर्णेष्टचक्रम् ॥ २९ ॥

(१३) अथ वक्ष्ये शिवे यन्त्रं महालक्ष्म्याः परात् परम् ।
यमभ्यर्च्य मया प्राप्तं दुर्लभं परमं पदम् ॥ ३० ॥

खं वह्न्यारगतं च कारममलं वृत्तं बहिः शोभनं
बाह्ये नागदलं कलारविलसद्वृत्तत्रयोद्भासितम् ।
भूगेहत्रयशोभितं तव मया निर्णीतमेतत् परं
श्रीचक्रं[2] परमार्थदायि च महालक्ष्मीप्रियं सिद्धिदम् ॥ ३१ ॥

(१४) यन्त्रोद्धारं प्रवक्ष्यामि साधकानां शुभावहम् ।

---

१ 'चितं' क. ख. ग. पाठः । २ 'कराल' क. ख. ग. पाठः ।

शारिकाया महादेवि लीलालयलयाकुलम् ॥ ३२ ॥

खत्रिकोणवसुकोणसुवृत्तोद्-
द्योतनागदलवृत्तमण्डलम् ।
भूगृहं शिखिरवीन्दुभाश्रितं
यन्त्रमेतदुदितं शिलालयम् ॥ ३३ ॥

(१५) यन्त्रोद्धारं महादेवि शारदाया ब्रवीम्यहम् ।
सर्वार्थसाधकं चक्रं सर्वकामप्रपूरकम् ॥ ३४ ॥

मध्ये बिन्दुस्तद्बहिः स्यात् त्रिकोणं
षट्कोणं स्याद् वृत्तवस्वश्रयुक्तम् ।
वृत्ताकारं षोडशारं त्रिवृत्तं
भूगेहं स्याच्छारदायन्त्रमेतत् ॥ ३५ ॥

(१६) अथाहं ते प्रवक्ष्यामि यन्त्रोद्धारं सुदुर्लभम् ।
इन्द्राक्ष्यास्तत्त्वसर्वस्वं त्रिषु लोकेषु गोपितम् ॥ ३६ ॥

बिन्दुस्त्रिकोणजषडश्रषडस्त्रयुक्त-
षट्कोणवृत्तवसुपत्रकलाश्रमिश्रम् ।
भूगेहबिम्बमनलेनशशिप्रभाभ-
मिन्द्राक्षिणीप्रियतरं जयचक्रमेतत् ॥ ३७ ॥

(१७) अथ ते बगलामुख्या यन्त्रोद्धारं ब्रवीम्यहम् ।
सर्वसिद्धिप्रदं देवि गोपनीयं प्रयत्नतः ॥ ३८ ॥

बिन्दुस्त्रिकोणं च रसारवृत्त--
वस्वश्रवृत्ताश्रितषोडशारम् ।
वृत्तत्रयं भूसदनत्रयं च
श्रीचक्रमेतद् बगलामुखीयम् ॥ ३९ ॥

(१८) अथाहं ते महातुर्यायन्त्रोद्धारमनुत्तमम् ।
ब्रवीमि परमप्रीत्या सकलाभीष्टसाधनम् ॥ ४० ॥

बिन्दुस्त्रिकोणं नवयोनियुक्तं
वृत्ताश्रितं नागदलं त्रिवृत्तम् ।
धरागृहं वह्नितुटीभिरीड्यं
तुर्यालयं चक्रमिदं प्रदिष्टम् ॥ ४१ ॥

(१९) यन्त्रोद्धारं प्रवक्ष्यामि सर्वाशापरिपूरकम्[1] ।
सर्वार्थसाधकं चक्रं सर्वसंमोहनं तथा ॥ ४२ ॥
बिन्दुस्त्र्यश्रं षडश्रं च वृत्ताष्टदलमण्डितम् ।
वृत्तत्रयं धरासद्म राज्ञीश्रीचक्रमीरितम् ॥ ४३ ॥

(२०) अथ यन्त्रवरं वक्ष्ये ज्वालामुख्या महेश्वरि ।
सर्वतत्त्वैकनिलयं सर्ववाञ्छितदायकम् ॥ ४४ ॥
मध्ये शून्यं तदुपरि शरत्कोणमालिख्य देवि
तत्राधस्तात् त्रिकमथ बहिर्दिग्दलं वृत्तमेकम् ।
वस्वश्रं द्विः कदलजशरद्वृत्तभूगेहयुक्तं
ज्वालामुख्या जगति जयताच्चक्रमेतन्महेशि ॥ ४५ ॥

(२१) अथ वक्ष्यामि देवेशि भीडायन्त्रमनुत्तमम्[2] ।
सर्वागमरहस्याढ्यं सर्वसारस्वतप्रदम् ॥ ४६ ॥
बिन्दुस्त्र्यश्रं काश्रमिश्रं सुवृत्तं
वस्वश्रं स्यात् तद्बहिः षोडशारम् ।
वृत्तत्रयं भूमिगेहत्रयाढ्यं
भीडायन्त्रं सर्वसिद्धिप्रदं स्यात् ॥ ४७ ॥

(२२) अथ वक्ष्यामि देवेशि कालरात्र्या अनुत्तमम् ।
यन्त्रोद्धारं परानन्दसाधनैकरसायनम् ॥ ४८ ॥
बिन्दुस्त्रिकोणरसकोणसुवृत्तनाग-
पत्रं कलारविलसद्दहनोरुवृत्तम् ।

---

१ 'महाराज्ञ्या महेश्वरि' ग. पाठः ।　२ 'भेडा' घ. पाठः ।

भूमन्दिरत्रयमिदं गिरिपुत्रि यन्त्रं
श्रीकालरात्रिनिलयं परमार्थदं स्यात् ॥ ४९ ॥

(२३) अथाहं ते प्रवक्ष्यामि भवान्या यन्त्रमुत्तमम् ।
मूलमन्त्ररहस्याढ्यं सर्वसिद्धिप्रदायकम् ॥ ५० ॥
बिन्दुस्त्रिकोणं च षडश्रयुक्तं
वृत्तं च नागारकलादलाढ्यम् ।
वृत्तत्रयं भूसदनत्रयं स्यात्
श्रीचक्रमानन्दपदं भवान्याः ॥ ५१ ॥

(२४) अथ वक्ष्ये महादेवि यन्त्रराजं सुदुर्लभम् ।
श्रीवज्रयोगिनीदेव्याः सर्वसौख्यप्रवर्धनम् ॥ ५२ ॥
बिन्दुस्त्रिकोणं च बहिः षडश्रं
वृत्तैकवस्वश्र–रवृत्तयुक्तम् ।
धरागृहं यन्त्रमिदं महेशि
श्रीवज्रशब्दाङ्कितयोगिनीयम् ॥ ५३ ॥

(२५) अथ वक्ष्यामि वाराह्या यन्त्रोद्धारमनुत्तमम् ।
सर्वमङ्गलमाङ्गल्यं साधकानां शुभावहम् ॥ ५४ ॥
त्रिकोणं सबिन्दुं पुनः स्यात् त्रिकोणं
ततः सप्तवारं त्रिकोणं प्रकुर्यात् ।
गजाश्रं कलारं हि वृत्तत्रयाङ्कं
धरासद्म यन्त्रं वराहेश्वरीयम् ॥ ५५ ॥

(२६) अथ वक्ष्ये महादेवि[1] यन्त्रोद्धारं सुदुर्लभम् ।
सर्ववैरिप्रशमनं सर्ववाञ्छितपूरकम् ॥ ५६ ॥
बिन्दुस्त्रिकोणषट्कोणवृत्ताष्टदलमण्डितम् ।
त्रिवृत्तं भूगृहं यन्त्रं सिद्धलक्ष्म्या मया स्मृतम् ॥ ५७ ॥

(२७) अथ यन्त्रवरं वक्ष्ये कुलवागीश्वरीप्रियम् ।

---

१ 'सिद्धलक्ष्म्या' ग. पाठः ।

साधकेष्टप्रदं दिव्यं परपदरसालयम् ॥ ५८ ॥

त्रिकोणं सबिन्दुं शराश्रं सवृत्तं
ततो नागपत्राश्रितं षोडशारम् ।
त्रिवृत्तं धरासद्म पद्मास्पदं ते
सुयन्त्रं प्रदिष्टं च वागीश्वरीयम्[1] ॥ ५९ ॥

(२८) अथ वक्ष्यामि देवेशि यन्त्रं पद्मावतीप्रियम् ।
सर्वार्थसाधकं दिव्यं सर्वाशापरिपूरकम् ॥ ६० ॥

बिन्दुस्त्रिकोणवसुकोणसवृत्तनाग-
पत्रादिषोडशदलानलवर्तुलं च ।
भूमन्दिरत्रयमिदं सकलार्थदं स्यात्
पद्मावतीप्रियतरं जयचक्रमेतत् ॥ ६१ ॥

(२९) अथ वक्ष्ये महादेवि कुब्जिकायन्त्रमुत्तमम् ।
सर्वदेवरहस्यं च गोपनीयं विशेषतः ॥ ६२ ॥

बिन्दुस्त्रिकोणं रसकोणयुक्तं
वृत्तं ततो नागदलं[2] सवृत्तम् ।
धरागृहं सर्वरहस्यगर्भं
श्रीकुब्जिकायन्त्रमिदं मयोक्तम् ॥ ६३ ॥

(३०) अथ वक्ष्ये महादेवि गौरीयन्त्रं सुदुर्लभम् ।
सर्वैश्वर्यप्रदं सर्वविघ्नप्रशमनं शिवे ॥ ६४ ॥

मध्ये त्रिकोणं खयुतं[3] षडश्रं
वृत्तं तथा नागदलाग्निवृत्तम् ।
भूमन्दिरं कौलकुलेष्टतत्त्व-
भूतं सुचक्रं कथितं हि गौर्याः ॥ ६५ ॥

(३१) अथ वक्ष्ये महादेवि खेचरीयन्त्रमुत्तमम् ।

---

१ 'रीष्टम्' ङ. पाठः । २ 'दलार' क. ख. ग. पाठः । ३ 'युगं' क. ख. ग. पाठः ।

योगिनां दुर्लभं योगसाधनानन्दकारणम् ॥ ६६ ॥
बिन्दुस्त्रिकोणकं वृत्तं वसुपत्राग्निवृत्तकम् ।
धरागृहं मयाख्यातं खेचरीयन्त्रमुत्तमम् ॥ ६७ ॥

(३२) अथ नीलसरस्वत्या यन्त्रोद्धारं ब्रवीम्यहम् ।
महाचीनपदस्थानां सिद्धिदं भोगदं शिवे ॥ ६८ ॥

बिन्दुस्ततोऽन्यारषडश्रयुक्तं
वृत्तं ततो नागदलाग्निवृत्तम् ।
धरागृहं वह्नितुटीभिरीड्यं
यन्त्रं परं नीलसरस्वतीयम् ॥ ६९ ॥

(३३) अथ देव्याः पराशक्तेर्यन्त्रोद्धारं ब्रवीम्यहम् ।
सर्वसंपत्प्रदं दिव्यं सर्वैश्वर्यप्रदायकम् ॥ ७० ॥
बिन्दुस्त्रिकोणं वृत्ताढ्यवसुपत्राग्निवृत्तकम् ।
भूगृहं यन्त्रमेतत्ते पराशक्तेर्मया स्मृतम् ॥ ७१ ॥

(३४) अथाहं यन्त्रमीशानि शिवस्य परमं ब्रुवे ।
सर्वसाधारणं सर्ववाञ्छितैकप्रदायकम् ॥ ७२ ॥

बिन्दुस्त्रिकोणवसुकोणदशारवृत्त-
नागाश्रषोडशदलानलवृत्तयुक्तम् ।
भूमन्दिरत्रयमिदं परमार्थदं स्यात्
साधारणं जगति यन्त्रमनादि शैवम् ॥ ७३ ॥

(३५) अथाहं वैष्णवं देवि यन्त्रराजं ब्रवीमि ते ।
सर्वसाधारणं लोके वैष्णवानां शुभप्रदम् ॥ ७४ ॥

बिन्दुस्त्रिकोणवसुकोणसुवृत्तनाग-
पत्राढ्यषोडशदलाश्रितवृत्तबिम्बम् ।
भूमन्दिरं जयति यन्त्रमिदं भवानि
साधारणं परमवैष्णवधाम मत्यम् ॥ ७५ ॥

(३६) सर्वेषामेव मन्त्राणां शैवानां परमेश्वरि ।
गुरुरघोरो वक्ष्येऽहं तस्य यन्त्रमनुत्तमम् ॥ ७६ ॥
त्रिकोणं सबिन्दुं शराश्रं सकाश्रं
ततो नागपत्रं सवृत्तं[1] कलारम् ।
चतुर्भूगृहोद्भासितं वह्निरेखं
सदोद्द्योततेऽघोरदेवस्य यन्त्रम् ॥ ७७ ॥

(३७) सर्वेषामेव मन्त्राणां वैष्णवानां महेश्वरि ।
लक्ष्मीनारायणः श्रेष्ठस्तस्य यन्त्रं ब्रवीम्यहम् ॥ ७८ ॥
बिन्दुस्त्रिकोणं वस्वश्रं वृत्ताष्टदलमण्डितम् ।
षोडशारं स्वृत्तं च भूगेहेनोपशोभितम् ॥ ७९ ॥
लक्ष्मीनारायणस्यैतच्छ्रीचक्रं परमार्थदम् ।
इतीदं सर्वदेवानां रहस्यं परमाद्भुतम् ।
तत्त्वं तव मयाख्यातं गोपनीयं स्वयोनिवत् ॥ ८० ॥

—=:*:=—

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये यन्त्रोद्धार-
निरूपणं द्वादशः पटलः ॥ १२ ॥

---

१ 'सुवृत्तं' क. ख. ग. पाठः ।

अथ

# त्रयोदशः पटलः ।

—=-:***:-=—

श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि रहस्यं सर्वकामिकम् ।
यन्त्रधारणपूजाया विधिं साधारणं परम् ॥ १ ॥
विना वर्म विना नाम्नां सहस्रकं महेश्वरि ।
न सिद्धिः साधकस्यास्ति भैरवस्यापि पार्वति ॥ २ ।
यः साधको जपेद् विद्यां यन्त्रधारणवर्जितः ।
सा विद्या कोटिजप्तापि तस्य निष्फलतां व्रजेत् ॥ ३ ॥
शुभेऽह्नि शुभनक्षत्रे शुभवारे महेश्वरि ।
ब्राह्म्ये मुहूर्ते उत्थाय स्नात्वा ध्यात्वा गुरुं निजम् ॥ ४ ॥
साशिवां देवतां ध्यात्वा रहःस्थाने सुधूपिते ।
गन्धाष्टकेन विलिखेद् यन्त्रं मूलेन वेष्टितम् ॥ ५ ॥
तद्बाह्ये कवचं दिव्यं तथा नामसहस्रकम् ।
लिखेत् कनकलेखन्या भूर्जपत्रे सुशोभने ॥ ६ ॥
गन्धाष्टकं प्रवक्ष्यामि रहस्यं परमं प्रिये ।
अवाच्यं देवभक्ताय परशिष्याय सर्वथा ॥ ७ ॥
स्वयंभूकुसुमं कुण्डगोलोत्थं रोचनागुरु ।
कर्पूरं मृगनाभिश्च मद्यं च मलयोद्भवम् ॥ ८ ॥
अपरं ते प्रवक्ष्यामि सिद्धिदं गन्धसाधनम् ।
वैष्णवानां च शैवानां शाक्तानां च शुभावहम् ॥ ९ ॥

काश्मीर-गोरोचन-पूगकादि-
कुरङ्गनाभीज-सरुद्र-मूर्वाः ।

पूतासकं चन्दनमिश्रमेतद्-
गन्धाष्टकं भैरवभैरवीष्टम्[1] ॥ १० ॥

गन्धाष्टकं स्वमूलेन नियोज्य कुलसाधकः ।
न्यासमृष्यादिकं कृत्वा ध्यायेद् देवीं शिवाङ्कगाम् ॥ ११ ॥
लिखेद्यन्त्रं निजं दिव्यं तद्बाह्ये मूलमन्त्रतः ।
मातृका विलिखेन्मन्त्री तद्बाह्ये कवचं लिखेत् ॥ १२ ॥
तथा नामसहस्रं च लिखित्वा भूर्जपत्रके ।
वेष्टयेत् श्वेतसूत्रेण पीतनीलक्रमेण च ॥ १३ ॥
निजेष्टदेवीध्यानाभ-वर्णेन परमेश्वरि ।
लाक्षया परिवेष्ट्याथ सुवर्णेनाथ वेष्टयेत् ॥ १४ ॥
ततः परां गुटीं दिव्यां देवीरूपां विचिन्त्य च ।
यन्त्रधारण-यन्त्रस्य बिन्दौ संस्थापयेच्छिवे ॥ १५ ॥
यन्त्रधारण-यन्त्रं ते वक्ष्ये साधकपूजिते ।
कौलिकानां हितार्थाय गोपनीयं विशेषतः ॥ १६ ॥
बिन्दुस्त्रिकोणं षट्कोणं षडस्रं वसुपत्रकम् ।
त्रिवृत्तं च धरासद्म यन्त्रधारण-यन्त्रकम् ॥ १७ ॥
सिन्दूरेण लिखेद् देवि लयाङ्गं पूजयेच्छिवे ।
यस्य पूजनमात्रेण मन्त्री भैरवतां व्रजेत् ॥ १८ ॥
गणेशं धर्मराजं च वरुणं च कुबेरकम् ।
चतुर्द्वारेषु संपूज्याश्चत्वारो द्वारपालकाः ॥ १९ ॥
असिताङ्गं च कालाग्निं संहारं रुरुभैरवम् ।
करालं विकरालं च सुप्तेशोन्मत्तभैरवौ ॥ २० ॥
अष्टपत्रेषु संपूज्य भैरवानष्ट पार्वति ।
दुर्गां चण्डीं च सुमुखीं शिवादूतीं शिवां जयाम् ॥ २१ ॥

---

१ 'भैरवि भैरवेष्टम्' ख. पाठः ।

बहिः षट्कोणके पूज्याश्चैता मूलेन साधकैः ।
तारां च तारिणीं तुर्या बगलां विजयां तथा ॥ २२ ॥
छिन्नमस्तां षडश्रेषु पूजयेत् साधकोत्तमः ।
भवानी कुब्जिका गौरी त्र्यश्रे पूज्या महेश्वरि ॥ २३ ॥
बिन्दौ स्वदेवतामिष्टां सशिवां कौलिकोत्तमः ।
गन्धाक्षतप्रसूनैश्च धूपदीपादितर्पणैः ॥ २४ ॥
नैवेद्याचमनीयाद्यैस्ताम्बूलैश्च सुवासितैः ।
तत्र बिन्दौ महादेवि यथाविभवमात्मनः ॥ २५ ॥
सौवर्णं राजतं मुक्तामणिताम्रादिपूर्वकम् ।
देवताप्रीतये दद्याद् दक्षिणां गुरवेऽपि च ॥ २६ ॥
तत्र स्वयं गुटीं दिव्यां देवीरूपां कुलेश्वरि ।
पञ्चामृतैः पञ्चगव्यैः स्नापयेत् साधकोत्तमः ॥ २७ ॥
संस्थाप्य गुटिकां मन्त्री बिन्दौ संस्थापयेत् ततः ।
प्राणान् दत्त्वाऽऽवाहनादिमुद्रा मन्त्री प्रदर्शयेत् ॥ २८ ॥
पाद्यार्घ्यमधुपर्कादि सर्वं तत्र निवेदयेत् ।
चिन्तयेद् देवतारूपां पूजयेद् यन्त्रराजवत् ॥ २९ ॥
संपूज्य गुटिकां दिव्यां तदग्रे साधको जपेत् ।
मूलमन्त्रं यथाशक्त्या मालया करमालया ॥ ३० ॥
पठेत् तत्रैव कवचं मन्त्रनामसहस्रकम् ।
स्तोत्रं मन्त्रमयं देवि मन्त्रिचक्रं[1] प्रपूजयेत् ॥ ३१ ॥
तैः समं साधकैः कुर्यात् पात्रवन्दनमीश्वरि ।
तान् सन्तर्प्य सुधीर्भक्त्या धारयेद् देवतां हृदि ॥ ३२ ॥
विसृज्य सशिवां देवीं नमेत् संहारमुद्रया ।

---

१ 'मन्त्र' ग. पाठः ।

धारयेन्मूर्ध्नि वा बाहौ गुटिकां वरदायिनीम् ॥ ३३ ॥
य एवं धारयेद् यन्त्रं जपेन्मन्त्रं स साधकः ।
साक्षाद् भवभयोन्मुक्तो भवेद् भैरवसन्निभः ॥ ३४ ॥
जपसिद्धिर्भवेत् तस्य य एवं धारयेद् गुटीम् ।
बहुनोक्तेन किं देवि स भवेद् भैरवः स्वयम् ॥ ३५ ॥
इदं तत्त्वतमं दिव्यं सर्वस्वं परमार्थदम् ।
सारात् सारतरं गोप्यं गोपनीयं मुमुक्षुभिः ॥ ३६ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये यन्त्रधारणविधि-
निरूपणं त्रयोदशः पटलः ॥ १३ ॥

अथ

## चतुर्दशः पटलः ।

—*:*:*—

श्रीदेव्युवाच ।

भगवन् श्रोतुमिच्छामि च्छन्दोमुनिविनिर्णयम् ।
तथा देवीश्वरादीनां देवताबीजनिर्णयम् ॥ १ ॥
शक्तिकीलकदिग्बन्धनिर्णयं परमेश्वर ।
वक्तुमर्हसि मे देव यद्यस्ति मयि ते दया ॥ २ ॥

श्रीभैरव उवाच ।

एतद् गुह्यतमं देवि देवानां सारमुत्तमम् ।
देवीनामादिदेवानां मन्त्राणां मे रहस्यकम् ॥ ३ ॥
वक्ष्यामि तव भक्त्याहमृषिच्छन्दोविनिर्णयम् ।
देवानां मन्त्रराजस्य देवीनां वा तथैव च ॥ ४ ॥

षष्टिकल्पसहस्राणि येनैव विहितो जपः ।
तथाब्दषष्टिलक्षाणि षष्टिजन्मान्तरेषु च ॥ ५ ॥
पुरश्चर्याकरो देवि सर्षिरित्यभिधीयते ।
ऋषिहीनो भवेन्मन्त्रो जप्तो जन्मान्तरेषु च ॥ ६ ॥
प्रत्यवायकरो लोके साधकानां महेश्वरि ।
यदा मन्त्रो मया वक्त्रान्महादेवि बहिष्कृतः ॥ ७ ॥
वेष्टितो येन तेजस्वी तच्छन्द इति गीयते ।
छन्दांसि विविधान्येषां मन्त्राणां परमेश्वरि ॥ ८ ॥
छन्दोहीनो भवेन्मन्त्रो नग्नो मर्त्य इव प्रिये ।
यदा जप्तो मनुर्देवि मया परमभक्तितः ॥ ९ ॥
प्रादुर्बभूव मे सद्यो या सा प्रोक्तेति देवता ।
मन्त्रराजस्य देवीनां येनोत्पत्तिर्मया कृता ॥ १० ॥
तद्बीजमिति मन्त्राणां वर्ण्यते परमेश्वरि ।
बीजहीनो भवेन्मन्त्रः सिद्धिहानिकरः शिवे ॥ ११ ॥
बीजहीनं जगद्धीनं जलहीनो नदो यथा ।
जपान्ते जगदुत्पत्तिस्थितिसंहारिकी मतिः ॥ १२ ॥
जाता मे येन देवेशि सा शक्तिरिति गीयते ।
शक्तिहीनो महादेवि मन्त्रो विघ्नकरो मतः ॥ १३ ॥
महामाङ्गल्यदो मन्त्रो देवीनां[1] शक्तिबीजतः ।
जप्त्वा स्तुत्वा महादेवि पुनर्येन स गोपितः ॥ १४ ॥
निस्तेजस्कः पुनर्जातः कीलकं तदुदाहृतम् ।
निष्कीलितं जपान्ते च मनुमश्रद्धया शिवे ॥ १५ ॥
त्यक्त्वा साधकराजस्य सिद्धिं हरति भैरवः ।
जपकाले महादेवि राक्षसा भूतप्रेतकाः ॥ १६ ॥

---

१ ' देवानां ' ख. पाठः ।

दिशो दश पलायन्ते येन दिग्बन्धनं च तत् ।
दिग्बन्धेन[1] विना देवि जपः पाठोऽपि वा तथा ॥ १७ ॥
निष्फलो विघ्नकृन्नित्यं तेन दिग्बन्धनं चरेत् ।
एतैर्विहीनो मन्त्रोऽस्ति निष्फलो विघ्नकारकः ॥ १८ ॥
ममापि देवि किं वक्ष्ये पुनः क्षुद्रेषु जन्तुषु ।
इत्येष पटलो गुह्यश्छन्दसां परमेश्वरि ॥
गोपनीयो महावीरैरित्याज्ञा पारमेश्वरी ॥ १९ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये ऋष्यादि-
निरूपणं चतुर्दशः पटलः ॥ १४ ॥

अथ

## पञ्चदशः पटलः ।

श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि श्मशानस्योग्रसाधनम् ।
येन साधनमात्रेण साधको भैरवो भवेत् ॥ १ ॥

श्रीदेव्युवाच ।

भगवन् भवता भक्त्या प्रसादोऽयं महान् कृतः ।
विस्मृतोऽयं विधिर्गुह्यः श्मशानस्यार्चनाङ्कितः ॥ २ ॥
सर्वतन्त्रेष्वविख्यातः स्मारितो मेऽधुना परः ।

श्रीभैरव उवाच ।

१ 'बन्धने' ख. पाठः ।

त्रयस्त्रिंशतिकोटीनां देवतानां हि शङ्करः ।
नामभिर्विश्रुता देवि भवत्या मे परं श्रुताः ॥ ३ ॥
तासां वक्ष्येऽधुना देवि श्मशानार्चां यथाविधि ।
साधका येन जायन्ते सर्वसिद्धियुताः शिवे ॥ ४ ॥
विना श्मशानविधिना पूजायोगजपादयः ।
न सिद्ध्यन्ति वरारोहे कलौ भैरवशापतः ॥ ५ ॥
त्रिस्त्रिंशत्कोटयो देव्यः सर्वाः प्रेतालयस्थिताः ।
तत्र गत्वार्चयेद् यस्तु स भवेद् भैरवोपमः ॥ ६ ॥
तत्र घोरारवैर्देवि महाकालः सृगालकैः ।
सारमेयैश्च यक्षेन्द्रैः सोरगैः सपिशाचकैः ॥ ७ ॥
वेतालभूतप्रेतैश्च श्मशानार्चां करोति हि ।
तत्र भूता महाघोराश्चत्वारो विघ्नकारकाः ॥ ८ ॥
दिग्विदिक्षु भ्रमन्ते ते देव्यष्टौ भूतभैरवाः ।
ते संमुखगताः क्रूरा भूताः कुर्वन्ति विप्रियम् ॥ ९ ॥
भैरवा विघ्नहन्तारः शिवं कुर्वन्त्यसंमुखे ।
तेषां विधिं प्रवक्ष्यामि गुह्यं सारोत्तमोत्तमम् ॥ १० ॥
अप्रकाश्यमदातव्यं श्मशानार्चनमुत्तमम् ।
रवौ चन्द्रे कुजे सौम्ये गुरौ शुक्रे शनौ तथा ॥ ११ ॥
पुनः सूर्ये भ्रमन्ते ते दिग्विदिक्ष्वष्टभैरवाः ।

पूर्वोत्तरेशानसमीरणाग्नि-
केनाशरक्षोवरुणादिदिक्षु ।
महोग्र–चित्राङ्गद–चण्ड–भास्व-
ल्लोलाक्ष–भूतेश–कराल–भीमाः ॥ १२ ॥
एते भ्रमन्ते सततं श्मशाने
दिग्भैरवा भूतयुता महेशि ।

एतान् समभ्यर्च्य वसेत् श्मशाने
स्यादन्यथा धीभ्रमणं विपत्तिः ॥ १३ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये श्मशानार्चन-
विधिनिरूपणं पञ्चदशः पटलः ॥ १५ ॥

अथ

# षोडशः पटलः ।

श्रीभैरव उवाच ।

अथाहं पूजनस्यास्य वक्ष्ये पद्धतिमादरात् ।
गद्यपद्यमयीं देवि मन्त्रसिद्धिप्रदायिनीम् ॥ १ ॥
रात्रिशेषे समुत्थाय साधको विहिताह्निकः ।
श्मशानार्चनसंभारं समादाय च सानुगः ॥ २ ॥
सवीरो वीरभूमिं तु व्रजेद्रात्रिमुखे प्रिये ।
तत्र देवि विधिं वक्ष्ये शृणु पार्वति सादरम् ॥ ३ ॥
गुह्यं सारतमं गोप्यं नाख्येयं सिद्धिवाञ्छकैः ।

तत्र रात्रिमुखे सवीरः श्मशानं गत्वा सप्तपदान्तां भूमिमुत्सृज्य श्मशानवेलां नोल्लङ्घयेत् । तत्र संभारं संस्थाप्य स्वहस्तपादौ प्रक्षाल्य त्रिराचम्य प्राणायामत्रयं मूलेन विधाय, पूर्ववदाचम्य स्वमूलऋषिच्छन्दोन्यासं कृत्वा कराङ्गन्यासौ कृत्वा मूलमष्टोत्तरशतं जपेत् । यथाशक्ति जप्त्वा देवीं सशिवां स्वगुरुं ध्यात्वा, कवच-सहस्रनाम-स्तवान् पठन् वेलां सप्तपदमात्रामुल्लङ्घ्य, श्मशानमण्डलं प्रदक्षिणाकृत्या प्रविश्य चितां प्रणमेत् ।

ज्वालाकरालवदने कल्पान्तदहनप्रिये ।
प्राणिप्राणालयोद्भूते चिते मेऽनुग्रहं कुरु ॥ ४ ॥

इति नत्वा, यथावारं प्रशस्ताप्रशस्तान् भूतभैरवान् संमुखपृष्ठयोर्धृत्वा पूजामारभेत् ॥ श्रीदेवी उवाच ।

भगवन् भैरवान् भूतान् शापानुग्रहकारकान्[1] ।
कथं संधारयेन् मन्त्री तत्र संमुखपृष्ठयोः ॥ ५ ॥

श्रीभैरव उवाच ।

एतद् देवि परं गुह्यं भूतभैरवसाधनम् ।
वक्ष्यामि तव भक्त्याहं न चाख्येयं दुरात्मने ॥ ६ ॥

भूतो रवौ पूर्वगतो महोग्र-
श्चित्राङ्गदोऽप्युत्तरगो हिमांशौ ।
चण्डस्तथे[2]शानगतो महीजे
भास्वान् बुधे भैरव एव वायौ ॥ ७ ॥
लोलाक्षको वह्निगतः सुरेज्ये
भूतेश्वरो दक्षिणगोऽसुरेज्ये ।
करालको निर्ऋतिगोऽपि मन्दे
रवौ पुनः पश्चिमगोऽपि भीमः ॥ ८ ॥
एवं भ्रमन्ते सततं महेशि
दिग्भैरवा भूतगणाः श्मशाने
सुधांशुवृद्धौ शशिहीनपक्षे
तद्वैपरीत्येन शिवे भ्रमन्ति ॥ ९ ॥

श्रीदेव्युवाच ।

देवेश करुणासान्द्र साधकेश जगत्पते ।
ज्ञायते[3] भीमकर्मेदं हृदि साधकसत्तमाः ॥ १० ॥

---

१ 'ग्रहणक्षमान्' क. पाठः । २ 'स्तवे' ग, घ. पाठः । ३ 'जायन्ते' क. ख. पाठः ।

महोग्रभीमयोः पूजां पक्षयोर्भीमसौम्ययोः ।
कथं देव करिष्यन्ति द्वयोर्भास्करवारयोः ॥ ११ ॥

श्रीभैरव उवाच ।

पौर्णमास्यां शिवे दृष्ट्वा ग्रहवारं ततोऽष्टधा ।
रविवारं च संगुण्य प्रथमं वा द्वितीयकम् ॥ १२ ॥
प्रथमे रविवारे तु महोग्रं पूर्वगं यजेत् ।
द्वितीये पश्चिमे भीमं पूजयेच्छुक्लपक्षके ॥ १३ ॥
कृष्णपक्षेऽर्चयेद् भूतान् विपरीतक्रमेण तु ।
अधुनैषां प्रवक्ष्यामि पूजासारं महेश्वरि ॥ १४ ॥
अवाच्यं परशिष्याय कुचैलाय दुरात्मने ।
श्मशानपूजामन्त्रस्य महाकाल ऋषिः स्मृतः ॥ १५ ॥
उष्णिक् छन्द इति ख्यातं देवी श्मशानकालिका ।
परा बीजं तटं शक्तिः काली कीलकमीरितम् ॥ १६ ॥
धर्मार्थकाममोक्षेषु विनियोगः प्रकीर्तितः ।

अस्य श्रीश्मशानकालिकापूजामन्त्रस्य महाकालभैरव ऋषिः, उष्णिक् छन्दः, श्रीश्मशानकालिका देवता, ह्रीं बीजं, हूं शक्तिः, क्रीं कीलकं, धर्मार्थकाममोक्षार्थे पूजायां विनियोगः । महाकालभैरव ऋषये नमः शिरसि, उष्णिक्छन्दसे नमो मुखे, श्मशानकालिकादेवतायै नमो हृदि, ह्रीं बीजाय नमो नाभौ, हूं शक्तये नमो गुह्ये, क्रीं कीलकाय नमः पादयोः, विनियोगाय नमः सर्वाङ्गेषु । ओंक्रां हृ० । ओंक्रीं शि० इत्यादि कराङ्गन्यासः । एवं षडङ्गं विधायासनं शोधयेत् । ओंआं आसनशोधनमन्त्रस्य मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता, आसनशोधने विनियोगः । प्रीं पृथ्व्यै नमः "महि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम्" ॥ ओंक्रां आधारशक्तिकमलासनाय नमः । अनन्ताय नमः । पद्माय नमः । पद्मनालाय नमः । तत्रोपविश्य तालत्रयं दद्यात् । "अपसर्पन्तु ते भूताः" इत्या-

---

१ 'शुद्धि' ग. ङ. पाठः ।

दिना तालत्रयं दत्त्वा नाराचमुद्रां प्रदर्शयेत् । इत्यासनशुद्धिं विधाय भूतशुद्धिं कुर्यात् । ॐहूं आकुञ्चेन[1] सुषुम्नावर्त्मना प्रदीपकलिकाकारां ब्रह्मपथान्तर्नीत्वा स्वजीवं तत्र सदाशिवे लीनं ध्यात्वा, आदौ यमिति वायुबीजेन षोडशधा जप्तेन पापपुरुषं वामकुक्षिस्थं शोषयेत् । रमिति वह्निबीजेन चतुष्षष्टिवारजप्तेन दाहयेत् । वमिति वरुणबीजेन द्वात्रिंशद्वारजप्तेन प्लावयेत् । लमिति भूबीजेन दशधा जप्तेन शरीरं पिण्डीभूतं विभाव्य स्वजीवं हृदि संस्थाप्य प्राणानर्पयेत् । इति भूतशुद्धिः ॥ ॐआंह्रीं-क्रौं यंरंलंवं शंषंसंहं सोहं हंसः[2] मम प्राणा इह प्राणाः, एवं मम जीव इह स्थितः, एवं मम सर्वेन्द्रियाणि, मम वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहै-वागत्य[3] सुखं चिरं तिष्ठन्तु स्वाहा । इति प्राणान् समर्प्य, मातृकान्यासं विधाय पूर्ववत् कराङ्गन्यासौ कृत्वा, तत्र चितायाः ईशाने चतुरश्रां वेदीं विधाय, तत्र श्रीचक्रं विभाव्य यथोक्तविधिनाभ्यर्च्य, तत्र नवग्रहान्[4] संपूज्य, पूर्वे वटुकं संपूज्य भूतभैरवान् संपूजयेत् । ॐम्रीं महोग्राय नमः । ॐम्रीं मदालसायै नमः पूर्वे । ॐश्रीं चित्राङ्गदाय नमः । ॐश्रीं चित्रिण्यै नमः उत्तरे । ॐह्रीं चण्डाय नमः । ॐह्रीं चण्ड्यै नमः ईशाने । ॐह्रौं भास्वते नमः । ॐह्रौं प्रभायै नमः वायवे । ॐलां लोलाक्षाय नमः । ॐलां लोलायै नमः आग्नेये । ॐभैं भूतशाय नमः । ॐभैं भूतधात्र्यै नमः दक्षिणे । ॐक्रीं करालाय नमः । ॐक्रीं करालिन्यै नमः नैर्ऋते । ॐह्रींश्रीं भीमाय नमः । ॐह्रीं श्रीं भीम-रूपायै नमः पश्चिमे । इति यथावारक्रमेण गन्धाक्षतपुष्पैरभ्यर्च्य, तत्र चिताग्रे श्रीचक्रं नवयोनिचक्रं वा विभाव्य योगपीठपूजां कृत्वा पात्राणि संस्थाप्य पात्रपूजां कृत्वा, तत्र देवतावरणपूर्वं साशिवां देवीं संपूज्य यथाशक्त्या जप्त्वा जपं देव्यै समर्प्य, ततः कवच-सहस्रनाम-स्तवपाठादि विधाय तदपि समर्प्य चिताग्नौ दशांशं होमं कुर्यात् । तत्र वटुकादीन् संतर्प्य (* भूतभैरवानपि सन्तर्प्य, नवकन्याः सन्तर्प्य) परस्परं नवपात्रावधि पानं कुर्यात् ॥ श्रीदेव्युवाच ।

देवदेव महादेव शरणागतवत्सल ।
सुरापानविधिं ब्रूहि येन सिद्धिर्भवेद् ध्रुवम् ॥ १७ ॥

---

१ 'अंकुशेन' क. ख. पाठः । २ 'सोहं हौं हंसः' ख. पाठः । ३ 'इहा' क. पाठः । ४ 'ग्रहा संपूजयेत् ॐम्रीं' ङ. पाठः । * ङ पुस्तके नास्ति ।

श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि पानपूजाविधिं परम् ।
साधका येन जायन्ते कलौ भैरवसन्निभाः ॥ १८ ॥
श्मशानेषु चरेत् पानं निशीथे वा महेश्वरि ।
विना पानं न सिद्धिः स्यात् साधकानां कलौ ध्रुवम् ॥ १९ ॥
सुरा संविद्वारुणीति[1] त्रिधा पानं सदोत्तमम् ।
तेषु ब्रह्मादयो देवा निलीना मुक्तये परम् ॥ २० ॥
आसवो मधुरं मद्यं शीधु चेति त्रयं परम् ।
तत्र सर्वे स्थिता देवा वासवाद्या अहर्निशम् ॥ २१ ॥
संपूज्य सशिवां देवीं प्रवृत्ते भैरवार्चने ।
तत्र पानं परादेव्या महानन्दप्रदायकम् ॥ २२ ॥
विना पानं न सिद्धिः स्याद् विना शक्तिसमर्चनम् ।
न सिद्ध्यति शिवे मन्त्रः श्मशानार्चां विना तथा ॥ २३ ॥
तस्मात् श्मशानं संपूज्य शक्तिमभ्यर्च्य साधकः ।
पानं भजेत् परादेव्याः श्रीचक्राग्रे यथाविधि ॥ २४ ॥
संवित्पानं चरेद्रात्रौ दिवापानं च शीधुना ।
अहोरात्रे सुरापानं भोगदं मोक्षदं शिवे ॥ २५ ॥
संविदासवयोर्मध्ये संविदेव गरीयसी ।
स वैष्णवः स शाक्तश्च स शैवो यः श्मशानगः ॥ २६ ॥
श्मशानभजनाद्वीरो भवेद् भैरवसन्निभः ।
पानं तावद्भजेद् देवि यावत् संविन्मनोमयी ॥ २७ ॥
यदि तत्र विकारः स्यात् पानं तद् ब्रह्मघातवत् ।
यावन्न चलते दृष्टिर्यावन्न चलते मनः ॥ २८ ॥
तावत् पानं प्रकर्तव्यं पशुपानमतः परम् ।

---

१ 'वामणी' क. ख. ग. पाठः ।

विना पूजां चरेद्यस्तु पानं वा चर्वणादिकम् ॥ २६ ॥
मकारान् पञ्च देवेशि कुलटां वा परस्त्रियम् ।
स [1]रोगी निन्दितो लोके परपिण्डोपजीवकः ॥ ३० ॥
ब्रह्मघातवदीशानि शीघ्रं मृत्युमुखं व्रजेत् ।
आत्मोच्छिष्टं न दातव्यं परोच्छिष्टं न भक्षयेत् ॥ ३१ ॥
यद्युच्छिष्टं वीरचक्रे कौलिको भक्षयेच्छिवे ।
सिद्धिहानिर्भवेत् सद्यो योगिन्यो भक्षयन्ति तम् ॥ ३२ ॥
पूजाकाले निशीथे च ध्यात्वा देवीं शिवाङ्कगाम्[2] ।
अभ्यर्च्य विधिना पानं कृत्वा चर्वणपूर्वकम् ॥ ३३ ॥
मकारैः पञ्चभिर्देवि तर्पयित्वा परस्त्रियम् ।
पानं पानं शिवे पानं सप्तवारं समुच्चरेत् ॥ ३४ ॥
तेन देवी शिवाङ्कोपविष्टा प्रादुर्भविष्यति ।
इत्येषा पद्धतिर्गुह्या श्मशानार्चनसंयुता ॥ ३५
गद्यपद्यमयी दिव्या तत्त्वसर्वस्वसंयुता ।
तव स्नेहेन विख्याता न प्रकाश्या कदाचन ।
इति गुह्यतमं देवि रहस्यं देवदुर्लभम् ।
अप्रकाश्यमदातव्यं गोपनीयं स्वयोनिवत् ॥ ३

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये श्मशानार्चनविधि-
निरूपणं षोडशः पटलः ॥ १६ ॥

---

१ 'स भोगी' इति साधुः पाठः । २ 'ङ्किताम्' क. ख. पाठः ।

अथ

# सप्तदशः पटलः ।

श्रीदेव्युवाच ।

भगवन् सर्वतन्त्रज्ञ सर्वलोकनमस्कृत ।
श्रीदेव्या यन्त्रराजस्य मालाकङ्कणयोरपि ॥ १ ॥
शोधनं श्रोतुमिच्छामि त्वयैव प्राङ्निवेदितम् ।
येन शुद्धिर्भवेद् देव द्रव्याणां साधकस्य हि ॥ २ ॥

श्रीभैरव उवाच ।

अधुना देवि वक्ष्यामि शोधनं सर्वकामदम् ।
सर्वसाधारणं लोके पटलं गुह्यमुत्तमम् ॥ ३ ॥
सुदिने देवि गत्वादौ श्मशानं साधकोत्तमः ।
कपालं नरदन्तानां माला कङ्कणमीश्वरि ॥ ४ ॥
अष्टोत्तरशतं जप्त्वा मूलं यन्त्रे निधापयेत् ।
पुनरष्टोत्तरशतं जप्त्वा तेनैव तर्पयेत् ॥ ५ ॥
देवान् पितृन् ऋषीन् देवि माया–मा–कामबीजकैः ।
श्मशानभस्मलिप्तेन शुद्धेन सुरवन्दिते ॥ ६ ॥
ततो यन्त्रं लिखेद् देवि कपाले साधकोत्तमः ।
मालां कुर्यान्नृदन्तानां सकलाभीष्टसिद्धये ॥ ७ ॥
वामाचारपरः श्रीमान् यो न कुर्यान्महेश्वरि ।
यन्त्रं मालां शिवे तस्य मन्त्रहानिर्भवेद् ध्रुवम् ॥ ८ ॥
कपालं मृतकस्याशु गृहीत्वा स्फटिकप्रभम् ।

श्मशानभस्म शुद्धं च कृत्वा साधकसत्तमः ॥ ९ ॥
स्वमन्त्रं साधयेद् धीमानन्यथा सिद्धिहानिदः ।
कपालयन्त्रं देवेशि केशकङ्कणमुत्तमम् ॥ १० ॥
नृदन्तमालां द्रव्यं च मुण्डपात्रं महेश्वरि ।
गोपयेत् साधकोऽत्यन्तं देवीरूपं विचिन्तयेत् ॥ ११ ॥
य एवं साधकः कुर्यात् तस्य सिद्धिरदूरतः[1] ।
अन्यथा सिद्धिहानिः स्यान्ममापि परमेश्वरि ॥ १२ ॥
इतीदं पटलं दिव्यं गुह्यं सर्वस्वमुत्तमम् ।
अप्रकाश्यमदातव्यं गोपनीयं विशेषतः ॥ १३ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये द्रव्यादिशोधन-
निरूपणं सप्तदशः पटलः ॥ १७ ॥

अथ

# अष्टादशः पटलः ।

—:-*०*-:—

श्रीदेव्युवाच ।

भगवन् देवदेवेश मालायन्त्रार्चनं परम् ।
शोधनं श्रोतुमिच्छामि विस्तराद् परमार्थदम् ॥ १ ॥

श्रीभैरव उवाच ।

अधुना देवि वक्ष्यामि पद्धतिं गद्यरूपिणीम् ।

---

१ 'नै दूरतः' ख. पाठः ।

शोधनस्य हि द्रव्याणां मालादीनां महेश्वरि ॥ २ ॥

तत्रादौ साधको रात्रिशेष उत्थाय बद्धपद्मासनः स्वशिरःस्थसहस्राराधोमुखकमलकर्णिकान्तर्गतं निजगुरुं ध्यात्वा, देवीं च हृद्विषये ध्यात्वा, मानसैरुपचारैरभ्यर्च्याजपाजपं गुरवे देव्यै च समर्प्य प्रणमेत् । ततो बहिरागत्य नद्यादौ गत्वा स्नानसन्ध्यादि विधाय, यागगेहमेत्य नित्यकर्म समाप्य यन्त्रशोधनाद्यारभेत् । तत्रेशानदिग्विषये चतुष्कोणां हस्तैकविस्तृतां विश्वक् सम्यक्क्रया वेदीं विधाय विलिप्य सिन्दूरेण स्वद्रेवतायन्त्रं विभाव्य, यथोक्तया पूजया संपूज्य द्रव्यादीन्यानाय्य यन्त्रादीन् शोधयेत् ॥

स्त्रीकेशैश्च चरेद् देवि कङ्कणं साधकोत्तमः ।
कङ्कणं दन्तमालां च यन्त्रं कापालिकं शिवे ॥ ३ ॥
द्रव्यं मधु तथा मत्स्यं मांसं मुद्रां च मैथुनम् ।
मकारपञ्चसंयुक्तं पूजयेद् भैरवेश्वरीम् ॥ ४ ॥

तत्रैवानीयासनादिशुद्धिं कृत्वा, स्वमूलस्य सङ्कल्पपूर्वमृष्यादिन्यासं कुर्यात् । ततो मूलेनाचम्य प्राणायामत्रयं कृत्वा भूतशुद्ध्यादिप्राणान् संस्थाप्य पञ्चगव्यैनौषधसप्तकेन शोधनं कुर्यात् ॥

स्तन्यं शुक्रं चारणालं तक्रं रक्तं स्वयोनिजम् ।
पञ्चगव्यमिति प्राज्यं कुर्यात् साधकसत्तमः ॥ ५ ॥

काश्मीर–गोरोचन–पूगकादि
कुरङ्गनाभीजमथापि मूर्वा ।
पूतासमेवं मलयोद्भवं च
सद्यन्त्रशुद्धौ महदौषधानि ॥ ६ ॥

एभिः सम्यक्क्रया यन्त्रं मालां कङ्कणं संलिप्य मूलविद्यया पृथक् पृथक् शोधनं कुर्यात् । "ॐह्रींश्रींक्लीं देवि यन्त्रेश्वरि क्लींश्रींह्रींॐ यन्त्रं शोधय २ ह्रःश्रःक्लः ठःठःठः स्वाहा ।"

इमां मन्त्रात्मिकां विद्यामष्टोत्तरशतं जपेत् ।
यन्त्रे देवीं समावाह्य पूजयेत् साधकोत्तमः ॥ ७ ॥

तत्रादौ यन्त्रं मूलविद्यया पञ्चगव्यौषधैः संशोध्य, सिन्दूरयन्त्रे

बिन्दूपरि संस्थाप्य पूर्ववत् स्वोक्तक्रमेण पूजयेत् । ततो मालामौषधादिना मूलविद्यया शोधयेत् । "ऊँऊँह्रांह्रींश्रींश्रां क्लींक्लां मालारूपिणि सर्वलोकभक्षिणि हूं नृदन्तमालां शोधय २ फट् ठःठःठः स्वाहा" । इत्येवमष्टोत्तरशतं जप्त्वा मूलविद्यया पञ्चगव्येन शोधयेत् । ततः कङ्कणं शतबालानां स्त्रीकेशस्य कृत्वा मूलविद्यया शोधयेत् । "ऊँह्रींस्त्रींहूंश्रींक्रीं केशिनि निराकेशिनि कङ्कणं शोधय २ हूंक्रां फट् ठःठःठः स्वाहा"। इति मूलविद्यामष्टोत्तरशतं जप्त्वा पञ्चगव्यौषधजलेन संशोध्य, वामहस्तदक्षहस्तयोर्निबध्य स्वमूलं नृदन्तमालया यथाशक्त्या जपेत् । ततः कवचस्तोत्रसहस्रनामादिपाठं विधाय, मूलेन नैवेद्यं निवेद्य तदग्रे चक्रपूजां कुर्यात् । साधकैरेकादशक्रमेण वृत्ताकृत्या यागमण्डपे उपविश्य, मध्ये त्रिकोणं सबिन्दुं षडश्रकं वृत्तमष्टदलं वृत्तत्रयं भूगृहं विलिख्य रक्तपुष्पैः पूजयेत्— बाह्ये-गं गणेशाय नमः, धं धर्मराजाय नमः, वं वरुणाय नमः, क्रीं कुबेराय नमः, इति संपूज्य। अष्टदलेषु ह्रींश्रीं करालाय नमः, ह्रींश्रीं विकरालाय नमः, ह्रींश्रीं संहाराय नमः, ह्रींश्रीं रुरुभैरवाय नमः, ह्रींश्रीं महाकालाय नमः, ह्रींश्रीं कालाग्नये नमः, ह्रींश्रीं सुप्तभैरवाय नमः, ह्रींश्रीं उन्मत्तभैरवाय नमः, इत्यभ्यर्च्य । षडश्रे-ओंह्रींश्रीं जयायै नमः, ३ँ विजयायै० , ३ँ कान्त्यै नमः, ३ँ रत्यै नमः, ३ँ प्रीत्यै नमः, ३ँ मनोन्मनायै नमः, इति पुष्पैरभ्यर्च्य। ततस्त्रिकोणे-गां गङ्गायै नमः, यां यमुनायै नमः, सं सरस्वत्यै नमः इत्यभ्यर्च्य, बिन्दौ मूलं० महामायायै नमः, एवं संपूज्य, तत्र श्रीदेवीं ज्योतीरूपां गोघृतेन विभाव्य यन्त्रवत्तां च पूजयेत् । तत्र भैरवं भैरवीं च पूजयेत् । तत्र वटुकं सशक्तिकं च पूजयेत् । "प्रवृत्ते भैरवे तन्त्रे सर्वे वर्णा द्विजातयः । निवृत्ते भैरवे तन्त्रे सर्वे वर्णाः पृथक् पृथक्" ॥ तत्रैव नव कन्याः अभ्यर्च्य,

वामे रामा रमणकुशला दक्षिणे चालिपात्र-
मग्रे मुद्राश्चणकवटकौ सूकरस्योष्णशुद्धिः ।
तन्त्री वीणा सरसमधुरा सद्गुरुः सत्कथार्थे[1]
वामाचारः[2] परमगहनो योगिनामप्यगम्यः ॥ ८ ॥

---

१ 'सत्कथायां' ङ. पाठः । २ 'कौला' ग. घ. पाठः ।

पीत्वा पीत्वा पुनः पीत्वा यावत् संविन्मनोमयी ।
यदि तत्र विकारः स्यात् पानं तद् ब्रह्मघातवत् ॥ ९ ॥
मधुपानपरो मन्त्री शक्तिं सन्तोषयेद्रते ।
रेतसा तर्पयेद् देवीं शक्तिं पानेन तर्पयेत् ॥ १० ॥
शक्त्युच्छिष्टं पिबेन्मद्यं वीरोच्छिष्टं तु चर्वणम् ।
मकारपञ्चसंयुक्तं कुर्याच्छ्रीचक्रमण्डलम् ॥ ११ ॥
साधकान् साधको भक्त्या सन्तर्प्य पानभोजनैः ।
सन्तर्प्य देवतामिष्टां मिष्टान्नैश्चर्वणैः शिवे ॥ १२ ॥
स्वगुरुं पूजयेद् भक्त्या तर्पयेच्छक्तितः परम् ।
सन्तोषयित्वा स्वगुरुं दक्षिणाभिश्च वन्दनैः ॥ १३ ॥
तदाज्ञां शिरसादाय नित्यकर्मणि सिद्धिदाम् ।

तत्रैवं चक्रे साधकानभ्यर्च्यानन्दभैरवं स्वात्मानं ध्यात्वा परानन्दमयो भूत्वा, संहारमुद्रया देवीं सशिवां विसृज्य दण्डवत् प्रणमेत् ।

इत्येवं पद्धतिं गुह्यां गद्यपद्यैकरूपिणीम् ।
सकलागमसाराढ्यां गोपयेत् साधकोत्तमः ॥ १४ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये शोधनपद्धति-
निरूपणमष्टादशः पटलः ॥ १८ ॥

---

'रतो' क. ख. पाठः ।

अथ

# एकोनविंशः पटलः ।

श्रीभैरव उवाच ।

अधुना देवि वक्ष्यामि सुरोत्पत्तिं महेश्वरि ।
यस्याः श्रवणमात्रेण दीक्षाफलमवाप्नुयात् ॥ १ ॥
समुद्रे मथ्यमाने तु क्षीराब्धौ सागरोत्तमे ।
तत्रोत्पन्ना सुरादेवी कुमारीरूपधारिणी ॥ २ ॥
नग्ना कालाग्निसदृशी कृतहासोल्लसन्मुखी ।
अष्टादशभुजा दिव्या नवकुम्भधरा तथा ॥ ३ ॥
नवपात्रधरा तद्वन्मदिरारुणलोचना ।
नानाकुसुमभूषाढ्या मुक्तकेशी त्रिलोचना ॥ ४ ॥
नानारत्नाङ्गदयुता मुक्ताहारलताञ्चिता ।
रक्तालाङ्गुलीयशोभाढ्या तुङ्गापीनस्तनाञ्चिता ॥ ५ ॥
विचित्ररत्नखचितकाञ्चीगुणनितम्बिनी ।
रत्नसिंहासनगता परमानन्ददायिनी ॥ ६ ॥
तां दृष्ट्वा तुष्टुवुर्देवीं ब्रह्मविष्णुमहेश्वराः ।
ससुरासुरगन्धर्वाः सेश्वराः ससदाशिवाः ॥ ७ ॥
तदा प्रसन्नवदना वरदानोद्यता सुरा ।
आदौ पात्रं ददौ दिव्यमानन्दरसपूरितम् ॥ ८ ॥
सदाशिवाय देवेशि स नत्वा पात्रमग्रहीत् ।
पात्राद् बिन्दुः पपातोर्व्यां जाता गुडलतास्ततः ॥ ९ ॥

बिन्दुपातात् कणा जातास्तेभ्यो जाताः सहस्रशः ।
इक्षुभेदाश्च खदिरास्त्र्यूषणाद्याः सितादयः ॥ १० ॥
क्रमुका नागवल्ली च स्रवन्तीति महेश्वरि ।
गौडी चैतद्युता प्रोक्ता सर्वार्थफलदायिनी ॥ ११ ॥
ततो ददौ परं पात्रमीश्वराय सुरा शिवे ।
पात्राद् बिन्दुः पपातोर्व्यां ततो जाताहिवल्लरी ॥ १२ ॥
बिन्दुपातकणेभ्योऽपि द्राक्षाभेदाः सहस्रशः ।
मृद्वीकाद्या महादेवि जाताः परमपावनाः ॥ १३ ॥
माध्वी प्रोक्ता महाविद्यासाधने[1] सर्वसिद्धिदा ।
ततो ददौ परं पात्रं रुद्रायामृतपूरितम् ॥ १४ ॥
पात्राद् बिन्दुः पपातोर्व्यां जाता गोधूमजातयः ।
तत्कणेभ्यो भदन्ती च जाता वै धान्यजातयः ॥ १५ ॥
पैष्टी प्रोक्ता सुरा देवि परमानन्ददायिनी ।
ततो ददौ परं पात्रं विष्णवे प्रभविष्णवे ॥ १६ ॥
पात्राद् बिन्दुः पपातोर्व्यां संविज्जाता ततः प्रिये ।
तत्कणेभ्योऽपि देवेशि तद्भेदाः कनकादयः ॥ १७ ॥
अन्ये च बहवो जाता भेदा मदनवर्धकाः[2] ।
विजयेति मया प्रोक्ता वैष्णवी परमार्थदा ॥ १८ ॥
संविदासवयोर्मध्ये संविदेव गरीयसी ।
ततो ददौ परं पात्रं श्रीसुरा परमेष्ठिने ॥ १९ ॥
पात्राद् बिन्दुः पपातोर्व्यां जातः शीघ्रं परूषकः ।
तत्कणेभ्योऽपि सञ्जाता भेदाः क्षौद्ररसादयः ॥ २० ॥
पानकं प्रोक्तमीशानि सर्वसाधारणं परम् ।
ततो ददौ परं पात्रमिन्द्रायामृतनिर्भरम्[3] ॥ २१ ॥

---

१ 'साधके' क. ख. घ. पाठः । २ 'वर्धनाः' ख.ग.पाठः । ३ 'पूरितं' क.ख.ग.घ. पाठः ।

पात्राद् बिन्दुः पपातोर्व्यां जातं जातीफलं ततः ।
तत्कणेभ्योऽपि सञ्जाता भेदाश्चामलकादयः ॥ २२ ॥
पानकं नाम तद् दिव्यं रसायनमुदाहृतम् ।
ततो ददौ परं पात्रं गुरवे गिरिजे सुरा ॥ २३ ॥
पात्राद् बिन्दुः पपातोर्व्यां गुडपुष्पं ततः शिवे ।
जातं तत्कणजा भेदा नारिकेलफलादयः ॥ २४ ॥
पानकं नाम देवेशि रसायनमिदं परम् ।
ततो ददौ परं पात्रं शुक्रायामृतपूरितम् ॥ २५ ॥
पात्राद् बिन्दुः पपातोर्व्यां जाताः खर्जूरपादपाः ।
तत्कणेभ्योऽपि सञ्जाता भेदा भादा[1]मकादयः ॥ २६ ॥
पानकं तदपि प्रोक्तं दिव्यं सन्तोषकारणम् ।
ततो ददौ परं पात्रं सूर्याचन्द्रमसोः सकृत्[2] ॥ २७ ॥
पात्राद् बिन्दुः पपातोर्व्यां जाता सञ्जीवनौषधिः ।
तत्कणेभ्योऽपि सञ्जाता विविधौषधयः शिवे ॥ २८ ॥
पानकं तदपि प्रोक्तं सर्वसाधारणं परम् ।
सर्वार्थफलदं देवि सर्वसारस्वतप्रदम् ॥ २९ ॥
दत्त्वा दिव्यं रसं देवी सुरा तत्र तिरोदधे ।
ते सर्वे परमेशानि सुरानन्दैकनिर्भराः ॥ ३० ॥
सदाशिवादयो देवाः सुरायै च वरं ददुः ।
ये पिबन्ति परं पानं परमानन्दकारणम् ॥ ३१ ॥
ते सर्वे यान्ति परमं पदं शाश्वतमव्ययम् ।
विना गौडीं तथा माध्वीं सुरां यः पूजयेच्छिवाम् ॥ ३२ ॥
शिवं नारायणं रुद्रं स भवेन्निरयास्पदम् ।
अदीक्षितः पशुर्देवि दीक्षितोऽप्यसुरः पशुः ॥ ३३ ॥

---

१ 'भाधामकादयः' ङ. पाठः । २ 'पृथक्' क. ख. पाठः ।

तस्मात् सुरां शिवेऽभ्यर्च्य पूजायां वैष्णवोत्तमः ।
पिबेद्गौडीं तथा माध्वीं पैष्टीमासवमुत्तमम् ॥ ३४ ॥
पानकं च शुभाः सर्वे पूर्वाभावे परः परः ।
इतीदं परमं तत्त्वं कौलिकानां रहस्यकम् ।
आनन्देश्वरसर्वस्वं गोपनीयं स्वयोनिवत् ॥ ३५ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये सुरोत्पत्तिनिरूपणमेकोनविंशः पटलः ॥ १९ ॥

अथ

## विंशः पटलः ।

श्रीभैरव उवाच ।

अधुना देवि वक्ष्येऽहं पात्रवन्दनमीश्वरि ।
तत्कालं यद्वदानन्दपात्रं देवैश्च वन्दितम् ॥ १ ॥
पूजायां पात्रमानन्दभरितं परमेश्वरि ।
गुरुणा दत्तमभ्यर्च्य प्रणमेच्छिरसा तदा ॥ २ ॥

श्रीमद्भैरवशेखरप्रविलसच्चन्द्रामृताप्लावितं
क्षेत्राधीश्वरयोगिनीगणमहासिद्धैः समाराधितम् ।

आनन्दागमकं महात्मकमिदं साक्षात् त्रिखण्डामृतं
वन्दे श्रीप्रथमं कराम्बुजगतं पात्रं विशुद्धिप्रदम् ॥ ३ ॥ *
हैमं सिन्धुरसावहं दयितया दत्तं च पेयादिभिः
किञ्चिच्चञ्चलरक्तपङ्कजदृशा सानन्दमुद्वीक्षितम्[1] ।
वामे स्वादुविशुद्धशुद्धिकवलं पाणौ विधायात्मके[2]
वन्दे पात्रमहं द्वितीयमधुनानन्दैकसंवर्धनम् ॥ ४ ॥
सर्वाम्नायकलाकलापकलितं कौतूहलोद्द्योतितं[3]
चन्द्रोपेन्द्रमहेन्द्रशम्भुवरुणब्रह्मादिभिः सेवितम् ।
ध्यातं देवगणैः परं मुनिगणैर्मोक्षार्थिभिः सर्वदा
वन्दे पात्रमहं तृतीयमधुना स्वात्मावबोधक्षमम् ॥ ५ ॥
मद्यं मीनरसावहं हरिहरब्रह्मादिभिः पूरितं[4]
मुद्रामैथुनधर्मकर्मनिरतं चाराम्लतिक्ताश्रयम्[5] ।
आचार्याष्टकसिद्धभैरवकलान्यासेन[6] संशोभितं
पायात् पञ्चमकारतत्त्वनिलयं पात्रं चतुर्थं नुमः ॥ ६ ॥
आधारे भुजगाधिराजवलये पात्रं महीमण्डलं
मद्यं सप्तसमुद्रवारि पिशितं चाष्टौ च दिग्दन्तिनः ।

---

* इदं ते पात्रं सनवित्तमिन्द्र पिबा सोममेना शतक्रतो । पूर्ण आहावो मदिरस्य मध्वो यं विश्व इदभिहर्यन्ति देवाः ( ऋ० १० । ११२ । ६ ) ॥ इदन्तापात्रसंभृतमहन्तापरमामृतम् । पराहन्तामये वह्नौ जुहोमि शिवरूपिणि ॥ इदं पवित्रममृतं पिबामि भवभेषजम् । पशुपाशसमुच्छेदकारणं भैरवोदितम् ॥ चितेः स्वातन्त्र्यसारत्वात् तस्यानन्दमयत्वतः । तन्मयत्वाच्च भावानां भावाश्चान्तर्हिता रसे ॥ स्वस्वातन्त्र्यविकासाय स्वरसः स्वेन पीयते । तस्मादिमां सुधारूपां पूर्णाहन्तां पिबाम्यहम् ॥ स्वात्ममूलत्रिकोणस्थे कोटिसूर्यसमप्रभे । कुण्डल्याकृतिचिद्रूपे हुनेद् द्रव्यं समन्त्रकम् ॥ इति घ. पुस्तकेऽधिकः पाठः क्षिप्तः । १ 'आनन्दमालोकितम्' घ. पाठः । २ 'विशुद्धशुद्धशकलं पाणौ निधाय स्वके' घ. पाठः । ३ 'लोद्द्योतनं' घ. पाठः । ४ 'सेवितं' घ. पाठः । ५ 'श्रितम्' घ. पाठः । ६ 'धीशेन' घ. पाठः । ७ 'सहितं' घ. पाठः । ८ 'द्रव्यं' घ. पाठः ।

सोऽहं भैरवमर्चयन् प्रतिदिनं तारागणैरच्चितै-[1]

राादित्यप्रमुखैः सुरासुरगणैराज्ञाकरैः किङ्करैः ॥ ७ ॥

सच्छत्रामलभद्रपीठपरमानन्दोदयादायकं[2]

रम्यं[3] राज्यकरं सदा सुखकरं सायुज्यसाम्राज्यदम् ।

नानाव्याधिभवान्धकारहरणं जन्मान्तरध्वंसनं

श्रीमद्भैरवभैरवीप्रियतरं पात्रं च षष्ठं नुमः ॥ ८ ॥

जाग्रत्स्वप्नसुषुप्तितुर्यपरतश्चैतन्यसाध्यप्रदं[4]

विद्युद्भास्करवह्निचन्द्रधनुषां[5] ज्योतिष्कलाव्यापितम् ।

येडापिङ्गलमध्यगा[6] त्रिवलया तस्याः[7] प्रबोधोद्धरं

पात्रं सप्तममूषणेन[8] तरुणानन्दप्रदं पातु माम् ॥ ९ ॥

खड्गं पात्रकमश्चलं[9] च गुटिकां कण्ठे हि सारस्वतं

शत्रोर्वाग्बलशौर्यकार्यहरणं[10] देहस्थितेः कारणम् ।

वाञ्छासिद्धिकरं[11] मनःस्थितिकरं वश्यं[12] जगद्योषितां

पात्रं चाष्टममष्टसिद्धिकरणं प्रौढप्रसन्नं[13] भजे ॥ १० ॥

सर्वानन्दकरं सदाशिवपदं सर्वार्थसंपत्प्रदं

साम्राज्यार्थकरं समस्तसुखदं चाज्ञानविध्वंसनम् ।

आयुःकान्तियशोविवर्धनकरं संसारमोहच्छिदं

पात्रं तत्त्वगुणात्मकं च नवमं प्रौढप्रतापं भजे ॥ ११ ॥

ब्रह्मविष्णुमहेशानां देवानां च विशेषतः ।

दुर्लभं पावनं पात्रं दशमं प्रणमाम्यहम् ॥ १२ ॥

पापघ्नं शान्तिशुभदं दिव्यं स्वादु सुखालयम् ।

---

१ 'सेवितं' घ. पाठः । २ 'छत्रं चामरभद्र' क. पाठः । ३ 'वाजीदन्तिमनोहरं' क. पाठः । ४ 'बोधपवनं' क. पाठः । ५ 'चन्द्रजिष्णुधनुषां' घ. पाठः । ६ 'वामा' ख. पाठः । ७ 'सतकुण्डली चोर्ध्वगा' ख. पाठः । ८ 'सपूरणेन' घ. पाठः । ९ 'पादुकमञ्जलं' ख. ङ. पाठः । 'श्रीगुरुपादुकाच तिलकं' घ. पाठः । १० 'बुद्धि' ख. घ. पाठः । ११ 'वाचा' क. पाठः । १२ 'चावर्जनं योषिताम्' ख. घ. पाठः । १३ 'प्रपन्नं' क. पाठः ।

पात्रमेकादशं वन्दे गुरुसेवासुखागतम् ॥ १३ ॥
पात्रं कृत्वा करे मन्त्री सर्वकर्म लभेत् सुखी ।
इह लोके श्रियं भुक्त्वा देहान्ते भैरवो भवेत् ॥ १४ ॥

देहस्थाखिलदेवता गजमुखाः क्षेत्राधिपा भैरवाः
योगिन्यो वटुकाश्च यक्षपितरः पैशाचिकाश्चेटकाः ।
अन्ये भूचरखेचराः प्रतिपगा वेतालभूतग्रहा-
स्तृप्ताः स्युः कुलपुत्रकस्य पिबतः पानं सदीपं चरुम् । १५ ।

(करे माला मुखे हाला वामे रामा सुकोमला ।
हृदये त्रिपुरा बाला यागशाला गृहे गृहे ॥ १६ ॥
पात्रं भैरवपात्रं गोत्रं श्रीनाथपादुकागोत्रम् ।
शास्त्रं संविच्छास्त्रं ज्ञानं तत्त्वावबोधकं ज्ञानम् ॥ १७ ॥)

वामे रामा रमणकुशला दक्षिणे चालिपात्र-
मग्रे मुद्राश्चणकवटकौ सूकरस्योष्णशुद्धिः[1] ।
स्कन्धे[2] वीणा सरसमधुरा सद्गुरोः सत्कथा च
कौलो मार्गः परमगहनो योगिनामप्यगम्यः ॥ १८ ॥

अलिपिशितपुरन्ध्री-भोगपूजापरोऽहं
बहुविधकुलमार्गारम्भसंभावितोऽहम् ।
पशुजनविमुखोऽहं भैरवीमाश्रितोऽहं
गुरुचरणरतोऽहं भैरवोऽहं शिवोऽहम् ॥ १९ ॥

करे पात्रं मुखे स्तोत्रमानन्दो हृदयान्तरे[3] ।
भक्तिर्गुरुपदाम्भोजे शरणं[4] किमतः परम् ॥ २० ॥

एकेन शुष्कवटकेन घटं पिबामि
वापीं पिबामि सहसा लवणार्द्रकेण ।

---

१ 'समं माक्षिकम्' क. पाठः । २ 'तन्त्रीवीणा सरसकविता सद्गुरुः सत्कथायां' ख. पाठः ।
३ 'हृदयाम्बुजे' क. ख. पाठः । ४ 'स्मरणं' ख. पाठः ।

आस्वाद्य मांसमलिरोहितमुण्डखण्डं
गङ्गां पिबामि यमुनां सह सागरेण ॥ २१ ॥
वामे चन्द्रमुखी मुखे च मदिरा पात्रं कराम्भोरुहे
मूर्ध्नि श्रीगुरुचिन्तनं भगवतीध्यानास्पदं मानसम् ।
जिह्वायां जपसाधनं परिणतिः कौलक्रमाभ्यासने
ये सन्तो नियतं पिबन्ति सुरसं ते भुक्तिमुक्ती गताः ॥ २२ ॥
पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले ।
पुनरुत्थाय वै पीत्वा पुनर्जन्म न विद्यते ॥ २३ ॥
धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा ।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥ २४ ॥
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचम्[1] ।
धर्माधर्मकलास्नेहपूर्णां[2] वह्नौ जुहोम्यहम् ॥ २५ ॥
यावन्न चलते दृष्टिर्यावन्न चलते मनः ।
तावत् पानं प्रकर्तव्यं पशुपानमतः परम् ॥ २६ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये पात्रवन्दनविधि-
निरूपणं विंशः पटलः ॥ २० ॥

---

१ 'स्रुचा' क. पाठः । २ 'पूर्णवह्नौ' ङ. पाठः ।

अथ

# एकविंशः पटलः ।

श्रीभैरव उवाच ।

देवि वक्ष्यामि पूजान्ते शान्तिस्तोत्रमनुत्तमम् ।
वीरा येन परानन्दपदं प्राप्स्यन्ति निःस्पृहाः ॥ १ ॥
योगिनीचक्रमध्यस्थं मातृमण्डलवेष्टितम् ।
नमामि शिरसा नाथं भैरवं भैरवीप्रियम् ॥ २ ॥
अनादिघोरसंसार-व्याधिध्वंसैकहेतवे ।
नमः श्रीनाथवैद्याय कुलौषधप्रदायिने ॥ ३ ॥
आपदो दुरितं रोगाः समयाचारलङ्घनात् ।
ते सर्वेऽत्र व्यपोहन्तु दिव्यचक्रस्य मेलनात् ॥ ४ ॥
आयुरारोग्यमैश्वर्यं कीर्तिर्लाभः सुखं जयः ।
कान्तिर्मनोरथश्चास्तु पान्तु सर्वाश्च देवताः ॥ ५ ॥

संपूजकानां [1]प्रतिपालकानां
यतीन्द्रयोगीन्द्रतपोधनानाम् ।
देशस्य राष्ट्रस्य कुलस्य राज्ञः[2]
करोतु शान्तिं भगवान् कुलेशः ॥ ६ ॥
नन्दन्तु साधककुलान्वयदर्शका ये
सृष्ट्याद्य[3]नाख्यचतुरुक्रमहान्वया ये ।
नन्दन्तु सर्वकुलकौलरताः परे ये-
ऽप्यन्ये[4] विशेषपदभेदकशाम्भवा ये ॥ ७ ॥

---

१ 'परि' ख.घ. पाठः। २ 'नित्यं' ग.घ.पाठः। ३ 'सृष्टा' क.ख.पाठः। ४ 'प्यन्ते' क.ख.पाठः।

नन्दन्तु सिद्धगुरवः स्वगुरुक्रमौघा
ज्येष्ठानुगाः समयिनो वटुकाः कुमार्यः ।
षड्योगिनीप्रवरवीरकुलप्रसूता
नन्दन्तु भूमिपतिगोद्विजसाधुलोकाः ॥ ८ ॥

नन्दन्तु नीतिनिपुणा निरवद्यनिष्ठा
निर्मत्सरा निरुपमा निरुपद्रवाश्च ।
नित्या निरन्तररता[1] गुरवो निरीहाः
शाक्ताश्च शान्तमनसो हृतशोकशङ्काः ॥ ९ ॥

नन्दन्तु योगनिरताः कुलयोगयुक्ता
आचार्यसामयिकसाधक[2]पुत्रकाश्च ।
गावो द्विजा युवतयो यतयः कुमार्यो
धर्मे भवन्तु निरता गुरुभक्तियुक्ताः ॥ १० ॥

नन्दन्तु साधककुला ह्यणिमादिनिष्ठाः
शापाः पतन्तु द्विषतः[3] कुलयोगिनीनाम् ।
सा शाम्भवी स्फुरतु कापि ममाप्यवस्था
यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ॥ ११ ॥

याश्चक्रक्रमभूमिकावसतयो नाडीषु याः संस्थिता
याः कायद्रुमरोमकूपनिलया याः संस्थिता धातुषु ।
उच्छ्वासोर्मिमरुत्तरङ्गनिलया निःश्वासवासाश्च या-
स्ता देव्यो रिपुभक्षणोद्यमपरास्तृप्यन्तु कौलार्चिताः ॥ १२ ॥

या दिव्यक्रमपालिकाः क्षितिगता या देवतास्तोयगा
या नित्यं प्रथितप्रभाः शिखिगता या मातरिश्वाश्रयाः ।
या व्योमामृतमण्डलामृतमया याः सर्वदा सर्वगा-
स्ताः सर्वाः कुलमार्गपालनपराः शान्तिं प्रयच्छन्तु मे ॥ १३ ॥

---

१ 'निरञ्जन' ङ. पाठः । २ 'साधन' क. ख. पाठः । ३ 'द्विषतां' क. ख. पाठः ।

ऊर्ध्वं ब्रह्माण्डतो वा दिवि भुवनतले भूतले निस्तले[1] वा
पातले वा तले वा पवनसलिलयोर्यत्र कुत्र स्थिता वा ।
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिमांसैः
प्रीत्या देव्यः सदा वः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः ।१४।

ब्रह्मा श्रीशेषदुर्गागुहवटुकगणा भैरवाः क्षेत्रपाला
वेतालादित्यरुद्रग्रहवसुमनुसिद्धाप्सरोगुह्यकाद्याः ।
भूता गन्धर्वविद्याधरऋषिपितृयक्षासुराहिप्रभूता
योगीशाश्चारणाः किंपुरुषमुनिसुराश्चऋगाः पान्तु सर्वे ॥ १५ ॥

सत्यं चेद्गुरुवाक्यमेव पितरो देवाश्च[2] चेद्योगिनी-
प्रीतिश्चेत् परदेवता च यदि चेद्वेदाः प्रमाणांश्च[3] चेत् ।
शाक्तेयं यदि दर्शनं भवति चेदाज्ञेयमेषा(माशा)स्ति चेत्
सन्त्यत्रापि च कौलिकाश्च यदि चेत् स्यान्मे जयः सर्वदा ।१६।

तृप्यन्तु मातरः सर्वाः समुद्राः सगणाधिपाः ।
योगिन्यः क्षेत्रपालाश्च मम देहे व्यवस्थिताः ॥ १७ ॥
शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्यादिशिवान्तं च जगद्यज्ञेन तृप्यतु ॥ १८ ॥
पठित्वेदं नमेद् वीरान् वीरवन्दनमाचरेत् ।
स्तवेद् वीरान्नमेद् वीरान् मन्त्रसिद्धिः प्रजायते ॥ १९ ॥

इति शान्तिस्तोत्रम् ॥ अथ वीरवन्दनस्तोत्रम् ।

जगत्त्रयाभ्यर्चितशासनेभ्यः
परार्थसंपादनकोविदेभ्यः ।
समुद्धृतक्लेशमहोरगेभ्यो
नमो नमः साधकनायकेभ्यः ॥ २० ॥

---

१ 'निष्कले' क. ङ. पाठः । २ 'पितृदेवाः शेषवद्' क. ङ. पाठः । ३ 'प्रमाणं' घ. पाठः ।

प्रहीणसर्वा[1]स्रववासनेभ्यः
सर्वार्थतत्त्वोदितसाधनेभ्यः[2] ।
सर्वप्रजाभ्युद्धरणोद्यतेभ्यो
नमो नमः साधकनायकेभ्यः ॥ २१ ॥

निस्तीर्णसंसारमहार्णवेभ्य-
स्तृष्णालतो[3]न्मूलनतत्परेभ्यः ।
जरारुजामृत्युनिवारकेभ्यो
नमो नमः साधकनायकेभ्यः ॥ २२ ॥

सद्धर्मरत्नाकरभाजनेभ्यो
निर्वाणमार्गोत्तमदेशिकेभ्यः ।
सर्वत्र संपूर्णमनोरथेभ्यो
नमो नमः साधकनायकेभ्यः ॥ २३ ॥

लोकानुकम्पाभ्यु[4]दितादरेभ्यः
कारुण्यमैत्रीपरिभावितेभ्यः ।
सर्वार्थचर्यापरिपूरकेभ्यो
नमो नमः साधकनायकेभ्यः ॥ २४ ॥

विध्वस्तनिशेषकुवासनेभ्यो
ज्ञानाग्निना दग्धमलेन्धनेभ्यः ।
प्रज्ञाप्रतिज्ञापरिपूरकेभ्यो
नमो नमः साधकनायकेभ्यः ॥ २५ ॥

सर्वार्थिताशापरिपूरकेभ्यो
वैनेयपद्माकरबोधके[5]भ्यः ।
विस्तीर्णसर्वार्थगुणाकरेभ्यो
नमो नमः साधकनायकेभ्यः ॥ २६ ॥

---

१ 'सर्वार्थकु' क. पाठः । २ 'वासनेभ्यः' क. पाठः । ३ 'लवो' क. ख. पाठः ।
४ 'द्यु' ख. पाठः । ५ 'बोधनेभ्यः' ख. पाठः ।

अनन्तकर्मार्जितशासनेभ्यो
　　ब्रह्मेन्द्ररुद्रादिनमस्कृतेभ्यः ।
परस्परानुग्रहकारकेभ्यो
　　नमो नमः साधकनायकेभ्यः ॥ २७ ॥
विभग्नभूतादिमहाभयेभ्यो
　　मपञ्चकाचारपरायणेभ्यः ।
समस्तसौभाग्यकलाकरेभ्यो
　　नमो नमः कारणनायकेभ्यः ॥ २८ ॥
विभक्तदुष्कर्मजवासनेभ्यः
　　समन्ततो जुष्टमहायशोभ्यः ।
लभ्यामलज्ञानकृतास्पदेभ्यो
　　नमो नमः शाम्भविशाम्भवेभ्यः ॥ २९ ॥
सर्वागमाम्भोधिमहाप्लवेभ्यः
　　श्रीचक्रपूजार्थपरायणेभ्यः ।
श्रीवीरचर्याचरणक्षमेभ्यो
　　नमो नमः शाम्भविशाम्भवेभ्यः ॥ ३० ॥
श्रीमन्त्रकोटिद्युतिभूषणेभ्यो
　　द्वाविंशदुल्लासदशातिगेभ्यः ।
अद्वैततत्त्वामृतभाजनेभ्यो
　　नमो नमः शाम्भविशाम्भवेभ्यः ॥ ३१ ॥
षट्त्रिंशतालक्षणभूषितेभ्यः
　　प्रोत्फुल्लपद्माकरलोचनेभ्यः ।
प्रतप्तचामीकरविग्रहेभ्यो
　　नमो नमः शाम्भविशाम्भवेभ्यः ॥ ३२ ॥

---

१ 'विभग्न' क. ख. पाठः । २ 'व' ख. ग. पाठः । एवमग्रेऽपि ।

सम्बोधसंभारसुसंस्थितेभ्यः
संसारनिर्वाणनिदर्शनेभ्यः[1] ।
महाकृपावेष्टितमानसेभ्यो
नमो नमः शाम्भविशाम्भवेभ्यः ॥ ३३ ॥

परैक्यविज्ञानरसाकुलेभ्यो
वामाश्रिताचारभयानकेभ्यः ।
स्वातन्त्र्यविध्वस्तजगत्तमोभ्यो
नमो नमः शाम्भविशाम्भवेभ्यः ॥ ३४ ॥

श्मशानचर्याप्तमहाफलेभ्यो
मोहान्धकारापहृतिक्षमेभ्यः ।
परस्पराज्ञापरिपालकेभ्यो
नमो नमः शाम्भविशाम्भवेभ्यः ॥ ३५ ॥

विधूतकेशालिकपालकेभ्यः
सुरासवारक्तविलोचनेभ्यः ।
नवीनकान्तारत—तत्परेभ्यो
नमो नमः शाम्भविशाम्भवेभ्यः ॥ ३६ ॥

विभूतिलिप्ताङ्गदिगम्बरेभ्य-
श्चिताग्निधूमालिभयानकेभ्यः ।
कपालसान्द्रामृत[2]पानकेभ्यो
नमो नमो भैरवभैरवेभ्यः ॥ ३७ ॥

सिद्ध्यष्टकाधान[3]महामुनिभ्यः
श्रीभैरवाचारकृतादरेभ्यः[4] ।
स्वाधीनतान्यक्कृतनिर्जरेभ्यो
नमो नमो भैरवभैरवेभ्यः ॥ ३८ ॥

---

१ 'निर्वाणविदर्शकेभ्यः' क. ङ. पाठः । २ 'पात्रामृत' घ. ङ. पाठः । ३ 'दान' क. घ. ङ पाठः । ४ 'कृतास्पदेभ्यः' घ. पाठः ।

प्रशान्तशास्त्रार्थविचारकेभ्यो
निवृत्तनानारसकाव्यकेभ्यः ।
निरस्तनिःशेषविकल्पनेभ्यो
नमो नमो भैरवभैरवेभ्यः ॥ ३९ ॥
स्वात्मैक्यभावान्तरिताशयेभ्यः
सायुज्यसाम्राज्यसुखाकरेभ्यः ।
श्रीसच्चिदानन्दितविग्रहेभ्यो
नमो नमो भैरवभैरवेभ्यः ॥ ४० ॥
पराप्रसादास्पदमानसेभ्यो
ब्रह्माद्वयज्ञानरसाकुलेभ्यः ।
शिवोऽहमित्याश्रितचेतनेभ्यो
नमो नमो भैरवभैरवेभ्यः ॥ ४१ ॥
सर्वथा सर्वदानन्दं सर्वं घटपटादिसत्[1] ।
जगज्जनितविस्तारं ब्रह्मेदमिति वेद्म्यहम् ॥ ४२ ॥
अहमेव परो हंसः शिवः परमकारणम् ।
मत्प्राणे स तु मच्चात्मा लीनः समरसीगतः ॥ ४३ ॥
सच्चिदानन्दनिलयं परापरमकारणम् ।
शिवाद्वयप्रकाशाढ्यं श्यामलं धाम धीमहि ॥ ४४ ॥
अनेन वीरस्तवकीर्तनेन
समुद्धृतक्लेशसुवासनोऽहम् ।
संसारकान्तारमहार्णवेऽस्मिन्-
निमज्जमानं जगदुद्धरेयम् ॥ ४५ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये शान्तिस्तोत्र-
वीरवन्दना-निरूपणमेकविंशः पटलः ॥ २१ ॥

---

१ 'सर्वे' ङ. पाठः । २ 'मत्' क. ख. पाठः ।

अथ

# द्वाविंशः पटलः ।

श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि सुराशुद्धिविधिं परम् ।
यं विधाय कलौ मन्त्री भविता मुक्तिभाजनम् ॥ १ ॥
यैरेव पातकी देवि साधको द्रव्यसङ्करैः[१] ।
शुद्धैस्तैरेव पूजायां भवेद्भोगापवर्गभाक् ॥ २ ॥
यदा प्रभृति लोकेऽस्मिन् सुरा ख्यातिमुपागता ।
तदा सर्वे सुरा देवि ब्रह्मविष्णुहरादयः ॥ ३ ॥
तत्संसर्गोद्भवोनन्द-निर्भरान्तरमानसाः[२] ।
असुरा राक्षसा यक्षा गन्धर्वा मानवादयः ॥ ४ ॥
भजन्ति च सुरां दिव्यां मन्त्रसंस्कारमन्त्रिताम् ।
कालेन कलशस्थाभूत् सुरादेवी सुरेश्वरि ॥ ५ ॥
कलिना कालरूपेण बाधिते जगति प्रिये ।
शप्ता शुक्रेण देवेशि कचकारणहत्यया ॥ ६ ॥
शुक्रशापवशाद् देवा ब्रह्मविष्णुशिवादयः ।
ब्रह्मर्षयः सुरादेव्यै ददुः शापं यथाक्रमम् ॥ ७ ॥
ब्रह्महत्या सुरापानं समं ज्ञेयं महेश्वरि ।
सुरा शप्ता यदा देवैस्तदा दैत्या मुदं ययुः ॥ ८ ॥
सुरां पीत्वा तु दितिजैर्देवा बलविवर्जिताः ।
स्वर्गान्निराकृता देवि पुरन्दरपुरःसराः ॥ ९ ॥

---

१ 'मद्यपैः' ख. पाठः । २ 'र्गोत्सवा' क. ख. पाठः ।

तदा जिष्णुं पुरस्कृत्य देवा यज्ञमतन्वत ।
सदाशिवादयो देवि प्रादुर्भूता मखोत्तमे ॥ १० ॥
वरं वृणु यथाभीष्टं देवनायक सांप्रतम् ।
तं तवाशु प्रयच्छामो गच्छामो निलयं स्वकम् ॥ ११ ॥
तदा शक्रोऽब्रवीद् देवि पुरस्कृत्य गुरं शिवे ।
तृणाग्रबिन्दुमात्रेण सुरायाः प्राशितेन च ॥ १२ ॥
या तृप्तिर्जायतेऽस्माकं न सामृतघटीशतैः ।
सा शप्ता ब्रह्मणा देवी विष्णुना शङ्करेण च ॥ १३ ॥
तां विना निर्बला जाताः शत्रुभिश्च पराजिताः ।
तदा सर्वे सुरा देवं शिवमीश्वरमव्ययम् ॥ १४ ॥
तुष्टुवुः परया भक्त्या प्रणिपत्य पुनः पुनः ।
एकाक्षराय रुद्राय अकारायात्मरूपिणे ॥ १५ ॥
उकारायादिदेवाय विद्यादेहाय वै नमः ।
तृतीयाय मकाराय शिवाय परमात्मने ॥ १६ ॥
सूर्याय सोमवर्णाय यजमानाय वै नमः ।
नमस्ते भगवन् रुद्र भास्करामिततेजसे ॥ १७ ॥
नमो भवाय देवाय शर्वाय च कपर्दिने ।
शिवाय क्षितिरूपाय सदासुरभये[2] नमः ॥ १८ ॥
ईशानाय नमस्तुभ्यं संस्पर्शाय नमो नमः ।
पशूनां पतये चैव पावकामिततेजसे ॥ १९ ॥
भीमाय व्योमरूपाय शब्दमात्राय वै नमः ।
महादेवाय सोमाय अमृताय नमो नमः ॥ २० ॥
उग्राय यजमानाय नमस्ते कर्मयोगिने[3] ।
इति स्तुत्वा परं देवं भैरवं शिवमीश्वरम् ॥ २१ ॥

---

१ 'शक्राद्या' क. ग. घ. पाठः । २ 'भिदे' घ. पाठः । ३ 'रूपिणे' क. ख. ग. पाठः ।

प्रणेमुः सकला देवा ब्रह्मविष्णुहरादयः ।
तदा वागुदभूद् व्योम्नः पञ्चव्योमशरीरिणाम् ॥ २२ ॥
सुरेयं सर्वदा सेव्या सकलैस्तु मुमुक्षुभिः ।
युक्त्यानया प्रसङ्गेन यथावदनुपूर्वशः ॥ २३ ॥
चतुर्धा वेदरूपोऽहमृग्यजुःसामरूपवान् ।
अथर्वाहं च मन्त्रात्मा परमात्मा शिवोऽव्ययः ॥ २४ ॥
वेदानालोड्य वेदार्थं मन्त्ररूपं विधाय च ।
कुरुकुल्लां महाविद्यां सदाशिव प्रकाशय ॥ २५ ॥
आगमं नाम शास्त्रं तु चतुष्षष्ट्यात्मकं परम् ।
तस्मिन् सुरादिशुद्धिं तु प्रकाशय मनूत्तमैः ॥ २६ ॥
इति वाणी शिवोद्भूता विरराम यदा परा[1] ।
सदाशिवं महेशानं तुष्टुवुः प्रणताः सुराः ॥ २७ ॥
ओंकाररूपिणे देव नमस्ते विश्वरूपिणे ।
नमो देवादिदेवाय महादेवाय वै नमः ॥ २८ ॥
अर्धनारीशरीराय सांख्ययोगप्रवर्तिते ।
वेदशास्त्रार्थगम्याय शाश्वताय नमो नमः ॥ २९ ॥
दीनार्तत्राणकर्त्रे च नमस्ते दिव्यचक्षुषे ।
नमः सहस्रशीर्षाय नमः साहस्रिकाङ्घ्रये ॥ ३० ॥
नमो मन्त्राय चिद्व्योमवासिने परमात्मने ।
इति स्तुत्वा महादेवो महात्मा श्रीसदाशिवः ॥ ३१ ॥
प्रोवाचागमशास्त्रं तु मोक्षमार्गं महात्मनाम् ।
देवदेवीति या देवी या भवानीति विश्रुता ॥ ३२ ॥
सदाशिवं प्रणम्याशु प्रोवाच श्लक्ष्णया गिरा ।
वद देवागमं शास्त्रं रहस्यं परमाद्भुतम् ॥ ३३ ॥

---

१ 'तदा' क पाठः ।

यस्योच्चारणमात्रेण शापहीना भवेत् सुरा ।

श्रीशिव उवाच ।

शृणु देवि प्रवक्ष्यामि सुराशुद्धिं यथाक्रमम् ।
मकाराणां च सर्वेषां शोधनं सिद्धिवर्धनम् ॥ ३४ ॥
वेदो निष्कलशब्दो वै वेदार्थोऽस्त्यागमः शिवे ।
वेदार्थागमतत्त्वज्ञैः सुरा सेव्या मुमुक्षुभिः ॥ ३५ ॥
न वेदागमयोर्भेदः सर्वथेति विनिश्चयः ।
शास्त्राणां परमेशानि भ्रान्तिः कार्या न कौलिकैः ॥ ३६
अधुना शृणु देवेशि सुराशोधनमुत्तमम् ।
येन शोधनमात्रेण सर्वसिद्धिः प्रजायते ॥ ३७ ॥
मण्डलं वामतः कृत्वा जलेन रजसापि वा ।
कुङ्कुमेनाष्टगन्धेन सर्वथा वीरभस्मना ॥ ३८ ॥
त्रिकोणं बिन्दुसंयुक्तं वृत्तं च चतुरश्रकम् ।
सामान्यार्घ्योदकेनाशु संप्रोक्ष्य कुलसुन्दरि ॥ ३९ ॥
तत्राधारं च संस्थाप्य वह्निमण्डलमर्चयेत् ।
वह्नेः कलाः समभ्यर्च्य यथावद्वर्ण्यते मया ॥ ४० ॥
रकारं बिन्दुसंयुक्तं वह्निबिम्बं च ङेऽन्तिकम् ।
दशकलात्मने विश्वमिति मन्त्रेण पूजयेत् ॥ ४१ ॥
धूम्रा च नीलवर्णा च कपिला विस्फुलिङ्गिनी ।
ज्वाला हैमवती कव्यवाहनी हव्यवाहनी ॥ ४२ ॥
रौद्री सङ्कर्षणी चैव वैश्वानरकला दश ।
पूजयित्वोक्तविधिना गन्धाक्षतप्रसूनकैः ॥ ४३ ॥
कलशं संस्थुलं दिव्यं पुष्पमालादिशोभितम् ।
हैमं वा राजतं मार्दं स्थापयेद् वीरमुद्रया ॥ ४४ ॥
शम्भुना च यथा देवि विष्णुना च यथा पुरा ।

ब्रह्मणा च यथा पूर्वं तथा त्वां स्थापयाम्यहम् ॥ ४५ ॥
इति संस्थाप्य कलशं तत्र सूर्यं प्रपूजयेत् ।
सूर्यनाम समुच्चार्य जीवमन्त्रं महेश्वरि ॥ ४६ ॥
सूर्यमण्डलङेन्तं च श्रीद्वादशकलात्मने ।
विश्वमन्ते प्रयोक्तव्यं मनुनानेन पूजयेत् ॥ ४७ ॥
कला द्वादश सूर्यस्य पूजयेदुच्यते मया ।
तपिनी तापिनी चैव बोधिनी चैव रोधिनी ॥ ४८ ॥
कलिनी शोषणी चैव वरेण्याकर्षणी तथा ।
माया विश्वावती हेमप्रभा सौरकला इमाः ॥ ४९ ॥
संपूज्य कलशे देवि कौलिकः कुलसिद्धये ।
सुरया पूरयेत् कुम्भं विलोमैर्मातृकाक्षरैः ॥ ५० ॥
तदिदं चामृतं साक्षाच्चन्द्ररूपं विचिन्तयेत् ।
चन्द्रमण्डलमभ्यर्च्य मन्त्रेणानेन पार्वति ॥ ५१ ॥
शक्तिमुच्चार्य देवेशि सोममण्डलङेयुतम् ।
विश्वाश्वलाय देवेशि श्रीषोडशकलात्मने ॥ ५२ ॥
इति संपूज्य चन्द्रस्य कलाः षोडश पूजयेत् ।
अमृता मानदा तुष्टिः पुष्टिः प्रीती रतिस्तथा ॥ ५३ ॥
श्रीश्च ह्रीश्च स्वधा रात्रिर्ज्योत्स्ना हैमवती तथा ।
छाया च पूर्णिमा नित्या चामावस्या च षोडशी ॥ ५४ ॥
एताः संपूज्य मन्त्रैस्तु यजेद् देवीं च भैरवीम् ।
मूलेन तत्र कलशे त्रिकोणं च विभावयेत् ॥ ५५ ॥
बिन्दुबिम्बे परां ध्यात्वा पूजयेदिष्टदेवताम् ।
प्रणवेनार्चयेद् देवि शिवं गन्धेन वायुना ॥ ५६ ॥
तत्र तारं च मायां च परमस्वामिन्युद्धरेत् ।

---

'बिम्बपरां' क. ख. ग. पाठः ।

परमाकाशशून्यं च वाहिनीति समुद्धरेत् ॥ ५७ ॥
चन्द्रार्काग्निभक्षणीति पात्रे विश-युगं वदेत् ।
ठद्वयान्तामिमां विद्यां जपेत्तु दशधा घटे ॥ ५८ ॥
तत्रैव मातृकान्ते च जपेदृचमिमां प्रिये ।
आकृष्णेन रजसेति नाम्नीं परमपावनीम् ॥ ५९ ॥
दशधैतामृचं देवि मधुवातऋताभिधाम् ।
तत्रानन्देशगायत्रीं जपेत्तु दशधा प्रिये ॥ ६० ॥
वाङ्मायामाः समुच्चार्य तथानन्देश्वराय च ।
विद्महे श्रीसुरादेव्यै धीमहीति ततो वदेत् ॥ ६१ ॥
तन्नोऽर्धनारीश्वरश्च प्रचोदयात् समुद्धरेत् ।
गायत्रीं दशधा जप्त्वा हंसः शुचिषदार्चयेत् ॥ ६२ ॥
अग्निमीळे पुरोहितं त्रिःसञ्जप्येति कौलिकः ।
वकारं दीर्घषट्काद्यं प्रोच्चार्य तदनन्तरम् ॥ ६३ ॥
ब्रह्मशापमोचितायै सुरादेव्यै कुटान्तकम् ।
दशधा प्रजपेद्विद्यामिषे त्वोर्जेत्यृचं जपेत् ॥ ६४ ॥
तारं मायार्णषड्दीर्घान् प्रोच्चार्येति सुधे ततः ।
शुक्रशापं मोचय द्विर्वनान्तं च मनुं जपेत् ॥ ६५ ॥
अग्न आयाहीति ऋचं दशधा प्रजपेत् प्रिये ।
शुक्रशापहरीं विद्यां प्रजपेदुच्यते यथा ॥ ६६ ॥
सूर्यमण्डलसंभूते वरुणालयसंभवे ।
अमाबीजमये देवि शुक्रशापाद्विमुच्यताम् ॥ ६७ ॥
देवानां ( वेदानां ) प्रणवो बीजं ब्रह्मानन्दमयं यदि ।
तेन सत्येन देवेशि ब्रह्महत्या व्यपोहतु ॥ ६८ ॥
एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं परम् ।

---

'मया' ख. पाठः ।

कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥ ६९ ॥
ब्रह्मशापविनिर्मुक्ता त्वं मुक्ता विष्णुशापतः ।
विमुक्ता रुद्रशापेन पवित्रा भव सांप्रतम् ॥ ७० ॥
एतैर्मन्त्रैः समभ्यर्च्य त्रिवारं कौलिकः शिवे ।
शन्नो देवीरिति ऋचं दशधा प्रजपेद् घटे ॥ ७१ ॥
ततो मायां रमां देवि पङ्कं षड्दीर्घभाजितम् ।
छुरिकाकारिण्युच्चार्य शोभिनीति ततो वदेत् ॥ ७२ ॥
विकारानस्य द्रव्यस्य हर-युग्मं च ठद्वयम् ।
छुरिकाख्यां जपेद्विद्यां दशधा कलशोपरि ॥ ७३ ॥
यो विश्वचक्षुरिति च ऋचं वै दशधा जपेत् ।
गुरुं ध्यात्वा सहस्रारे हृत्पद्मेऽपीष्टदेवताम् ॥ ७४ ॥
प्रणम्य कौलिको ध्यायेत् श्रीतिरस्करणीं जपेत् ।
नीलतोयदसङ्काशां नीलकुन्तलशोभिताम् ॥ ७५ ॥
नीलाम्बरधरां देवीं नीलोत्पलविलोचनाम् ।
नीलपुष्पविभूषाढ्यां नीलालङ्कारभूषिताम् ॥ ७६ ॥
नीलाङ्गरागसंछन्नां नीलवैडूर्यमालिनीम् ।
इन्द्रनीलनिबद्धांशुमहार्घमणिभूषिताम् ॥ ७७ ॥
नीलवाजिसमारूढां नीलखड्गायुधां पराम् ।
निद्रापटेन नीलेन भुवनानि चतुर्दश ॥ ७८ ॥
मोहयन्तीं महायायां द्रव्यनिन्दकभक्षिणीम् ।
वीरपानरतान् वीरान् पालयन्तीं समन्ततः ॥ ७९ ॥
सङ्केतमण्डलं दिव्यं छादयन्तीं स्ववाससा ।
परमानन्दवपुषीं परमानन्दभैरवीम् ॥ ८० ॥
परमानन्दजननीं प्रणमामि पराम्बिकाम् ।

---

१ 'तां' ङ. पाठः । २ 'धाम्बराम्' क. ख. पाठः ।

इति ध्यात्वा जपेद्विद्यां यथावद् वर्ण्यते मया ॥ ८१ ॥
वाक्कामठमायाश्च तिरस्करणि संवदेत् ।
सकलजनं प्रोच्चार्य वाग्वादिनि ततो वदेत् ॥ ८२ ॥
सकलपशुजनं च वदेद् व्रातमनःपदम् ।
चक्षुःश्रोत्रजिह्वाघ्राणादीनि चेति तिरस्कुरु ॥ ८३ ॥
तिरस्कुरु ततः पञ्चत्रयं ठद्वयमुद्धरेत् ।
श्रीतिरस्करणीं विद्यां सञ्जपेद् दशधा घटे ॥ ८४ ॥
पावमान्याः परं ब्रह्म शुद्धं ज्योतिः सनातनम् ।
पितॄंस्तस्योपतिष्ठति क्षीरं सर्पिर्मधूदकैः[1] ॥ ८५ ॥
ऋचमेतां जपेदादौ त्रिवारं त्रिर्जपेद् ततः ।
पावमान्यं परं ब्रह्म पावमान्यः परो रसः ॥ ८६ ॥
पावमान्यं परं ज्ञानं तेन त्वां पावयाम्यहम् ।
इति जप्त्वा गुरुं ध्यात्वा जपेद् वरुणबीजकम् ॥ ८७ ॥
हंस इत्यर्कमन्त्रं च देवीं कुण्डलिनीं स्मरेत् ।
प्रसुप्तभुजगाकारां सार्धत्रिवलयां शुभाम् ॥ ८८ ॥
सूर्यकोटिकरालाभां चन्द्रकोटिसुशीतलाम् ।
वह्निकोटिदुराद(ध)र्षां बिसतन्तुतनीयसीम् ॥ ८९ ॥
षट् चक्राणि विभिद्याशु सुषुम्नावर्त्मना नयेत् ।
सहस्रारस्थितं देवं नत्वा शिवपदे लयेत् ॥ ९० ॥
शिवशक्त्योर्महज्ज्योतिर्ध्यात्वा चन्द्रकलास्रुतम् ।
अमृतं वामनासाग्रान्निःसार्य कलशे क्षिपेत् ॥ ९१ ॥
अमृतीकृत्य तद् द्रव्यं धेनुमुद्रां प्रदर्शयेत् ।
मायां रमां कामकलाममृतेऽप्यमृतोद्भवे ॥ ९२ ॥
अमृतवर्षिण्युच्चार्य अमृतं स्रावय-द्वयम् ।
अंआं विष्णुकलान्ते च पठेत् पार्वति कौलिकः ॥ ९३ ॥

---

[1] 'मधूदकम्' ख. पाठः ।

विश्रान्तममृतेश्वर्यै मनुमेनं जपेद् घटे ।
ध्यात्वामृतमयं द्रव्यं कर्पूरादिसुवासितम् ॥ ९४ ॥
एलालवङ्गकस्तूरी-चन्दनोशीरमिश्रितम् ।
विधाय मूलमन्त्रेण तीर्थान्यावाहयेद् घटे ॥ ९५ ॥
तारं शिवं शिवोद्भूतिं मूलमेतत् समुद्धरेत् ।
गङ्गे च यमुने चैव गोदावरि सरस्वति ॥ ९६ ॥
नर्मदे सिन्धुकावेरि द्रव्येऽस्मिन् सन्निधिं कुरु ।
इत्यावाह्य महादेवि मुद्रयाङ्कुशरूपया ॥ ९७ ॥
सर्वतीर्थमयं द्रव्यं ध्यायेत् परमपावनम् ।
द्रव्यमध्ये बिन्दुयुतं त्रिकोणं च विभावयेत् ॥ ९८ ॥
योनिमुद्रां निबद्ध्याशु ध्यायेदानन्दभैरवम् ।
सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ॥ ९९ ॥
अष्टादशभुजं देवं पञ्चवक्त्रं त्रिलोचनम् ।
अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरिस्थितम् ॥ १०० ॥
वृषारूढं नीलकण्ठं सर्वा(र्पा)भरणभूषितम् ।
कपालखट्वाङ्गधरं घण्टाडमरुवादिनम् ॥ १०१ ॥
पाशाङ्कुशधरं देवं गदामुसलधारिणम् ।
खड्गखेटकपट्टीश-मुद्गरोच्छूलकुन्तिनम् ॥ १०२ ॥
विचित्रखेटकं मुण्डवरदाभयपाणिकम् ।
लोहितं देवदेवेशं भावयेत् साधकोत्तमः ॥ १०३ ॥
दत्त्वा पुष्पाञ्जलिं कुम्भे जपेदानन्दभैरवम् ।
हकारं च भृगुं देवं मण्डूकं धरणिं ततः ॥ १०४ ॥
( तथा जीमूतबीजं च हुतभुग्बीजमुद्धरेत् । )
वायुं केशं तथानन्दभैरवाय ततोऽञ्जले ॥ १०५ ॥
त्रिकुटं च मनुं जप्त्वा दशधा भैरवीं यजेत् ।

आनन्दभैरवीं ध्यायेद् यथावद् वर्ण्यते[1] शिवे ॥ १०६ ॥
समुद्रे मथ्यमाने तु क्षीराब्धौ सागरोत्तमे ।
तत्रोत्पन्ना सुरा देवी कुमारीरूपधारिणी ॥ १०७ ॥
भावयेच्च सुरां देवीं चन्द्रकोट्ययुतप्रभाम् ।
हिमकुन्देन्दुधवलां पञ्चवक्त्रां त्रिलोचनाम् ॥ १०८ ॥
अष्टादशभुजैर्युक्तां सर्वानन्दकरोद्यताम् ।
प्रहसन्तीं विशालाक्षीं देवदेवस्य सम्मुखीम् ॥ १०९ ॥
शक्तिं शिवं निर्जरं च भक्तीं भूबीजमेव च ।
मेघं वह्निं समीरार्णं केशं चैव समुद्धरेत् ॥ ११० ॥
सुरादेव्यै कुटं चान्ते विद्यां च दशधा जपेत् ।
भैरवं भैरवीं चैव यष्ट्वा पार्वति कौलिकः ॥ १११ ॥
महामुद्रां धेनुमुद्रां योनिं मत्स्यं प्रदर्शयेत् ।
बद्ध्वा च लेलिहानाख्यां मुद्रां कुण्डलिनीं पुनः ॥ ११२ ॥
मूलाधारात् समुत्थाय सुषुम्नावर्त्मना प्रिये ।
द्वादशान्तं समास्थाप्य सोऽहं हंस इति स्मरेत् ॥ ११३ ॥
शिवेन सह संयोज्य परानन्दमयो भवेत् ।
तदुद्भूतामृतवृष्टिमुत्सृजेद् वामनासया ॥ ११४ ॥
प्रणवेन च देवेशि परद्रव्ये नियोजयेत् ।
साक्षादमृततत्त्वाढ्यं ध्यायेत् कलशमुत्तमम् ॥ ११५ ॥
वारुणं बीजमुच्चार्य मूलमन्त्रं समुच्चरेत् ।
दशधा प्रजपेद् देवि गन्धाक्षतपुरःसरैः ॥ ११६ ॥
पुष्पैर्नानाविधैर्दिव्यैर्माल्यैर्विविधभूषणैः ।
संपूज्य कलशं दिव्यं घण्टानिःस्वानपूर्वकम् ॥ ११७ ॥
धूपैर्दीपैर्महोत्साहैः परमैर्विविधौषधैः ।
प्रपूज्य परया भक्त्या प्रणामैः स्तुतिपूर्वकैः ॥ ११८ ॥

---

1 "वर्णिता" ग. पाठः ।

सर्वदेवमयं कुम्भं ध्यायेद् देवेशि साधकः ।
या सुरा सा उमादेवी यो द्रव्यं स महेश्वरः ॥ ११९ ॥
यो गन्धः स भवेद् ब्रह्मा यो मोहः स जनार्दनः ।
स्वादे च संस्थितः सोमः फेनायामनलः स्थितः ॥ १२० ॥
इच्छायां मन्मथो देवश्चर्यामुच्छिष्टभैरवः ।
द्रावे गङ्गा स्थिता देवि घटस्थाः सप्त सागराः ॥ १२१ ॥
सर्वतेजोमयं द्रव्यं परमानन्दनिर्भरम् ।
सर्वशापविनिर्मुक्तं सर्वमन्त्रसुसंस्कृतम् ॥ १२२ ॥
परमामृतभावेन भैरवं भैरवीं यजेत् ।
माहेश्वरैर्महावीरैर्महाचीनपदस्थितैः ॥ १२३ ॥
महाशक्तिमयैर्मान्यैः सेव्यं द्रव्यमिदं प्रिये ।
सन्तर्प्य देवतामिष्टां योगिनीगणमैश्वरम् ॥ १२४ ॥
वटुकं क्षेत्रपालांश्च [1]त्रिस्त्रिशत्कोटिदेवताः ।
मातृर्मातृगणान् सर्वान् भूतप्रेतादिसंयुतान् ॥ १२५ ॥
सन्तर्प्य विधिवद् देवि गुरुं गुरुवरांस्ततः ।
गुरुं ध्यात्वा परां ध्यायेद्वीरान् संपूज्य शक्तितः ॥ १२६ ॥
शक्तियुक्तो यजेत् पात्रमित्याज्ञा पारमेश्वरी ।
शक्तिहीने वृथापानं शिवहीने वृथार्चनम् ॥ १२७ ॥
शिवशक्तिसमायोगे वीरपूजा विमोक्षदा ।
इतीदं शोधनं दिव्यं सुरायाः सुरदुर्लभम् ॥ १२८ ॥
तव स्नेहेन निर्णीतं शृणुष्वान्यदपि प्रिये ।
मद्यं मांसं तथा मीनो मुद्रा मैथुनमेव च ॥ १२९ ॥
मकारपञ्चकं पूज्यं शिवशक्तिसमागमे ।
पूजायां यद्यदानीतं भक्ष्यं भोज्यं च लेह्यकम् ॥ १३० ॥

---

१ 'त्रिस्त्रिंशत्' पाठः साधु ।

पेयं चोष्यं फलं पुष्पं सर्वं ,मन्त्रेण मन्त्रयेत् ।
विनाभिमन्त्रणेनैतद् यो मोहाद् भक्षयेच्छिवे ॥ १३१ ॥
स मान्त्रिकोऽपि देवेशि सहसा निरयी भवेत् ।
चतुरस्रं लिखेद्बिम्बं तत्र मीनान् निधापयेत् ॥ १३२ ॥
शोषयेद् दाहयेद् देवि स्रावयेन्मनुना शिवे ।
वायुबीजेन वाह्न्येन वारुणेन यथाक्रमम् ॥ १३३ ॥
धेनुयोनिमहामत्स्यां[1] मुद्राश्चैव प्रदर्शयेत् ।
दशधा प्रजपेन्मन्त्रमानन्देश्वरभैरवम् ॥ १३४ ॥
प्रजप्य प्रपठेद्विद्यां यथोक्तां कौलिकेश्वरि ।
कृतावतारो हरिणा कलिना पीडितं जगत् ॥ १३५ ॥
बलिना निगृहीतं च कौलिकानां हितेच्छया ।
भैरवीपरितोषार्थं स्वयं मीनोऽभवद् हरिः ॥ १३६ ॥
मायां च हरेये[2] विश्वं जपेदृचमतः परम् ।
त्र्यम्बकं यजामहीति मन्त्रं त्रिःसञ्जपेत् सुधीः ॥ १३७ ॥
प्रपूज्य गन्धपुष्पैस्तु प्रणमेद् देवतां पराम् ।
चतुरस्रे महादेवि मांसपात्रं निधापयेत् ॥ १३८ ॥
संशोष्य सन्दह्य पलमाप्लाव्य कुलसुन्दरि ।
मुद्रात्रयं प्रदर्श्याशु प्रपठेत् कौलिको मनुम् ॥ १३९ ॥
छागलाज्येणमर्त्यान्त्रं[3](न्तः)कृतरूपाय विष्णवे ।
बल्यर्थं शिवशक्त्योस्तं प्रपद्ये विष्णुमव्ययम् ॥ १४० ॥
प्रतर्पयामि बल्यर्थं पवित्रीभव सांप्रतम् ।
त्रिः पठित्वा ऋचं देवि जपेत् कौलिकसत्तमः ॥ १४१ ॥
प्र तद्विष्णुरिति स्मृत्वा प्रणमेद् योनिमुद्रया ।
मुद्रापात्रं समानीय स्थापयेच्चतुरश्रके ॥ १४२ ॥

---

१ 'मत्स्यमु' क. ख.ग. पाठः । २ 'हरते' सर्वपुस्तकेषु पाठः । ३ 'मन्त्रार्थं' क.ख.ग. पाठः ।

संशोषणं दाहनं च ल्लावनं पूर्ववच्चरेत् ।
मुद्रात्रयं च संदर्श्य प्रपठेद् वेदवद् विधिम् ॥ १४३ ॥
देवतापूजने यानि सौरभेयानि सांप्रतम् ।
बल्यर्थं देवदेव्योश्च पवित्राणीह सिद्धये ॥ १४४ ॥
मूलं च दशधा जप्त्वा जपेदृचमनुत्तमाम् ।
(ताद्विष्णोः परमं मन्त्रं प्रजप्योपरि कौलिकः ॥ १४५ ॥
प्रणम्य भक्तिभावेन कुण्डगोलं च शोधयेत् ।
चतुरश्रे च संस्थाप्य शोषयेद् दाहयेत् सुधीः ॥ १४६ ॥
आल्लावयेत् परैर्बीजैर्मुद्राभिरभिरक्षयेत् ।)
मूलं च दशधा जप्त्वा जपेदृचमथोपरि ॥ १४७ ॥
विष्णुर्योनिमिति स्मृत्वा प्रजप्य प्रणमेत्ततः ।
सर्वेषु देवद्रव्येषु समानीतेषु कौलिकैः ॥ १४८ ॥
ऋचमेतां जपेत् सम्यङ् मन्त्रमेनं समुद्धरेत् ।
ग्लूंम्लूंस्लूंप्लूंन्लूं देवेशि स्वान्तं खं कामकालिकम् ॥ १४९ ॥
अमृतेऽप्यमृतोद्भूतेऽप्यमृतेश्वरि चामृतम् ।
स्रावय-द्वयमुद्धृत्य ठद्वयं च समुद्धरेत् ॥ १५० ॥
इयं शापहरी विद्या मकाराणां महेश्वरि ।
पञ्चानां पञ्चकल्पानां स्मरणीयार्चनाविधौ ॥ १५१ ॥
संशोध्य शिवद्रव्याणि मन्त्रैर्मुद्राभिरेव च ।
ऋग्भिः क्रमेण मूलेन ल्ला(पा)वयेच्च यथाक्रमम् ॥ १५२ ॥
आनन्दरससंपूर्णैः कलशामृतबिन्दुभिः ।
एवं संशोध्य द्रव्याणि परमाणि कुलेश्वरि ॥ १५३ ॥
भैरवं भैरवीं देवीं यजेद् वीरसमागमे ।
अयष्ट्वा भैरवं देवमकृत्वा देवतार्चनम् ॥ १५४ ॥
पशुपानविधौ पीत्वा वीरोऽपि नरकं व्रजेत् ।

एवं संस्कृत्य देवेशि गुरुभक्तिपुरःसरम् ॥ १५५ ॥
यः पिबेत् परमं पानं शिवसायुज्यमाप्नुयात् ।
इतीदं परमं गुह्यं रहस्यानां रहस्यकम् ॥ १५६ ॥
अष्टसिद्धिमयं तत्त्वं गोपनीयं स्वयोनिवत् ।

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये सुराशोधनविधि-
निरूपणं द्वाविंशः पटलः ॥ २२ ॥

अथ

## त्रयोविंशः पटलः ।

श्रीभैरव उवाच ।

अधुना शृणु देवेशि शक्तिशोधनमुत्तमम् ।
येन[1] श्रवणमात्रेण पराशक्तिपदे लयेत् ॥ १ ॥
अदीक्षितकुलासङ्गात् सिद्धिहानिः प्रजायते ।
तत्कथाश्रवणं चेत् स्यात् तत्तल्पगमनं यदि ॥ २ ॥

श्रीदेव्युवाच ।

कुलाचारक्रमार्चायां सिद्धिं कामयते तु यः ।
स कुलीनः कथं देव पूजयेत् कुलयोषितम् ॥ ३ ॥

श्रीभैरव उवाच ।

संशोधनमकृत्वा वै स्त्रीषु मद्येषु कौलिकः ।
कृतेऽपि सिद्धिहानिः स्यात् क्रुद्धा भवति चण्डिका ॥ ४ ॥

१ 'यस्य' ग. पाठः ।

अभिषेकाद् भवेत् सिद्धिर्मन्त्रस्योच्चारणाच्छुभा ।
रतिकाले महेशानी दीक्षाकाले च कन्यका ॥ ५ ॥
बलाद्वा यत्नतो बुद्ध्या ला(पा)वयेत् परयोषितम् ।
सुरया रेतसा वापि जलेन मधुनाथ वा ॥ ६ ॥
सङ्गे[1]ऽभिषेचयेन्नारीं चण्डां वा मन्त्रवर्जिताम् ।
स्वकीयां परकीयां वा रूपयौवनगर्विताम् ॥ ७ ॥

श्रीदेव्युवाच ।

भगवन् देवदेवेश कुलाचारैकसिद्धये ।
कुलयोगी कथं कुर्याच्छोधनं कुलयोषिताम् ॥ ८ ॥

श्रीभैरव उवाच ।

कुलजां युवतिं वीक्ष्य नमस्कुर्यात् कुलेश्वरः ।
विधाय मानसीं पूजां मन्त्रं योगी समुच्चरेत् ॥ ९ ॥
बालां वा यौवनोन्मत्तां वृद्धां वा सुन्दरीं तथा ।
कुत्सितां वा महादुष्टां नमस्कृत्य विभावयेत् ॥ १० ॥
तासां प्रहारो निन्दा च कौटिल्यमप्रियं तथा ।
सर्वथा नैव कर्तव्यमन्यथा सिद्धिरोधकृत् ॥ ११ ॥
स्त्रियो देवाः स्त्रियः प्राणाः स्त्रिय एव हि भूषणम् ।
स्त्रीगणेषु सदा भाव्यमन्यथा स्वस्त्रियामपि ॥ १२ ॥
विपरीतरता सापि भविता हृदयोपरि ।
साधकस्य भवेदाशु कामधेनुरिवापरा ॥ १३ ॥
नाधर्मो जायते तेन न कश्चिद् धर्महा भवेत् ।
तत्परः परतन्वीनां परतत्त्वे प्रलीयते ॥ १४ ॥
नटी कापालिकी वेश्या रजकी नापिताङ्गना ।
ब्राह्मणी शूद्रकन्या च तथा गोपालकन्यका ॥ १५ ॥

---

१ 'संभोगेऽभिषिचेत्' इति सर्वत्र पाठः ।

मालाकारस्य कन्यापि नव कन्याः प्रकीर्तिताः ।
एतासु कांचिदानीय संशोधनमथाचरेत् ॥ १६ ॥
पूजयेत् कौलिको देवि यथावद् वर्ण्यते मया ।
शक्तिशोधनमन्त्रस्य ऋषिः प्रोक्तः सदाशिवः ॥ १७ ॥
त्रिष्टुप् छन्द इति ख्यातं देवता च पराम्बिका ।
वाग्बीजं बीजमीशानि शक्तिः शक्तिरितीरिता ॥ १८ ॥
कामेशः कीलकं देवि दिग्बन्धो हरमीश्वरि ।
भोगापवर्गसिद्ध्यर्थं विनियोगो महेश्वरि ॥ १९ ॥
महानिशायामानीय नव कन्याश्च भैरवान् ।
एकादश नवाष्टौ वा कौलिकः कौलिकेश्वरि ॥ २० ॥
शोधयेन्नवभिर्मन्त्रैः पूजयेत् कौलिकोत्तमः ।
साधकः संस्पृशेदादौ कृत्वा विष्टरशोधनम् ॥ २१ ॥
भूतशुद्धिं विधायापि प्राणार्पणविधिं चरेत् ।
मन्त्रसंकल्पकं कृत्वा मुन्यादिन्यासमाचरेत् ॥ २२ ॥
विधाय मातृकान्यासं कराङ्गन्यासपूर्वकम् ।
हृत्पीठार्चां विधायाथ श्रीचक्रार्चनमाचरेत् ॥ २३ ॥
संशोध्य देवे[2]द्रव्याणि कुण्डगोलादिकं तथा ।
वीरार्चनं वीरकान्तासेवनं देवदुर्लभम् ॥ २४ ॥
यथोक्तविधिना देवीं संपूज्य श्रीपराम्बिकाम् ।
शक्तिं वामे तु संस्थाप्य पूजयेद्वर्ण्यते यथा ॥ २५ ॥
त्रिकोणं वाथ षट्कोणं त्र्यश्रत्रयमथो हविः (बहिः) ।
शिवत्र्यश्रं कामत्र्यश्रं हेतित्र्यश्रं महेश्वरि ॥ २६ ॥
ब्रह्मत्र्यश्रं नवत्र्यश्रं सिन्दूरेण विभावयेत् ।
श्रीचक्रेषु हि नव्यादिमालिन्यन्तं विचार्य च ॥ २७ ॥

---

यात्र ' ङ पाठः । २ ' देवि द्र ' क. ख. पाठः ।

यामेवासां कुमारीणां कौलिकस्तु समानयेत् ।
तदीयं यन्त्रमालिख्य तस्मिंस्तामेव पूजयेत् ॥ २८ ॥
श्रीचक्रे स्थापयेद् वामे कन्यां भैरववल्लभाम् ।
मुक्तकेशीं वीतलज्जां सर्वाभरणभूषिताम् ॥ २९ ॥
सर्वशृङ्गारशोभाढ्यां तारुण्यमदगर्विताम् ।
आनन्दलीनहृदयां सौन्दर्यातिमनोहराम् ॥ ३० ॥
शोधयेच्छुद्धिमन्त्रेण सुरानन्दामृताम्बुभिः ।
बालाबीजत्रयं देवि प्रोच्चार्य तदनन्तरम् ॥ ३१ ॥
त्रिपुरायै ततो विश्वं विश्वान्ते नामपूर्वकम् ।
इमां शक्तिं पवित्रीति कुरु-युग्मं समुद्धरेत् ॥ ३२ ॥
मम शक्तिं कुरु-युग्मं वह्निजायां समुद्धरेत् ।
मन्त्रेणानेन देवेशि कामिनीमभिषेचयेत् ॥ ३३ ॥
अभिषिच्य कुमारीं तां न्यासजालं प्रविन्यसेत् ।
मातृकावन्महादेवि कामबाणांस्ततो न्यसेत् ॥ ३४ ॥
चन्द्रबीजद्वयं देवि कामराजं च मोहनम् ।
शक्तिबीजं ततो देवि यथावद्विन्यसेत् प्रिये ॥ ३५ ॥
ललाटे वदने न्यस्य ( चांसे ) हृदये योनिमण्डले ।
सर्वसंक्षोभणं बाणं सर्वविद्रावणं तथा ॥ ३६ ॥
सर्वाकर्षणबाणं च सर्वसंमोहनं ततः ।
वशीकरणबाणं च पञ्चेषोः पञ्चबाणकान् ॥ ॥ ३७ ॥
विन्यस्य बाणमुद्राश्च पञ्चैता देवि दर्शयेत् ।
योनिबिम्बे जपेन्मन्त्रान् नव यान् वर्णयाम्यहम् ॥ ३८ ॥
(१) तारं चन्द्रं च वाग्बीजं कामं शक्तिं ततो वदेत् ।
नटिनीति महासिद्धिं मम देहि-युगं वदेत् ॥ ३९ ॥

---

१ 'यान् वर्ण्यते मया' क. ख. ग. पाठः ।

ठद्वयं प्रोच्चरेदन्ते मन्त्रोऽयं नटिनीप्रियः ।

(२) कालीं कूर्चं परां शक्तिं कामं कापालिनि प्रिये ॥ ४० ॥

रेतो मुञ्च–युगं ब्रूयादन्ते दहनवल्लभा ।

देवि कापालिकीमन्त्रः कामदेववशङ्करः ॥ ४१ ॥

(३) तारद्वन्द्वं च हरितं मेघषड्दीर्घबीजकम्[1] ।

वेश्ये कामदुघे रेतो मुञ्च–युग्माग्निवल्लभा ॥ ४२ ॥

वेश्याशोधनमन्त्रोऽयं सर्वकौलिकवल्लभः ।

(४) वेदाद्यं वाग्भवं कामं शक्तिं लक्ष्मीं परां स्मरेत् ॥ ४३ ॥

रजकीति महासिद्धिं देहि मे हर–ठद्वयम् ।

रजकीशुद्धिमन्त्रोऽयं कुलयोषिद्वशङ्करः ॥ ४४ ॥

(५) तारं तारत्रयं वस्त्रं प्रोच्चरेन्नापिताङ्गने ।

हर–युग्मं च मे विघ्नांस्तुरगं ठद्वयं ततः ॥ ४५ ॥

नापितस्त्रीशुद्धिमन्त्रो महामाङ्गल्यदायकः ।

(६) वेदाद्यं भूतिबीजं च तारं मायां धनुर्धरः ॥ ४६ ॥

ब्राह्मणि स्मर वीर्यं च मुञ्च मुञ्चेति सर्वदा ।

सिद्धिं मे देहि देहीति हरं दहनवल्लभा ॥ ४७ ॥

ब्राह्मणीशुद्धिमन्त्रोऽयं महासिद्धिप्रदायकः ।

(७) तारं रमा रमा तारं शूद्राणि च रतप्रिये ॥ ४८ ॥

रेतः स्तम्भय मे सिद्धिं देहि–युग्मं ततो वनम् ।

शूद्राणीशुद्धिमन्त्रोऽयं कामिनीजनमोहनः ॥ ४९ ॥

(८) तारकं शिबषड्दीर्घसंयुतं मठबीजकम् ।

गोपालि मे सिद्धदण्डं द्रावय–द्वयमुद्धरेत् ॥ ५० ॥

ठद्वयान्तो महामन्त्रो गोपीशोधनसाधकः ।

(९) तारद्वयीसंपुटितां मृद्वीकां दीर्घसंयुताम् ॥ ५१ ॥

---

१ 'मेघवद्' ङ. पाठः ।

उद्धृत्य मालिनि प्रेम कुरु-युग्मं मयि स्मरेत् ।
तुरगं ठद्वयं प्रान्ते मन्त्रोऽयं मालिनीप्रियः ॥ ५२ ॥
एवं शोधनमन्त्रास्ते वर्णिताश्च पृथङ्मया ।
योनौ जपेत् कुमारीणां कौलिकः करमालया ॥ ५३ ॥
संजप्य दक्षकर्णे च मूलमन्त्रं त्रिरुच्चरेत् ।
अदीक्षितापि देवेशि दीक्षितैव भवेत् तदा ॥ ५४ ॥
दीक्षितां शोधितां वीरो भजेत् सर्वार्थसिद्धये ।
तारं व्योषमौष्मकं च शिवायेति स्वयम्भुवम् ॥ ५५ ॥
संपूज्य शिवमन्त्रं च जपेत् संस्तभ्य पुंध्वजम् ।
जप्त्वा निरुध्य तं दण्डं [1]करभीतुण्डमुद्रया ॥ ५६ ॥
आनन्दतर्पितां कान्तां वीरः स्वानन्दविग्रहः ।
रतेन तर्पयेत् तत्र श्रीचक्रे वीरसंसदि ॥ ५७ ॥
पठन् प्रणवमुद्धृत्य मन्त्रराजं कुलेश्वरि ।
धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा ॥ ५८ ॥
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ।
स्वाहान्तमन्त्रमुच्चार्य जपन् मूलं स्मरन् पराम् ॥ ५९ ॥
कुर्यान्निधुवनं मन्त्री मन्त्रसिद्धिमवाप्नुयात् ।
रतान्ते सञ्जपेन्मूलं पठेन्मन्त्रमिमं पुनः ॥ ६० ॥
तारद्वयान्तरगतं परमानन्दकारणम् ।
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचम् ॥ ६१ ॥
धर्माधर्मकलास्नेहपूर्णा[2] वह्नौ जुहोम्यहम् ।
स्वाहान्तेनाशु मन्त्रेण शुक्रमादाय पार्वति ॥ ६२ ॥
श्रीचक्रे तर्पयेद् देवीं ततः सिद्धिमवाप्नुयात् ।
संपूज्य कान्तां सन्तर्प्य स्तुत्वा नत्वा परस्परम् ॥ ६३ ॥

---

१ 'करितुण्डाख्यमुद्रया' क. ख. ग. पाठः । २ 'पूर्णे' क. ख. ङ. पाठः ।

संहारमुद्रया मन्त्री शक्तिं वीरान् विसर्जयेत् ।
इतीदं परमं दिव्यं शक्तिशोधनमुत्तमम् ॥ ६४ ॥
तव स्नेहेन निर्णीतं गोपनीयं मुमुक्षुभिः ।

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये शक्तिशोधन-
विधिनिरूपणं त्रयोविंशः पटलः ॥ २३ ॥

अथ

# चतुर्विंशः पटलः ।

श्रीभैरव उवाच ।

शृणुष्वावहिता भूत्वा मालाशोधनमुत्तमम् ।
येन शोधनमात्रेण माला सिद्ध्यति सत्फला ॥ १ ॥

श्रीदेव्युवाच ।

माला कीदृग्विधा नाथ क्रियते कौलिकोत्तमैः ।
कियत्फला कियत्संख्या सर्वं मे वक्तुमर्हसि ॥ २ ॥

श्रीभैरव उवाच ।

नवान्ता वर्णिता संख्या कालोऽयं द्वादशावधिः ।
माला जपस्य देवेशि रहस्यमिदमैश्वरम् ॥ ३ ॥
कालात्मा सविता प्रोक्तो वल्लभे जपदेवता ।
द्वादशात्मा स सविता तदन्तावृत्तिरीरिता ॥ ४ ॥
माला रविफला प्रोक्ता संख्यया कौलिकेश्वरि ।
आवर्तयेच्च नवधा तामेव जपसिद्धये ॥ ५ ॥

अथान्तर्गुह्यमाचक्षे तव स्नेहेन पार्वति ।
मालारहस्यसर्वस्वं नाख्येयं यस्य कस्यचित् ॥ ६ ॥
रुद्राणां तु शतं चैकं भैरवाष्टकयोजितम् ।
कृत्वा मेरुं महारुद्रं जपमाला विनिर्मिता ॥ ७ ॥
न हन्याद् भैरवान् रुद्रैः रुद्रांश्च भैरवैस्तथा ।
अन्यथा जपहानिः स्याद्रुद्रस्य वचनं यथा ॥ ८ ॥
अष्टोत्कृष्टशतं देवि गोलकानां मुखं मुखे ।
पायुं पायौ निबध्नीयात् सूत्रे मन्त्रमनुस्मरन् ॥ ९ ॥
ऊर्ध्वे मेरुं महाकेतुं निबध्य कुलसुन्दरि ।
शङ्खमुक्ताप्रवालार्क–रुद्राक्षवरवीरुधाम् ॥ १० ॥
मणिकाञ्चनपद्माक्षनृदन्तानां यथाक्रमम् ।
सर्वेषां गोलकानां च मेरुं रुद्राक्षमाचरेत् ॥ ११ ॥
नरदन्तविरोधानां[1] मेरुं वाजिरदं चरेत् ।
षण्मासेनाक्षसूत्राणां शोधनं साधकश्चरेत् ॥ १२ ॥
ततो जपेन्महाविद्यां कौलिको जपमालया ।
गुणैस्त्रिभिस्त्रिरावर्त्य[2] षट्त्रिंशत्तत्त्वगोलकान् ॥ १३ ॥
तारं मेरुं विदध्यात् तु तत्त्वमालासु कौलिकः ।
अष्टोत्कृष्टशते प्रौढा मालेयं देवि दुर्लभा ॥ १४ ॥
प्रणवान्तरिता वर्णा देवि लोमानुलोमतः ।
वर्णिता मातृकामाला वेदादिहविराश्रिता ॥ १५ ॥
तारद्वयं स्वरान्ते च दद्याल्लोमानुलोमतः ।
तारद्वयं च वर्गान्ते वर्णाद्यन्ते च तद्द्वयम् ॥ १६ ॥
विधाय तुरगं मेरुं जपेच्छक्त्यर्णमालया ।
तारकामैः संपुटिता मालेयं गुरुवल्लभा ॥ १७ ॥

---

१ 'नुदन्तवीरुधां चैव' इति साधुः पाठः । २ 'रावृत्य' सर्वत्र पाठः ।

देवदेवस्य देवेशि स्वतन्त्रस्य महेशितुः ।
षडाननोद्भवास्तारा: षट् षडाम्नायसूचकाः ॥ १८ ॥
चतुर्णामाश्रमाणां तु शङ्खार्कवरवीरुधाम् ।
रुद्राक्षाणां प्रकुर्वीत मालां सर्वार्थसिद्धिदाम् ॥ १९ ॥
मुक्ताप्रवालसद्रत्न–हेमपद्माक्षशालिनाम् ।
पूर्वाम्नायादिभेदानां मालां कुर्याद्यथाक्रमम् ॥ २० ॥
लोमानुलोमवर्णानां द्वयोत्कृष्टशतं शिवे ।
तारकामेन संयोज्य ब्रह्मोत्कृष्टशतं शिवे ॥ २१ ॥
क्षः सुमेरुं नियोज्यादौ वर्णलोमानुलोमकैः ।
स्वरवर्गयशाँल्लान्तान् योजयेत् परमेश्वरि ॥ २२ ॥
श्रीशिवाक्षरमालेयं वर्णिता स्नेहतो मया ।
श्रीमहाषोडशीविद्यागुरूनादाय पार्वति ॥ २३ ॥
षट्त्रिंशत्तत्त्वमात्राभिर्योजयेत् सप्तभिर्ग्रहैः ।
शिवामालेयमाख्याता शिवसायुज्यसिद्धये ॥ २४ ॥
पञ्चपष्ट्यक्षरीवर्णांश्चत्वारिंशतिभैरवैः ।
त्र्यधिकैर्योजयेन्माला भैरवीयमुदाहृता ॥ २५ ॥
अनामिकाद्वयं पर्व कनिष्ठादिक्रमेण तु ।
तर्जनीमूलपर्यन्तं करमालेयमाहृता ॥ २६ ॥
दशांशं सञ्जपेद् देवि केवलं करमालया ।
अनामिकाद्वयं पर्व कनिष्ठादिक्रमेण तु ॥ २७ ॥
तर्जनीमूलपर्यन्तं जपेद् द्वादशपर्वसु ।
कनिष्ठिकाचतुष्पर्वानामापर्वत्रयं तथा ॥ २८ ॥
मध्यमापर्व देव्येकं तर्जन्याश्च चतुष्टयम् ।
संयोज्य संजपेद् विद्यां मन्त्री द्वादशपर्वसु ॥ २९ ॥

---

जपेद् द्वादशपर्वसु ' ख. पाठः ।

शक्तिमालेयमाख्याता त्यक्त्वा पर्वचतुष्टयम् ।
दुर्गावृत्त्या जपेद् देवि सहस्राद्ययुतावधि ॥ ३० ॥
दिक्पालाश्च ग्रहाश्चाष्टौ सन्ति षोडशपर्वसु ।
प्रलम्बपर्वत्रितये त्रयो देवाः समाहिताः ॥ ३१ ॥
क्रूरग्रहौ च मन्दारौ[1] दिक्पालौ यमनिर्ऋती ।
कुलिकश्चेति विख्यातो जपहानिकरो मतः ॥ ३२ ॥
कुलिकं सन्त्यजेद् देवि मन्त्री करजपे सदा ।
कनिष्ठामूलपर्वादिक्रमेण करगाः सुराः ॥ ३३ ॥
तान् शृणुष्व महादेवि यथावद्वर्ण्यते मया ।
ईशानोऽग्निर्निर्ऋतिश्च वायुरिन्द्रो यमस्तथा ॥ ३४ ॥
वरुणश्च कुबेरश्च सूर्यः सोमो बुधो गुरुः ।
सितराह्वारसौरान्ता ब्रह्मविष्णुमहेश्वराः ॥ ३५ ॥
जपसिद्धिकरा देवि सकलाः करदेवताः ।
कुलिकं सन्त्यजेद् देवि जपकाले स्वसिद्धये[2] ॥ ३६ ॥
कुलिको मुद्गरो ज्ञेयो मुद्गरे तु महद्भयम् ।
मुद्गरोल्लङ्घने शक्तिर्महारुद्रस्य केवलम् ॥ ३७ ॥
कुलिकं च महाकेतुं मेरुरूपं न लङ्घयेत् ।
अन्यथा देवि मन्त्री च देवताशापमाप्नुयात् ॥ ३८ ॥
अथ षाण्मासिकीं शुद्धिं मालानां ते ब्रवीम्यहम् ।
यया सिद्धिर्भवेद् देवि देवानामपि दुर्लभा ॥ ३९ ॥
मालाशोधनकाले तु गत्वा प्रेतालयं सुधीः ।
विधाय भस्मना स्नानं जलेन मन्त्रितेन वा ॥ ४० ॥
तत्र स्नात्वोपविश्याथ कृत्वा विष्टरशोधनम् ।
भूतशुद्धिक्रमोपेतं प्राणार्पणविधिं ततः ॥ ४१ ॥

---

१ 'तमन्दारसुभानु' क. ख. ग. पाठः । २ 'जापको जपसिद्धये' क. ख. ग. पाठः ।

देहशुद्धिं विधायाथ मन्त्रसङ्कल्पमाचरेत् ।
मालाशोधनमन्त्रस्य ऋषिः कालाग्निरुद्रकः ॥ ४२ ॥
छन्दोऽनुष्टुब् महादेवि देवी श्मशानभैरवी ।
कालरात्रीति विख्याता मुण्डमालाविलासिनी ॥ ४३ ॥
हरितं बीजमाख्यातं नलिनी शक्तिरीरिता ।
सूर्याख्यं कीलकं मालाशुद्धये विनियोगकः ॥ ४४ ॥
ऋषिच्छन्दोदैवतादिन्यासं कुर्यात् कुलार्थवित् ।
अङ्गन्यासं विधायाथ करन्यासादिपूर्वकम् ॥ ४५ ॥
विधायासनशुद्धिं च भूतशुद्धिक्रमं चरेत् ।
प्राणान् देवि प्रतिष्ठाप्य श्रीचक्रार्चनमाचरेत् ॥ ४६ ॥
योगपीठार्चनं कृत्वा द्रव्यादीनि विशोधयेत् ।
क्षेत्रेश-योगिनीवृन्दं सन्तर्प्य कुलसुन्दरि ॥ ४७ ॥
लयाङ्गं पूजयेद् देवि पूजान्ते सञ्जपेन्मनुम् ।
मालाया देवदेवेशि यथाम्नायं यथाविधि ॥ ४८ ॥
श्रीचक्रोपरि संस्थाप्य शोधयेत् कलशामृतैः ।
मालामूलेन देवेशि मूलमन्त्रेण साधकः ॥ ४९ ॥
मालामन्त्रान् प्रवक्ष्येऽहं शृणुष्वावहिता प्रिये ।
(१) तारं रमा रमा तारं शङ्खिनीति-पदं वदेत् ॥ ५० ॥
तारं मा तारमन्तेऽपो मन्त्रोऽयं शङ्खमालिकः ।
(२) तारं लज्जा-युगं तारं मुक्तामालिनि मा-युगम् ॥ ५१ ॥
ठद्वयं मन्त्रराजोऽयं मुक्तामालाविशोधनः ।
(३) तारं वधूं च वेदाद्यं रौद्रे च रौध्रमालिनि ॥ ५२ ॥
अब्धिबीजं ठद्वयं च मन्त्रोऽयं रौध्रमालिकः ।
(४) तारं मात्राद्यमुच्चार्य सूर्याख्यबीज-युग्मकम् ॥ ५३ ॥
अर्कमाले हरं नीरं मन्त्रः स्फटिकशुद्धिकृत् ।

(५) तारमब्धिरमामायाः सिन्धुं रुद्राक्षमालिनि ॥ ५४ ॥
शुद्धा भव वनं मन्त्रो देवि रुद्राक्षशोधनः ।
(६) तारं तारात्रयं तारं वधूं तुलसि वैष्णवि ॥ ५५ ॥
वौषड् वनं महामन्त्रस्तुलसीशोधनाभिधः ।
(७) तारं तारा[1] च मृद्वीका मणिमाले मनोहरे ॥ ५६ ॥
ठद्वयं मन्त्रराजोऽयं मणिमालाविशोधनः ।
(८) वेदाद्यं कमला कुन्ती वाग्बीजं कामशक्तिकम् ॥ ५७ ॥
सुवर्णमाले शक्त्यापो मन्त्रोऽयं स्वर्णशोधनः ।
(९) तारं च वायुपूज्या च तारं पद्माक्षमालिनि ॥ ५८ ॥
हरितं ठद्वयं मन्त्रो देवि पद्माक्षशोधनः ।
(१०) तारत्रयं मा-त्रयं च कामराजत्रयं शिवे ॥ ५९ ॥
शिवः शक्तिर्दन्तमाले मुण्डमाले च वागुरा ।
वधूर्वस्त्रं वनं मन्त्रो नरदन्तविशुद्धिकृत् ॥ ६० ॥
पृथङ्पृथङ् महामन्त्रैः श्रीचक्रस्थां महेश्वरि ।
मालां संशोध्य संपूज्य मूलं जप्त्वा दशांशतः ॥ ६१ ॥
गन्धाक्षतप्रसूनैश्च पूजयेत् कौलिकोत्तमः ।
(११) ॐमाले माले महामाले सर्वतत्त्व[2]स्वरूपिणि ॥ ६२ ॥
चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ।
स्वाहान्तोऽयं महामन्त्रः सर्वमालाविशोधनः ॥ ६३ ॥
(१२) शिवबीजं समुच्चार्य ततोऽविघ्नं कुरु स्मरेत् ।
मे ठद्वयं महामन्त्रः सदा[3] मालाविशोधनः ॥ ६४ ॥
एवं संशोध्य संस्कृत्य संपूज्य कुलसुन्दरि ।
मालामादाय देवेशि सञ्जपेदर्धरात्रके ॥ ६५ ॥

श्रीदेव्युवाच ।

---

१ 'तारं' क. ग. घ. पाठः । २ 'सर्वशक्ति क. पराशक्ति' ग. घ. ङ. पाठः । ३ 'सर्व' ग. पाठः

करमालास्त्वया प्रोक्ता बह्व्यस्तासां च शोधनम् ।
वद देव कथं कुर्यात् कौलिकः सर्वसिद्धये ॥ ६६ ॥

श्रीभैरव उवाच ।

काली कामः कृपा कुन्ती करमाले हरं वनम् ।
मन्त्रोऽयं करमालायाः शुद्धिदः सर्वसिद्धिदः ॥ ६७ ॥
षण्मासेनैव मालानां शोधनं साधकश्चरेत् ।
ततो जपेन्महाविद्यां सर्वसिद्धीश्वरो भवेत् ॥ ६८ ॥
इदं तत्त्वं हि तत्त्वानां सर्वस्वं पारदैवतम् ।
तव भक्त्या मयाख्यातं नाख्येयं ब्रह्मवादिभिः ॥ ६९ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये माला-तन्मन्त्रादिशोधन-
निरूपणं चतुर्विंशः पटलः ॥ २४ ॥

---

अथ

# पञ्चविंशः पटलः ।

—:-=०*०=-:—

श्रीभैरव उवाच ।

अधुना देवदेवेशि यन्त्रशोधनमुत्तमम् ।
वक्ष्यामि तव भक्त्याहं कौलिकानां हिताय च ॥ १ ॥
सौवर्णं राजतं ताम्रं स्फाटिकं रौध्रिकं तथा ।
कापालिकं च पाशासं श्रीचक्रं वैष्णवाश्मिकम् ॥ २ ॥
एतेष्वष्टसु दिव्येषु योगपीठेषु पार्वति ।

---

कृत ' ग. पाठः ।

विभावयेन्महायन्त्रं दैवं भौमं च भाविकम् ॥ ३ ॥
ऊर्ध्वरेखमधोरेखं तृतीयं गन्धचित्रितम् ।
त्रिविधं यन्त्रमीशानि सुसिद्धं[1] सिद्धसाध्यकम् ॥ ४ ॥
सहस्राभं च पाशासं शोधयेदुत्तरायणे ।
पञ्चमे पञ्चमे देवि ततः सिद्धिप्रदं भवेत् ॥ ५ ॥
शराङ्कुशं वैष्णवाश्मं शोधयेद् दक्षिणायने ।
चतुर्थे च चतुर्थे च ततः सिद्धिमवाप्नुयात् ॥ ६ ॥
सौवर्णं स्फाटिकं यन्त्रं वर्षान्ते शोधयेत् सुधीः ।
राजतं ताम्रिकं यन्त्रं षण्मासान्ते च शोधयेत् ॥ ७ ॥
एवं मयोक्तकालेषु शोधयेद् यन्त्रमीश्वरि ।
सिद्धये कौलिको देवि यथावद्वर्ण्यते मया ॥ ८ ॥
यन्त्रशोधनमन्त्रस्य ऋषिः प्रोक्तो मया शिवः ।
त्रिष्टुप् छन्द इति ख्यातं पराशक्तिश्च देवता ॥ ९ ॥
रमा बीजं परा शक्तिः कामः कीलकमीश्वरि[2] ।
श्रीचक्रशुद्धिसिद्ध्यर्थं विनियोगः प्रकीर्तितः ॥ १० ॥
मुन्यादिना चरेन्न्यासं करन्यासं षडङ्गकम् ।
ततो विष्टरशुद्धिं च प्राणार्पणविधिं चरेत् ॥ ११ ॥
इष्टर्षिदेवतान्यासं कराङ्गन्यासमाचरेत् ।
विधाय मातृकान्यासं लयाङ्गन्याससंयुतम् ॥ १२ ॥
अर्धनारीश्वरन्यासं षोढान्यासमतः परम् ।
मूलत्रिखण्डकं न्यासं कृत्वा प्राणचयं शिवे ॥ १३ ॥
पीठपूजां स्वहृदये कृत्वा षट्चक्रदीपनम् ।
स्वर्णसिंहासने स्थाप्य श्रीचक्रं स्वेष्टदैवतम् ॥ १४ ॥
शोधयेन्मधुना देवि कुण्डगोलोद्भवेन वा ।

---

१ 'स्वसिद्धं' क. ख. ग. पाठः । २ 'कमुच्यते' ख. पाठः ।

अष्टगन्धेन वा देवि पौरुषेण रसेन वा ॥ १५ ॥
इभ्याज्येन महादेवि संस्थाप्य कुलपूजिते ।
श्रीचक्रं मूलमन्त्रेण पूजयेत् तत्र कौलिकः ॥ १६ ॥

(१) वाग्भवं शक्तिबीजं वाक् शक्ति चक्रेश्वरि प्रिये ।
यन्त्रं सौवर्णमुद्धृत्य शोधय-द्वयमुद्धरेत् ॥ १७ ॥
ठद्वयं स्वर्णयन्त्रस्य मन्त्रः शोधनकारकः ।

(२) तारं सिन्धुं च तारं च राजतं यन्त्रमुद्धरेत् ॥ १८ ॥
शोधय-द्वयमापश्च यन्त्रशोधनको मनुः ।

(३) तारं तारा च तारं च वधूं तारं च तारका ॥ १९ ॥
ताम्रेश्वरीति यन्त्रं मे शोधयापो महामनुः ।

(४) वेदाद्यं कमलां मायां तारं यन्त्रं कुलाम्बिके ॥ २० ॥
शोधय-द्विर्वनं मन्त्रः स्फाटिकाश्मविशोधनः ।

(५) प्रणवं कूबरीबीजं मा माया वायुपूजिता ॥ २१ ॥
रुद्रेश्वरि परा यन्त्रं शोधयापो मनुः स्मृतः ।

(६) तारं वाक् कामराजश्च शक्तिः कपालमालिनि ॥ २२ ॥
यन्त्रं शोधय ठद्वन्द्वं कपालशोधनो मनुः ।

(७) तारं गौरी च तार्तीयं वाक् कामश्च चितासने ॥ २३ ॥
यन्त्रं शोधय ठद्वन्द्वं मनुः पाशासंशोधनः ।

(८) वेदाद्यं हरितं वाणी शक्तिः कामो रमा रमा ॥ २४ ॥
नित्ये विष्णुशिलायन्त्रं शोधयापो मनुः स्मृतः ।
इत्येवं यन्त्रमीशानि रत्नसिंहासनस्थितम् ॥ २५ ॥
मूलमन्त्रेण संस्थाप्य पूर्वोक्तौषधवारिणा ।
मन्त्रैरेभिः प्रजप्तैश्च पूजयेद् गन्धमाल्यकैः[1] ॥ २६ ॥
संपूज्य देवि संशोध्य ततः पूजां[2] शिवोदिताम्[3] ।

---

१ 'पुष्पकैः' क. ग. घ. ङ. पाठः । २ 'पूर्णां' घ. ग. पाठः । ३ 'दितम्' ग. घ. पाठः

यथोक्तां साधकः कुर्याद् द्रव्यशोधनपूर्वकम् ॥ २७ ॥
अष्टाङ्गपूजां निर्माय निशीथे जपमाचरेत् ।

श्रीभैरव्युवाच ।

भगवन् कुलकौलेश भैरवाष्टकमध्यग ।
निशीथकालं मे ब्रूहि संशयोऽयं महान् मम ॥ २८ ॥

श्रीभैरव उवाच ।

अर्धरात्रस्तु त्रिविधो यन्मुहूर्तचतुष्टयम् ।
निशीथो वार्धरात्रश्च तृतीयैव महानिशा ॥ २९ ॥
द्वितीये च तृतीये च यामे यामलभैरवि ।
मुहूर्ते द्वे समादाय तथा द्वे च महेश्वरि ॥ ३० ॥
द्वे मुहूर्ते निशीथस्तु परतो द्वे मुहूर्तके ।
अर्धरात्रो मुहूर्ते द्वे पूजार्हः परमेश्वरि ॥ ३१ ॥
मुहूर्तैकं समादाय परतश्चैकमीश्वरि ।
यामद्वयादर्धरात्रो वर्णितः कौलसिद्धये ॥ ३२ ॥
शिवे मध्यमयोः सन्धिर्यामयोर्या[1] महानिशा ।
तस्यां परां जपेद्यस्तु स भवेच्छिवसन्निभः ॥ ३३ ॥
निशीथे पूजयेद्यन्त्रमर्धरात्रे जपेन्मनुम् ।
महानिशायां प्रजपेत् परां कौलिकसत्तमः ॥ ३४ ॥
किं किं न साधयेल्लोके यन्ममापि हि दुर्लभम् ।
रजः शुक्रं सुरां देवि मांसं मीनं च मैथुनम् ॥ ३५ ॥
सर्वथा शोधयेद् देवि मूलमन्त्रेण मान्त्रिकः ।
पिबेन्मद्यं भजेद्रामां स्मरेद् भैरविभैरवम् ॥ ३६ ॥
नमेद्गुरुं जपेद् विद्यामिति कौलमतं परम् ।
प्रातःकृत्यं शिवे कृत्वा श्रीचक्रं पूजयेत् ततः ॥ ३७ ॥

---

१ 'न्धिः पादयोः' ग. घ. पाठः ।

जपेन्मन्त्री महाविद्यां स्तोत्रपाठं चरेत् ततः ।
परां जपेत् सदा सत्यां ततो याति परं पदम् ॥ ३८ ॥
महापदि महोत्पाते महाशोके महामये ।
महामोहे महाऽसौख्ये महादारिद्र्यसङ्कटे ॥ ३९ ॥
महारण्ये महाशून्ये[1] महाऽज्ञाने महारणे ।
दुरापदि दुराशे च दुर्भिक्षे दुर्निमित्तके ॥ ४० ॥
समस्तक्लेशसङ्घाते स्मरेद् देवि पराम्बिकाम् ।
वक्त्रे सरस्वती तस्य लक्ष्मीस्तस्य गृहे सदा[2] ॥ ४१ ॥
धन्या च जननी तस्य येन देवी समर्चिता ।
इदं सारं हि तन्त्राणां मन्त्राणां तत्त्वमुत्तमम् ।
मयोदितं तव स्नेहान्नाख्येयं ब्रह्मवादिभिः ॥ ४२ ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये भैरवभैरवीसंवादे परमार्थप्रदी-
पिकायां यन्त्रशोधनादिविधि-जप-पूजाकालनिरूपणं
पञ्चविंशः पटलः ॥ २५ ॥

समाप्तमिदं पूर्वार्धम् ।

---

१ 'महाशैले' ब. पाठः । २ 'तथा' ख. पाठः ।

अथ

# षड्विंशः पटलः ।

श्रीभैरव्युवाच ।

भगवन् भूतभव्येश[1] कुलधर्मप्रकाशक ।
कुलेश श्रोतुमिच्छामि तन्त्रस्यास्योत्तरार्धकम् ॥ १ ॥

श्रीभैरव उवाच ।

अधुना देवि कौलेशि कौलिकानां हितेच्छया ।
तन्त्रोत्तरार्धं वक्ष्यामि रहस्यविजयाभिधम् ॥ २ ॥
दुर्गादेवी परादेवी पराशक्तिः पराम्बिका ।
देवदेवीति या ख्याता[2] गायत्रीति श्रुतौ स्मृता ॥ ३ ॥
तेजोमयी महाश्यामा महात्रिपुरसुन्दरी ।
पञ्चात्मिका पञ्चमीशी पञ्चव्योमप्रकाशिनी ॥ ४ ॥
उग्रदुर्गा परा या श्रीस्तज्ज्योतिः परमं पदम् ।
परादेवीति या दुर्गा सा शिवः सा हरिः स्मृता ॥ ५
सा सूर्यः सविता सैव महागणपतिः स्मृता ।
पञ्चमी पञ्चिका देवी पञ्चमाचारवर्तिनी ॥ ६ ॥
पञ्चाक्षरीति गायत्री परमात्मेति कीर्त्यते ।
पञ्चकृत्य[3]मयी देवी सर्वदेवीमयी शिवा ॥ ७ ॥
गणेशार्कहरीशान-दुर्गारूपा सरस्वती ।
महाश्यामा महाविद्या पूजनीया यथाक्रमम् ॥ ८ ॥
न कुर्याद् भेदमेतेषां कौलिको वैष्णवोऽथवा ।
गणेशार्कहरीशान-दुर्गाणां परमार्थवित् ॥ ९ ॥

---

१ 'भव' ग. ङ. पाठः । २ 'विख्याता' क. पाठः । ३ 'वेद्य' क. ख, ग. पाठः ।

पूजयेदैक्यभावेन देवीभक्त्यैव भक्तिमान् ।
देवीचक्रेऽर्चयेत् सर्वांशिश्चवलिङ्गेऽथवा शिवे ॥ १० ॥
सालिग्रामशिलायां वा सूर्यपीठेऽथवा प्रिये ।
श्रीगणेश्वरचक्रेण न भेदं कारयेद् बुधः ॥ ११ ॥
भेदं वै कुरुते यस्तु स शैवः शिवहा भवेत् ।
पृथक् पृथक् शिवे कुर्यादर्चनं कौलिकोत्तमः ॥ १२ ॥
गणेशस्य च सूर्यस्य विष्णोर्देवि शिवस्य च ।
श्रीदेव्या उग्रदुर्गाया मन्त्री देवीरहस्यवित्[1] ॥ १३ ॥
अथाहं तव देवेशि प्रेम्णा वक्ष्ये कुलात्मकम् ।
रहस्यविजयं नाम तन्त्रं तन्त्रोत्तरार्धकम् ॥ १४ ॥
पञ्चाङ्गभूतमेतेषां सर्वमन्त्रार्चनामयम्[2] ।
गणेशस्य च पञ्चाङ्गं पञ्चाङ्गं सवितुस्तथा ॥ १५ ॥
लक्ष्मीनारायणस्यापि पञ्चाङ्गं श्रीशिवस्य च ।
दुर्गादेव्याश्च पञ्चाङ्गं दुर्गादेवीरहस्यकम् ॥ १६ ॥
उत्तरार्धमिति प्रोक्तं तन्त्रस्यास्य महेश्वरि ।
सर्वस्वमेतद् देवेशि तन्त्रं देवीरहस्यकम् ॥ १७ ॥
अवक्तव्यमभक्तेभ्यो गोपयेत् कुलनायकः ।
प्रथमं देवि पञ्चाङ्गं महागणपतेः शृणु ॥ १८ ॥
येन श्रवणमात्रेण विघ्ननाशो भवेत् क्षणात् ।
मेरुपृष्ठे सुखासीनं महादेवं त्रिलोचनम् ॥ १९ ॥
सुरासुरगणैर्युक्तं ब्रह्माच्युतनमस्कृतम् ।
सिद्धकिन्नरगन्धर्वैर्यक्षभूतपिशाचकैः ॥ २० ॥
तोषितं नतिभिः स्तोत्रैः पार्वतीसहितं शिवम् ।
सस्मितं भाषमाणं च ब्रह्मणा हरिणा सह ॥ २१ ॥

---

१ 'वत्' क. पाठः । २ 'तत्त्वं' क. ख. ग. पाठः ।

पार्वती प्रणता भूत्वा वचनं समभाषत ।

श्रीदेव्युवाच ।

भगवन् सर्वतत्त्वज्ञ सर्वधर्मप्रकाशक ।
कार्यस्य देवतानां च मनुष्याणां तथैव च ॥ २२ ॥
विघ्नः केन भवेद् देव संशयं छिन्दि शङ्कर ।

श्रीभैरव उवाच ।

देवि वक्ष्ये रहस्यं ते प्रश्नोत्तरमिदं महत् ।
अवक्तव्यमभक्तेभ्यो भक्तेभ्यो मुक्तिसाधनम् ॥ २३ ॥
विनायको गणाध्यक्षो गणेश इति यः प्रभुः ।
विघ्नकर्ता जगत्त्राता विघ्नहर्तेति विश्रुतः ॥ २४ ॥
तस्य भक्तस्य देवस्य मर्त्यस्यापि महेश्वरि ।
विघ्नो न बाधते जातु यस्तं संपूजयेत् सदा ॥ २५ ॥
यो जपेद् देवि तन्मन्त्रं कवचं तस्य धारयेत् ।
पठेन्नाम्नां सहस्रं तु स्तोत्रं मूलैकसाधनम् ॥ २६ ॥
विघ्नो न बाधते तस्य कार्यहानिर्न वा भवेत् ।

श्रीदेव्युवाच ।

देवदेव महादेव गणेशस्य जगत्प्रभो ।
मन्त्रं यन्त्रं स्तवं वर्म नाम्नां सहस्रमुत्तमम् ॥ २७ ॥
पूजां श्रोतुमहं त्वत्तो वाञ्छामि परमेश्वर ।

श्रीभैरव उवाच ।

यो देवदेवो वरदो गणेशो विघ्ननायकः ।
गजाननो गणाध्यक्षो विनायक इति श्रुतः ॥ २८ ॥
पञ्चाङ्गमखिलं तस्य वक्ष्यामि तव प्रीतये ।
तत्रादौ ते प्रवक्ष्यामि मन्त्रोद्धारं सुरेश्वरि ॥ २९ ॥

१ " तस्य ' क. पाठः ।

यन्त्रोद्धारं लयाङ्गं च महागणपतेः शिवे ।

अथ मन्त्रोद्धारः—

तारं मा सकला स्मरो मठशिवौ नाम्नो वरेति द्वयं
सर्पः सर्वमतो जनं डुलिलते जीमूतशर्माक्षरम् ।
भेकी खं लवणं समीरसहितं मन्त्राश्वले ठद्वयं
ह्यष्टाविंशतिवर्णको निगदितो वैनायकोऽयं मनुः ॥ ३० ॥

इति मन्त्रोद्धारः । प्रकाशम्—ओंश्रींह्रींक्लींग्लौंगं गणपतये वरवरद सर्व-जनं मे वशमानय स्वाहा ॥ (२८)

तत्त्वलक्षं सवेदाङ्कं पुरश्चर्या प्रकीर्तिता ।
वटे चतुष्पथे शून्यगृहे प्रेतालये चरेत् ॥ ३१ ॥
नास्य विघ्नो न वाशौचं न वा मन्त्रविपर्ययः ।
न क्लेशो नच दुर्बुद्धिर्न मोहो नच शोकता ॥ ३२ ॥
सर्वथा सिद्धमन्त्रोऽयं महागणपतेः शिवे ।
यन्त्रोद्धारं प्रवक्ष्यामि सर्वाशापरिपूरकम् ॥ ३३ ॥
सर्वसंमोहनं चक्रं गणेशस्य जगत्प्रभोः ।

अथ यन्त्रोद्धारः—

त्रिकोणं खयुक्तं दशारं महेशि
सुवृत्तं तथा नागपत्रं कलारम् ।
सुवृत्तं चतुर्द्वारयुक्तं प्रयुक्तं
गजास्यस्य श्रीचक्रमेतत् प्रसिद्धम् ॥ ३४ ॥

अथ ध्यानं प्रवक्ष्यामि सर्वसिद्धिप्रदायकम् ।
येन स्मरणमात्रेण सर्वो विघ्नः पलायते ॥ ३५ ॥

उद्यत्कोटिदिवाकरांशुसदृशं त्र्यक्षं किरीटोज्ज्वलं
पात्रं मोदकपूर्णमीड्यकलशं पद्माक्षसूत्रं भुजैः ।
बिभ्राणं शुचिनागसम्भवलसत्कायं भुजङ्गोज्ज्वलं
ध्यायेत् सिंहयुगासनं गणपतिं त्रैलोक्यचिन्तामणिम् ॥३६॥

---

* 'तस्य' सर्वत्र पाठः ।

अथ

# एकोनषष्टितमः पटलः ।

श्रीभैरव उवाच ।

अधुना देवि वक्ष्यामि दुर्गायास्तत्त्वमुत्तमम् ।
आचाराणां विधिं येन कलौ दुर्गा प्रसीदति[1] ॥ १ ॥
द्वौ मार्गौ चागमे स्यातां वामाचारस्तु दक्षिणः ।
तयोस्तत्वं कुलाचारः शृणु तेषां विधिं शिवे ॥ २ ॥
साधको दीक्षितो भूत्वा केन सिद्धिमवाप्नुयात् ।
तद्वदामि तव स्नेहान्नचाख्येयं दुरात्मने ॥ ३ ॥
त्रीणि बीजानि दुर्गायास्तदाचारास्त्रयः स्मृताः ।
प्रथमो दक्षिणाचारो वामाचारो द्वितीयकः ॥ ४ ॥
तृतीयस्तु कुलाचारो विधिं तेषां शृणु प्रिये ।
प्रभाते स्नानसन्ध्यादि मध्याह्ने जपमीश्वरि ॥ ५ ॥
और्णमासनमाख्यातं भक्ष्यं पायसशर्कराः ।
माला रुद्राक्षसंभूता पात्रं पाषाणसंभवम् ॥ ६ ॥
भोगः स्वकीयकान्ताभिर्दक्षिणाचार इत्ययम् ।
द्रव्येण मधुना देवि सिद्धिहानिकरो मतः ॥ ७ ॥
वामाचारं प्रवक्ष्यामि श्रीदुर्गासाधनं परम् ।
यं विधाय कलौ शीघ्रं मान्त्रिकः सिद्धिभाग्भवेत् ॥ ८ ॥
माला नृदन्तसंभूता पात्रं पाषाणमुण्डकम् ।
आसनं सिंहचर्मादि कङ्कणं स्त्रीकचोद्भवम् ॥ ९ ॥

---

[1] 'प्रसिद्ध्यति' ग. घ. पाठः ।

द्रव्यमासवतत्त्वाढ्यं भक्ष्यं मांसादिकं शिवे ।
चर्वणं बालमत्स्यादि मुद्रा वीणारवः कथा ॥ १० ॥
मैथुनं वरकान्ताभिः सर्ववर्णसमानतः ।
वामाचार इति प्रोक्तः सर्वसिद्धिप्रदः शिवे ॥ ११ ॥
अन्यथा सिद्धिहानिः स्यान्मन्त्रस्यास्य महेश्वरि ।
तस्माद्वामं भजेन्नित्यं वाम एव परा गतिः ॥ १२ ॥
दक्षिणं च कुलं चैव वीरैः साधकसत्तमैः ।
त्याज्यं दूरात् कलौ देवि वाममेव भजेत् कलौ ॥ १३ ॥
कुलाचारं प्रवक्ष्यामि सेव्यं योगिभिरुत्तमैः ।
कुलस्त्रियं कुलगुरुं कुलदेवीं महेश्वरि ॥ १४ ॥
नित्यं यत् पूजयेदित्थं स कुलाचार उच्यते ।
कुलस्त्रियं शिवे ज्ञात्वा नुत्वा नुत्वा महेश्वरि ॥ १५ ॥
हठादानीय संपूज्य तथा भोगं विधाय च ।
रेतसा तर्पयेद् देवीं श्रीदुर्गां चक्रनायिकाम् ॥ १६ ॥
नीलकण्ठं च विधिना जपं कुर्याद्विशेषतः ।
तत्पूर्वकं चरेद्धोमं कुलकान्तां विभूषयेत् ॥ १७ ॥
पानैः पेयैस्तथा भक्ष्यैः सन्तर्प्य कुलयोषितम् ।
प्रत्यहं वै चरेदेवं कुलाचार इति स्मृतः ॥ १८ ॥
इत्याचारपरः श्रीमान् कुलस्त्रीगुरुपूजकः ।
वामाचारपरो मन्त्री मुक्तिभाग् भविता ध्रुवम् ॥ १९ ॥
इत्येष पटलो गुह्यो देव्याश्चाचारवल्लभः ।
अदातव्योऽप्यभक्तेभ्यो न प्रकाश्यो मुमुक्षुभिः ॥ २० ॥

इति श्रीरुद्रयामले तन्त्रे श्रीदेवीरहस्ये आचारनिरूपण-
मेकोनषष्टितमः पटलः ॥ ५९ ॥

—:※:×:※:—

अथ

# षष्टितमः पटलः ।

श्रीभैरव उवाच ।

अधुना कथयिष्यामि श्रीदुर्गाया रहस्यकम् ।
तत्त्वं मन्त्रस्य देवेशि दशमीपूजनं परम् ॥ १ ॥
दीक्षागुरुः शिवे यस्तु दशमी स प्रकीर्तितः ।
पूजनं तस्य वक्ष्यामि सर्वतन्त्रेषु गोपितम् ॥ २ ॥
दीक्षां गृहीत्वा विधिवद् गुरोः कुलविचक्षणात् ।
तदाज्ञां शिरसादाय साधयेत् स्वमनुं ततः ॥ ३ ॥
एकदा पुण्यदिवसे मुहूर्ते शुभदे तथा ।
गुरुमानीय देवेशि शून्यगेहे चतुष्पथे ॥ ४ ॥
श्मशाने वा वने वापि स्वगृहे वापि पार्वति ।
तत्र भूमौ लिखेद्यन्त्रं यथावद् वर्ण्यते मया ॥ ५ ॥

बिन्दुत्रिकोणं वसुकोणबिम्बं
वृत्ताष्टपत्रं शिखिवृत्तयुक्तम् ।
धरागृहं वह्नितुटीभिरीढ्यं
यन्त्रं गुरोर्देवि मया प्रदिष्टम् ॥ ६ ॥

सिन्दूरेण विलिख्यातः[1] पूजयेच्चक्रमीश्वरि ।
गणेशधर्मवरुणाः कुबेरसहिताः शिवे ॥ ७ ॥
पूज्या द्वाःस्थाः सुपुष्पैश्च[2] गन्धाक्षतपुरःसरैः ।
असिताङ्गो रुरुश्चण्डो क्रोधेशोन्मत्तभैरवौ ॥ ८ ॥

---

१ 'विलिख्याशु' ङ. पाठः । २ 'ष्पैः तु' ङ. पाठः ।

कपाली भीषणो देवि संहारोऽर्च्योऽष्टपत्रके ।
परमानन्दनाथं च प्रकाशानन्दनाथकम् ॥ ९ ॥
श्रीभोगानन्दनाथं च समयानन्दनाथकम् ।
भुवनानन्दनाथं च सुमनानन्दनाथकम् ॥ १० ॥
गगनानन्दनाथं च श्रीविश्वानन्दनाथकम् ।
अष्टौ कुलगुरून् देवि पूजयेद् वसुपत्रके ॥ ११ ॥
मदनानन्दनाथं च श्रीलीलानन्दनाथकम् ।
महेश्वरानन्दनाथं पूजयेद्वै त्रिकोणके ॥ १२ ॥
बिन्दौ गुरुं च संपूज्य गन्धाक्षतप्रसूनकैः ।
तत्र बिन्दौ गुरुं देवि स्थापयेद् भक्तिपूर्वकम् ॥ १३ ॥
संपूजयेत् स्वमूलेन दक्षिणां कालिकां यजेत् ।
महाकालं यजेत् तत्र कामं कामेश्वरीं तथा ॥ १४ ॥
गुरुं च परमं देवि परापरगुरुं तथा ।
परमेष्ठिगुरुं चैव स्वगुरोर्मूर्ध्नि पूजयेत् ॥ १५ ॥
संपूज्य विविधैः पुष्पैर्माल्यैराभरणोत्तमैः ।
दक्षिणाभिर्महेशानि भक्ष्यैर्भोज्यैश्च लेह्यकैः ॥ १६ ॥
चोष्यैः पेयैश्च खाद्यैश्च बलिं दत्त्वा च तर्पयेत् ।
आनन्दरससंपूर्णं गुरुं दृष्ट्वा[3] महेश्वरि ॥ १७ ॥
त[4]तो देवि गुरुं नत्वा प्रार्थयेत् स्वमनोरथम् ।
य एवं पूजयेद् देवि स्वगुरुं पुण्यवासरे ॥ १८ ॥
स एव भैरवः साक्षाद्विचरेद् भुवनत्रये ।
गुरुरेव परो मन्त्रो गुरुरेव परो जपः ॥ १९ ॥
गुरुरेव परा विद्या नास्ति किञ्चिद्गुरुं विना ।

---

१ 'श्रीस्वात्मानन्द' ङ. पाठः । २ 'भजेत्' ङ. पाठः । ३ 'बुद्ध्या क. ख. पाठः । ४ 'तत्र' ङ. पाठः ।

यस्य तुष्टो गुरुर्देवि तस्य तुष्टा महेश्वरी ॥ २० ॥
येन संतोषितो देवि गुरुः स हि सदाशिवः ।
यत्र[1] दृष्ट्वापि वै ब्रूयाद्गुरुस्तन्न समाचरेत् ॥ २१ ॥
पुण्यं वापुण्यमीशानि त्याज्यं ग्राह्यं कुलार्चिते ।
गुरुर्वदति यत् सद्यस्तत् कुर्यात् साधकोत्तमः ॥ २२ ॥
विना गुरूपदेशेन न सिद्ध्यति कलौ मनुः ।
तस्माद् गुरुं भजेद् भक्त्या तोषयेत् सततं गुरुम् ॥ २३ ॥
गुरोर्यत्र परीवादो निन्दा यत्र प्रवर्तते ।
कर्णौ तत्र पिधातव्यौ नो वा दूरं पलायनम् ॥ २४ ॥
गुरुर्देवि परो धर्मो गुरुरेव परा गतिः ।
गुरुमभ्यर्चयेन्नित्यं येन[2] देवी प्रसीदति ॥ २५ ॥
इतीदं दशमीतत्त्वं सर्वागमरहस्यकम् ।
सारात्सारतरं देवि गोपनीयं मुमुक्षुभिः ॥ २६ ॥
इतीदं परमं तत्त्वं तत्त्वं सर्वस्वमुत्तमम् ।
दुर्गारहस्यसाराढ्यं गुह्यं गोप्यं च साधकैः ॥ २७ ॥
इति देवीरहस्याख्यस्तन्त्रोऽयं तन्त्रसागरः ।
सर्वस्वं मे रहस्यं मे सर्वागमनिधिः परः[3] ॥ २८ ॥
श्रीदुर्गायास्तत्त्वभूतो मन्त्रराजमयो ध्रुवः ।
सिद्धिप्रदो महादेवि पूजनीयोऽस्ति साधकैः ॥ २९ ॥

श्रीदेव्युवाच ।

भगवन् भवता भक्त्या प्रसादोऽयं मयि कृतः ।
यत्त्वया वर्णितस्तन्त्रः श्रीदुर्गायाः कुलेश्वर ॥ ३० ॥
क्रीतास्मि तव दास्यस्मि भक्तास्मि त्रिपुरान्तक ।
सर्वथा रक्षणीयास्मि किमन्यत् कथयामि ते ॥ ३१ ॥

---

१ 'यत्र···न···गुरुस्तन्न' ङ. पाठः । २ 'दुर्गा येन' ङ. पाठः । ३ 'रहस्यकः' क. ख. पाठः ।

श्रीभैरव उवाच ।

इदं देवीरहस्याख्यं तन्त्रराजं महेश्वरि ।
अदातव्यमभक्तेभ्यो दुरात्मभ्यो महेश्वरि ॥ ३२ ॥
स्वपुत्रेभ्योऽन्यशिष्येभ्यो न देयं तु मुमुक्षुभिः ।
इदं हि सारं तन्त्राणां तत्त्वं सर्वस्वमुत्तमम् ॥ ३३ ॥
रहस्यं देवि दुर्गाया गोपनीयं स्वयोनिवत् ।

इति श्रीरुद्रयामलतन्त्रान्तर्गत-श्रीदेवीरहस्ये दशमीविधिनिरूपणं षष्टितमः पटलः ॥ ६० ॥

# समाप्तं चेदं देवीरहस्यतन्त्रम् ।

पञ्चाङ्कनन्दशशि (१९९५) संमितवैक्रमेऽब्दे
देवीरहस्यकमशेषसुतन्त्रसारम् ।
श्रीरुद्रयामलमहाब्धिमहार्घरत्नं
संस्कृत्य शुद्धपदपाठसुमेलनाद्यैः ॥ १ ॥
प्राचीनहस्तलिखितानपि जीर्णभूयो-
ग्रन्थान् प्रयत्नवशतोऽनुविधृत्य लब्धान् ।
औदार्यवीर्यसुभगत्वगुणस्फुरच्छ्री-
राजाधिराज-हरिसिंहनृपानुशिष्ट्या ॥ २ ॥
उच्चैःपदाधिकृतिभाजन-काकजाति-
श्रीरामचन्द्रविबुधाधिकृतिप्रबन्धे ।
संपाद्य सूरि-शिवनाथसहायभाजा
प्राकाशि शास्त्रिहरभट्ट-विपश्चितेदम् ॥ ३ ॥

अथ

परिशिष्टम् ।

# ज्वालामुखीपञ्चाङ्गम् ।

श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि भैरवि[1] प्राणवल्लभे ।
ज्वालामुख्यास्तु सर्वस्वं पटलं देवदुर्लभम् ॥ १ ॥

श्रीदेव्युवाच ।

भगवंस्त्वं हि सर्वस्य ज्ञाता शास्त्रस्य धूर्जटे ।
श्रुतानि त्वन्मुखाम्भोजाद् ग्रन्थानि[2] विविधानि च ॥ २ ॥
ज्वालामुख्या महामन्त्रं यन्त्रं पूजा विधानतः ।
त्वयाङ्गं वद मे नाथ[3] यद्यहं प्रेयसी तव ॥ ३ ॥

श्रीभैरव उवाच ।

शृणु देवि मनुं यन्त्रं त्वयाङ्गं भैरवेश्वरि ।
प्रयोगसाधनं वक्ष्ये गोप्याद् गोप्यतरं मम ॥ ४ ॥
इदं विश्वमहो क्रूरं भक्तिहीनं महेश्वरि ।
एकदा हंसरूपेण मनुनाहं जगत्परम् ॥ ५ ॥
देवेशि स्रष्टुमनिशं ज्वालामुख्याः प्रसादतः ।
ज्वालामुख्या तया मन्त्रो वर्णितो नाम[4]मात्रतः ॥ ६ ॥
तदा प्रभृति तन्मन्त्राज्जगत्स्थावरजङ्गमम् ।
सृजामि संहरिष्यामि रक्षामि च दिवानिशम् ॥ ७ ॥

---

१ ' भैरवप्राण ' ख. पाठः । २ ' तन्त्राणि ' ख. पाठः । ३ ' शीघ्रं ' पाठः ।
४ ' नाद ' ख. पाठः ।

यस्या मन्त्रप्रभावेण प्राप्तमैश्वर्यमुत्तमम् ।
ज्वालामुखी जगन्माता सैव स्यात् त्रिगुणात्मिका ॥ ८ ॥
सत्त्वेन सृज्यते विश्वं रजसा चैव पाल्यते ।
तमसा जीर्यते[1] यस्या गुणत्रयप्रभावतः ॥ ९ ॥
त्रिलोकजननी माता सैव मेऽपीष्टदेवता ।
तस्या यन्त्रं च मन्त्रं च ध्यानं लयाङ्गसंयुतम् ॥ १० ॥
प्रयोगान् परमेशानि शृणु त्वं सावधानतः ।
तत्रादौ तु मनूद्धारं सर्वागमविनिश्चितम् ॥ ११ ॥
प्रवक्ष्यामि महादेवि न प्रकाश्यं मुमुक्षुभिः ।
आदौ प्रणवमुद्धृत्य मायां च कमलां तथा ॥ १२ ॥
ज्वालामुखि ममेत्यत्र सर्वशत्रून् समुच्चरेत् ।
भक्षय-द्वयमुद्धृत्य कूर्चं तुरगसंयुतम् ॥ १३ ॥
ठद्वयेन समायुक्तो ज्वालामुख्या ह्ययं मनुः ।
मन्त्रोऽयं परमेशानि कलावीप्सितदायकः ॥ १४ ॥
ब्रह्महत्या गुरोर्हत्या स्त्रीहत्याभक्ष्यभक्षणम् ।
अगम्यगमनं पापं मातृ-स्वसृगमोद्भवम्[2] ॥ १५ ॥
तत् क्षालयति मन्त्रोऽयं देवि सत्यं न संशयः ।
अधुना शृणु देवेशि यन्त्रोद्धारं परात्परम् ॥ १६ ॥
भुक्तिदं मुक्तिदं गोप्यं गीतवादित्रतोषितम् ।
आनन्दसुन्दरं स्तुत्यं यन्त्रोद्धारं ब्रवीम्यहम् ॥ १७ ॥
मत्सर्वस्वं न देष्टव्यं सारात्सारोत्तमोत्तमम् ।
आदौ षट्कोणमुद्धृत्य चोर्ध्वरेखां निकर्षयेत् ॥ १८ ॥
अधोरेखां समाकृष्य पार्श्वाभ्यां च निकर्षयेत् ।
अधोरेखां क्षिपेदूर्ध्वमूर्ध्वरेखां क्षिपेदधः ॥ १९ ॥

---

१ 'लीयते' ख. पाठः । २ 'हत्यासमुद्भवम्' ख. पाठः ।

मध्ये कुर्यात् त्रिकोणैकं न्यसेद्बिन्दुं शिवालयम् ।
मध्ये यत् तु त्रिकोणं स्यात् सुन्दरीभवनं स्मृतम् ॥ २० ॥
ऊर्ध्वत्रिकोणमन्यत् स्याद् दक्षिणाकालिकालयम् ।
मध्ये त्रिकोणबिन्दौ श्रीज्वालामुख्या महालयम् ॥ २१ ॥
ततो वृत्तैकमालिख्य लिखेदष्टारमुत्तमम् ।
षोडशारं समुद्धृत्य वृत्तैकोपरि पार्वति ॥ २२ ॥
वृत्तत्रयं पुनर्न्यस्य लिखेद् भूपुरकं पुनः ।
ज्वालामुख्या इदं यन्त्रं त्रैलोक्योद्धरणक्षमम् ॥ २३ ॥
न देष्टव्योऽन्यशिष्येभ्यो दिष्ट्वा तु ब्रह्महा भवेत् ।
लयाङ्गं शृणु देवेशि ब्रह्मविष्णुसमर्चितम् ॥ २४ ॥
यन्त्रराजस्य देवेशि समासेन यथार्थतः ।
गणेशो धर्मराजश्च वासुकिर्नरसिंहकः ॥ २५ ॥
चतुर्द्वारेषु संपूज्याश्चत्वारो द्वारपालकाः ।
पूर्वे च गणनाथस्तु दक्षिणे धर्मराजकः ॥ २६ ॥
पश्चिमे वासुकिः पूज्य उत्तरे नरसिंहकः ।
ततोऽष्टद्वयपत्रेषु पूज्या ज्वालाश्च षोडश ॥ २७ ॥
वामावर्तक्रमाद् देवि नानापूजाफलं लभेत्[1] ।
वारुणी चैव वात्याली वाराही कुलसुन्दरी ॥ २८ ॥
कूवेरी[2] कुलिका कुण्ठी कुत्सिता कुटिला कुहूः ।
कुन्ती कुम्भेश्वरी कुन्ता कूचरी कारुणी कृतिः ॥ २९ ॥
इति षोडश ज्वालाः स्युस्तस्यास्तु सकलाङ्गगाः ।
ततोऽष्टदलपत्रेषु पूज्या ह्यष्टौ तु कन्यकाः ॥ ३० ॥
माया च मोहिनी चैव बाला च भगरूपिणी ।
भगावासा च भीरुण्डा मृडानी बैन्दवेश्वरी ॥ ३१ ॥

१ 'ननु पूजाफलं हरेत्' ख. पाठः । २ 'कूर्वरी' ख. पाठः ।

अष्टौ कन्याः समाख्याताः संपूज्याश्चाष्टपत्रके ।
ततस्तु ज्वालामुख्यास्तु सुखदा दश पार्वति ॥ ३२ ॥
वामावर्तक्रमेणैव पूजासिद्धिर्भवेद् ध्रुवम् ।
ब्राह्मी च शाम्भवी दुर्गा वाराही कुलकामिनी ॥ ३३ ॥
नारसिंही च कौमारी मातङ्गी भद्रकालिका ।
उग्रतारा समाख्याता ज्वालादशकला इमाः ॥ ३४ ॥
संपूज्या दशपत्रेषु साधकैश्च सुसिद्धये ।
तत ऊर्ध्वे समभ्यर्च्य देवीं त्रिपुरसुन्दरीम् ॥ ३५ ॥
तन्मध्येऽधःस्थिता पूज्या देवी दक्षिणकालिका ।
तन्मध्ये पूजनीया च देवी ज्वालामुखी तथा ॥ ३६ ॥
ज्वलिनी जटिनी चैव जाती जालन्धरी तथा ।
बिन्दौ त्रिकोणमध्यस्थे यन्त्रस्य परमेश्वरी ॥ ३७ ॥
देव्याश्चायुधपूजां च कुर्याच्च चतुरश्रके ।
यन्त्रमध्यस्थिते देवि चतुरश्रे विदिग्गते ॥ ३८ ॥
अभयं वरदं पद्मं पाशं (शरं) संपूजयेत् सुधीः ।
ईशानानुक्रमेणैव पूजयेदायुधांस्तथा ॥ ३९ ॥
लयाङ्गमिति ते प्रोक्तं ध्यानं शृणु महेश्वरि ।
ध्यात्वा देवीं महादेवि मन्त्री स्याद् भैरवोपमः ॥ ४० ॥

ज्वालापर्वतसंस्थितां त्रिनयनां पीठत्रयाधिष्ठितां
ज्वालाडम्बरभूषितां सुवदनां नित्यामदृश्यां जनैः ।
षट्चक्राम्बुजमध्यगां वरशराम्भोजाभयान् बिभ्रतीं
चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं नौम्यहम् ॥ ४१ ॥
उद्यच्छीतकरांशुसंनिभमुखीमापीनतुङ्गस्तनीं
सद्यः फुल्लसरोजपाशममलं वामे करे बिभ्रतीम् ।

---

१ 'मुखगा' ख. पाठः । २ 'नित्यासदृश्यां' ख, पाठः ।

दत्तेऽभीतिवरौ त्रिवर्णविलसद्गात्राङ्गयष्टिं परां
रुद्राब्जस्थत्रिकोणमध्यविगतां ज्वालामुखीमाश्रये ॥ ४२ ॥
शीतांशुद्युतिसन्निभां शशिकलाचूडां त्रिनेत्रां शिवां
द्विःषट्कारसरोजपीठविगतां माध्वीरसाघूर्णिताम् ।
त्र्यर्णोद्भासितसर्वगात्रलतिकां ज्वालादिकन्याकुलां[1]
रज्यत्पादयुगां त्रिलोकजननीं ज्वालामुखीं नौम्यहम् ॥४३॥
इति ध्यानत्रयं प्रोक्तं तत्रमत्रविनिश्चितम् ।
प्रयोगान् शृणु देवेशि श्रुत्वा गोप्यतमान् कुरु ॥ ४४ ॥
स्तम्भनं मोहनं चैव मारणाकर्षणे तथा ।
विद्वेषणं वशीकारमुच्चाटनमतः परम् ॥ ४५ ॥
मौक्तिकं शान्तिकं चैव पौष्टिकं परमाद्भुतम् ।
शृणुष्वावहिता भूत्वा येन ज्वाला प्रसीदति ॥ ४६ ॥
(१) रवावुत्थाय मुहूर्ते ब्राह्मे वा चार्धरात्रके ।
गत्वा नदीतटं कुर्याद्यथा नैमित्तिकीं क्रियाम् ॥ ४७ ॥
स्नानसन्ध्याविधिं कुर्याज्जपमष्टोत्तरं चरेत् ।
ज्वालादेव्या मनुं जप्त्वा व्रजेत् प्रेतालयं ततः ॥ ४८ ॥
तत आनीय देवेशि भस्ममुष्टिं च साधकः ।
निखनेत् कुण्डमेकं तु त्रिकोणं साधकोत्तमः ॥ ४९ ॥
भस्ममुष्टिं च तत्कुण्डे क्षिप्त्वा होमं समाचरेत् ।
घृतेन तिलतैलेन पायसेन सुरेश्वरि ॥ ५० ॥
मूलेन चाचरेद्धोमं यावन्माध्याह्निकं भवेत् ।
तस्योपरि पतेद् दण्डमैषिकं परमेश्वरि ॥ ५१ ॥
होमं संपाद्य[2] देवेशि कुर्यात् कर्म परं सुधीः ।
(२) अर्धरात्रे समुत्थाय भस्मानीय च लेपयेत् ॥ ५२ ॥

---

१ 'कालीकुलां' ख. पाठः । २ 'संपादयेद् देवि' ख. पाठः ।

अङ्गेषु साधको धीमांल्ललाटे तिलकं चरेत् ।
प्रभाते तु व्रजेन्मन्त्री सभामध्ये सुरेश्वरि ॥ ५३ ॥
तस्य दर्शनमात्रेण इन्द्रो जीवः पितामहः ।
स्तम्भवाग्भगवान् विष्णुर्भविष्यति न संशयः ॥ ५४ ॥
(३) मङ्गलेऽह्नि समुत्थाय मध्याह्ने वार्धरात्रके ।
आनीय नूतनं कुम्भं पूरयेत् पयसा प्रिये ॥ ५५ ॥
तस्मिन्मध्ये चरेत् पूजां ज्वालामुख्या महेश्वरि ।
मन्त्री दिनाष्टकं तावद् गन्धार्घ्यकुसुमैस्तथा ॥ ५६ ॥
प्राप्तेऽन्यमङ्गलदिने दद्यान्मन्त्री बलिं शुभम् ।
कुक्कुटं च महेशानि तद्रक्तं च घटे क्षिपेत् ॥ ५७ ॥
ततो मूलेन नैवेद्यं दत्त्वा स्नानं समाचरेत् ।
तेन कुम्भस्य नीरेण साधको मन्त्रसाधकः ॥ ५८ ॥
कर्मणा मनसा वाचा मोहयेद् भुवनत्रयम् ।
सर्वज्ञस्य ममाप्येष करिष्यत्यन्यथा ध्रुवम्[1] ॥ ५९ ॥
(४) अन्यदा शनिवारे तु गत्वा प्रेतालयं शिवे ।
साशिवां देवतां ध्यात्वा कुर्यात् स्नानमनुत्तमम् ॥ ६० ॥
ततोऽष्टोत्तरवारैकशतमावर्त्य मालया ।
योषिन्मूर्तिं विधायैव त्यजेद्रेतः प्रयत्नतः ॥ ६१ ॥
रेतसश्चोपरि क्षौद्रं क्षिप्त्वा मद्यं क्षिपेत् सुधीः ।
स्तन्यं संक्षिप्य विश्वेशि गोमूत्रमुपरि क्षिपेत् ॥ ६२ ॥
नरमूत्रं च संक्षिप्य खरमूत्रं च निःक्षिपेत् ।
गजमूत्रं तथा मध्ये मीनमांसं महेश्वरि ॥ ६३ ॥
तिलतैलं च लवणमारनालसमन्वितम् ।
घटं संपूर्य विधिवत् साधकः प्रेतमन्दिरे ॥ ६४ ॥

---

१ 'द्रुतम्' ख. पाठः ।

भूमौ क्षिप्त्वा चिरेन्नित्यं जपेदष्टोत्तरं शतम् ।
मासमेकं समुल्लङ्घ्य दत्त्वा माहिषिकं बलिम् ॥ ६५ ॥
ततो विरचयेद्धोमं पायसेन च सर्पिषा ।
तथा विरीफलं हुत्वा जुहुयाच्च हरीतकीम् ॥ ६६ ॥
ततो मासे गते देवि साधको मन्त्रसाधकः ।
घटं निष्कर्षयेद्भूमौ प्रणम्य शिरसा पुनः ॥ ६७ ॥
जपेदेकसहस्रं तु मूलमन्त्रं यथार्थतः ।
अर्धरात्रे रिपोर्नाम गृहीत्वा तु चतुष्पथे ॥ ६८ ॥
कुम्भं च साधको भिन्द्यात् सद्यः शत्रुर्मरिष्यति ।
(५) अथाकर्षणकं वक्ष्ये प्रभाते गुरुवासरे ॥ ६९ ॥
गत्वा रहःस्थलं देवि कुर्यान्नैमित्तिकीं क्रियाम् ।
ततः क्षीरं समानीय माहिष्यस्तन्यमेव च ॥ ७० ॥
एकीकृत्य चरेद्धोमं सर्पिषा पायसेन च ।
कृत्वा चैव प्रियाभोगं रेतः क्षीरे विनिःक्षिपेत् ॥ ७१ ॥
होमयेत् पुष्पसङ्घातं पीतं रक्तं च पाण्डुरम् ।
अन्येद्युरथ देवेशि शीतलं भस्म चोद्धरेत् ॥ ७२ ॥
योजयेद्रेतसा साकं क्षिपेन्मन्त्री चतुष्पथे ।
उर्वशी स्वर्गसंस्थापि प्रातः प्रादुर्भविष्यति ॥ ७३ ॥
(६) चन्द्रवारे समुत्थाय गत्वा प्रेतालयं सुधीः ।
मध्याह्ने नूतने कुम्भे क्षिपेद् भस्मास्थिसञ्चयम् ॥ ७४ ॥
घटमाच्छाद्य वस्त्रेण क्षिपेद् भूमौ च मान्त्रिकः ।
जपेद् दिनाष्टकं यावद् मूलमन्त्रमनुस्मरन् ॥ ७५ ॥
अष्टमे दिवसे प्राप्ते कुम्भमाकृष्य[1] मान्त्रिकः ।
अर्धरात्रे रिपोर्द्वारि घटं तत् स्फोटयेच्छनैः ॥ ७६ ॥

---

१ 'आक्षिप्य' ख. पाठः ।

पादप्रहारदशभिः शत्रोर्विद्वेषणं भवेत् ।

(७) बुधवारे सुनक्षत्रे पञ्चगव्यं समानयेत् ॥ ७७ ॥

लिप्त्वा भूमिं त्रिकोणं तु कुण्डं लिख्य महामनुम् ।

तन्मध्ये पूरयेद्यन्त्रं होमयेन्मूलजाक्षरैः ॥ ७८ ॥

बलिं दत्त्वा बिडालं च साधको मूलमन्त्रतः ।

जपेत् सप्तसहस्रं तु साङ्गं च विधिवन्नरः ॥ ७९ ॥

यस्य नाम च सङ्गृह्य स्त्रियो वा पुरुषस्य च ।

सप्तवारं सुरेन्द्रोऽपि वशीभवति नान्यथा ॥ ८० ॥

ब्रह्माद्या निर्जराः सर्वे रम्भाद्या ह्यप्सरोगणाः ।

वशमायान्ति देवेशि मन्त्रस्यास्य प्रसादतः ॥ ८१ ॥

(८) शनिवारे खरं कृष्णं वनं गत्वा निशीथके ।

यन्त्रं संपूज्य तस्याग्रे बलिं दद्यात् स्वमूलतः ॥ ८२ ॥

जपं च दशसाहस्रं कृत्वा कुण्डं खनेत् पथि ।

तद्रक्तं होमयेत् सर्पिः शत्रोर्नाम समुच्चरेत् ॥ ८३ ॥

तेनैव सर्वरिपवः संक्षयं यान्त्यसंशयः ।

(९) शुभेऽह्नि शुभनक्षत्रे गत्वा सिन्धुतटे शुभे ॥ ८४ ॥

मूलेनैवाचरेद्धोमं शमीपत्रैस्तु साधकः ।

स्तन्यादिक्षीरखण्डाद्यैः सर्पिषा तद्दशांशतः ॥ ८५ ॥

होमं संपाद्य देवेशि दद्यात् पूर्णाहुतिं ततः ।

तस्माच्च जायते पुष्टिर्देवानामपि दुर्लभा ॥ ८६ ॥

इदं पटलमाख्यातं ज्वालाया ह्युत्तमं मया ।

रहस्यं परमं देवि सर्वस्वं सारमुत्तमम् ॥ ८७ ॥

दुर्लभं त्रिदिवे देवि न दातव्यं हि कस्यचित् ।

निन्दकाय च दुष्टाय द्वेषिणे भक्तिवर्जिते ।

गोप्यं गुप्ततमं भूमौ कलाविष्टफलप्रदम् ॥ ८८ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीज्वालामुखीपटलम् ॥

# अथ पूजापद्धतिः ।

अधुना देवि वक्ष्यामि ज्वालापद्धतिमुत्तमाम् ।
गद्यपद्यमयीं गुह्यां कोटियज्ञफलप्रदाम् ॥ १ ॥
प्रातः कृत्यमकृत्वा तु श्रीज्वालां पूजयेत् तु यः ।
तस्य पूजा च विफला शौचहीना यथा क्रिया ॥ २ ॥

तत्रादौ श्रीमान्साधको ब्राह्मे मुहूर्ते शयनतलादुत्थाय करचरण-मुखानि प्रक्षाल्य निजासने समुपविश्य, निजशिरसि श्वेतवर्णाधोमुख-सहस्रदलकमलकर्णिकान्तर्गत-चन्द्रमण्डलसिंहासनोपरि निषण्णं, स्वगुरुं शुक्लवर्णं शुक्लालङ्कारभूषितं ज्ञानानन्दमुदितमानसं सच्चिदानन्दविग्रहं चतुर्भुजं ज्ञानमुद्रापुस्तकवराभयकरं त्रिनयनं प्रसन्नवदनेक्षणं सर्वदेवदेवं परमशिवस्वरूपं, वामाङ्के वामहस्तधृतकमलया रक्तवसनाभरणया स्वप्रियया दक्षिणभुजेनालिङ्गितं शान्तं सुप्रसन्नं ध्यात्वा, तच्चरणकमलयुगलविगलदमृतधारया स्वात्मानं प्लुत विभाव्य मानसोपचारैराराधयेत् । यथा— लं भूम्यात्मकं गन्धं समर्पयामि नमः । हं आकाशात्मकं पुष्पं० । यं वाय्वात्मकं धूपं० । रं वह्न्यात्मकं दीपं० । वं अमृतात्मकं नानानैवेद्यं० । सं सर्वात्मकानि फलमूलताम्बूलानि समर्प० । ॐऐंह्रींश्रीं हसखफ्रें हसक्षमलवरयऊं सहखफ्रें सहक्षमलवरयऊं हसौं स्हौं श्रीमच्छ्रीअमुकानन्दनाथश्रीपादुकां श्रीअमुकाम्बाश्रीपादुकां पूजयामि नमः, इति दशधा विमृश्य मनसा दण्डवत्प्रणामं कुर्यात् ॥

सहस्रदलपङ्कजे सकलशीतरश्मिप्रभं
वराभयकराम्बुजं विमलगन्धपुष्पाम्बरम् ।

प्रसन्नवदनेक्षणं सकलदेवतारूपिणं
सरेच्छिरसि हंसगं तदभिधानपूर्वं गुरुम् ॥ १ ॥

इति ध्यात्वा प्रणाममन्त्रान् पठेत् ।

नमामि सद्गुरुं शान्तं प्रत्यक्षं शिवरूपिणम् ।
शिरसा योगपीठस्थं मुक्तिकामार्थसिद्धये ॥ २ ॥
श्रीगुरुं परमानन्दं वन्दाम्यानन्दविग्रहम् ।
यस्य सान्निध्यमात्रेण चिदानन्दायते परम् ॥ ३ ॥
अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ४ ॥
अखण्डमण्डलाकारं व्याप्तं येन चराचरम् ।
तत्पदं दर्शितं येन तस्मै श्रीगुरवे नमः ॥ ५ ॥
गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुः साक्षान्महेश्वरः ।
गुरुरेव जगत्सर्वं तस्मै श्रीगुरवे नमः ॥ ६ ॥
नमस्ते नाथ भगवञ्छिवाय गुरुरूपिणे ।
विद्यावतारसंसिद्ध्यै स्वीकृतानेकविग्रह ॥ ७ ॥
नवाय नवरूपाय परमार्थैकरूपिणे ।
सर्वाज्ञानतमोभेदभानवे चिद्घनाय ते ॥ ८ ॥
स्वतन्त्राय दयाक्लृप्तविग्रहाय परात्मने ।
परतन्त्राय भक्तानां भव्यानां भव्यरूपिणे ॥ ९ ॥
प्रकाशिनां प्रकाशाय विवेकाय विवेकिनाम् ।
ज्ञानिनां ज्ञानरूपाय विमर्शाय विमर्शिनाम् ॥ १० ॥
पुरस्तात् पार्श्वयोः पृष्ठे नमस्कुर्यामुपर्यधः ।
सदा सच्चित्तरूपेण विधेहि भवदासनम् ॥ ११ ॥

इति श्रीगुरुं प्रणम्य, सुप्रसन्नं विभाव्य मनसा तदाज्ञां गृहीत्वा,

मूलाधारे स्वर्णवर्णचतुर्दलकमलकर्णिकान्तर्गतत्रिकोणचक्रान्तर्गतशृङ्गाट-कोपरि परां शक्तिं कुण्डलिनीमुद्यद्दिनकरसहस्रभास्वरां विद्युत्कोटिसन्निभां सकलमन्त्रमातरं पञ्चाशद्वर्णविग्रहामष्टात्रिंशत्कलारूपिणीं सर्वप्राणिजीवां त्रिधामधामानं सर्पाकारामूर्ध्वमुखीं सार्धत्रिवलयां बिसतन्तुतनीयसीं सुप्तां विभाव्य गुरूपदिष्टनिजसहजनादेन सचैतन्यां विधाय, तत्र चतुर्दलेषु वं नमः, शं नमः, षं नमः, सं नमः इति पत्रेषु प्रादक्षिण्येन मध्ये मूलेन च संपूज्य, हंसः इति मन्त्रेण सर्वत्रोत्थाप्य, ततो विद्रुमवर्णे स्वाधिष्ठाने लिङ्गमूले षड्दलकमले तां नीत्वा, तत्र बं नमः, भं नमः, मं नमः, यं नमः, रं नमः, लं नमः, इति पत्रेषु मध्ये मूलेन च संपूज्य, ततो मणिपूरके नाभौ नीलवर्णे दशदलकमले तां नीत्वा तत्र डं नमः, ढं नमः, णं नमः, तं नमः, थं नमः, दं नमः, धं नमः, नं नमः, पं नमः, फं नमः, इति पत्रेषु मध्ये मूलेन च संपूज्य, ततो वक्षस्यनाहते पिङ्गलवर्णे द्वादशदलकमले तां नीत्वा तत्र कं नमः, खं नमः, गं नमः, घं नमः, ङं नमः, चं नमः, छं नमः, जं नमः, झं नमः, ञं नमः, टं नमः, ठं नमः, इति पत्रेषु मध्ये मूलेन च संपूज्य, ततो विशुद्धौ कण्ठे धूम्रवर्णे षोडशदलकमले तां नीत्वा तत्र अं नमः, आं नमः, इं नमः, ईं नमः, उं नमः, ऊं नमः, ऋं नमः, ॠं नमः, ऌं नमः, ॡं नमः, एं नमः, ऐं नमः, ओं नमः, औं नमः, अं नमः, अः नमः, इति पत्रेषु मध्ये मूलेन च संपूज्य, तत आज्ञाचक्रे भ्रूमध्ये विद्युद्वर्णे द्विदलकमले तां नीत्वा तत्र हं नमः, क्षं नमः, इति पत्रयोर्मध्ये मूलेन च संपूज्य, ततो ब्रह्मरन्ध्रगतद्वादशान्तचक्रं प्रापय्य तत्र सहस्रदलकमलकर्णिकान्तवर्तिबिन्दुरूपतेजोमयपरमशिवेन सहैकतां नीत्वा, ततः स्रवता परमामृतेन तां सन्तर्प्य तत्र नादश्रवणतत्परो मुहूर्तं लयं विभाव्य, ततोऽवरोहे सर्वत्र सोऽहमिति मन्त्रेण कमलात्कमलेऽवरोह्यमाणामाज्ञाचक्रादिक्रमेण तेषु तेषु कमलेषु तैस्तैरक्षरैः संपूज्यमानां तत्तदाधार-तत्तद्धातु-तत्तद्वर्ण-तत्तदधिदेवताः सन्तर्पयन्तीं मूलाधारं प्रापय्य तत्रैव स्वस्थाने संस्थापयेत् । इत्यारोहावरोहक्रमेण परां शक्तिं कुण्डलिनीं ध्यात्वा

१ " शृङ्गाटकान्तर्गतत्रिकोणपीठोपरि परां " इति ख. पाठः ।

प्रकाशमानां प्रथमे प्रयाणे प्रतिप्रयाणेऽप्यमृतायमानाम् ।
अन्तःपदव्यामनुसञ्चरन्तीमानन्दरूपामबलां प्रपद्ये ॥

इति स्तुत्वा,

नाहमस्मि न चान्योऽस्ति ध्येयं चात्र न विद्यते ।
आनन्दपदसंलीनं मनः समरसीगतम् ॥
अहं देवी न चान्योऽस्ति ब्रह्मैवाहं न शोकभाक् ।
सच्चिदानन्दरूपोऽहं स्वात्मानमिति चिन्तयेत् ॥

इति संस्मृत्य, गुरूपदेशपूर्वं सूक्ष्मध्यानेनैवानेन स्वेष्टदेवतास्थूलध्यानं कुर्यात् । तत्तेजसा व्याप्तं स्वदेहं विचिन्त्य तत्तेजसैव परिणतां स्वहृदयकमले स्वाभेदेन श्रीपरदेवतां ध्यात्वा प्राणायामत्रयं कुर्यात् । तद्विधिर्यथा—तत्र विहितपद्मासनो मूलाधारार्पितचित्तवृत्तिर्मूलं प्रणवं वा षोडशवारमुच्चरन् दक्षाङ्गुष्ठेन दक्षनासापुटं निरुध्य वामेन पुटेन पवनं पूरयेत् । ततस्तमेव चतुष्षष्टिवारमुच्चरन् दक्षानामाकनिष्ठाभ्यां वामं पुटं च दृढं निरुध्य द्वाभ्यां पवनं कुम्भयेत् । ततस्तमेव द्वात्रिंशद्वारमुच्चरन् वामं पुटं तथैव निरुध्य दक्षिणेन पुटेन पवनं शनैः शनै रेचयेदित्येकः प्राणायामः । एष एव विपर्ययेण क्रियमाणो द्वितीयः । प्रथमवत् तृतीयः । इत्थं प्राणायामत्रयेण निरस्तसकलकलुषं स्वदेहं देवताराधनयोग्यं विभाव्य स्वमूलविद्याया ऋष्यादिस्मरणं विदधीत । यथा—अस्य श्रीज्वालामुखीमन्त्रराजस्य श्रीवैश्वानर ऋषिः, अनुष्टुप् छन्दः, श्रीज्वालामुखी देवता, ह्रीं बीजं, श्रीं शक्तिः, ह्रूं कीलकं चतुर्वर्गसाधनार्थे जपे विनियोगः इति स्मृत्वा न्यसेत् । श्रीवैश्वानरऋषये नमः शिरसि, अनुष्टुप्छन्दसे नमो मुखे, श्रीज्वालामुखीदेवतायै नमो हृदि, ह्रीं बीजाय नमो गुह्ये, श्रीं शक्तये नमः पादयोः, ह्रूं कीलकाय नमो नाभौ, जपे विनियोगाय नमः सर्वाङ्गेषु । इति ऋष्यादिन्यासः । ॐह्रांश्रां अङ्गुष्ठाभ्यां नमः, ॐह्रींश्रीं तर्जनीभ्यां स्वाहा, ॐह्रूंश्रूं मध्यमाभ्यां वषट्, ॐह्रैंश्रैं अनामिकाभ्यां हुं, ॐह्रौंश्रौं कनिष्ठिकाभ्यां वौषट्, ॐह्रःश्रः करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिन्यासः । इति करषडङ्गन्यासं विधाय स्वहृदयकमले स्वाभेदेन श्रीभैरवभैरव्यौ ध्यायेत् । यथा

त्रिनेत्रमिन्द्वर्धकिरीटरत्नं कल्पान्तसूर्यप्रभमिन्दुहासम् ।
वृषासनं शूलकपालहस्तं वन्दे महादेवमहं चिदीशम् ॥ १ ॥

ज्वालापर्वतसंस्थितां त्रिनयनां पीठत्रयाधिष्ठितां
ज्वालाडम्बरभूषितां सुवदनां नित्यमदृश्यां जनैः ।
षट्चक्राम्बुजमध्यगां वरशराम्भोजाभयान् बिभ्रतीं
चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं नौम्यहम् ॥ २ ॥

इति ध्यात्वा मानसोपचारैराराध्य, ओमिति सेतुं हृदि दशधा विन्यस्य, स्त्रीमिति महासेतुं विशुद्धौ सहस्रारे च दशधा विन्यस्य, ओंअंमूलं ऐंअंआमित्यादि क्षः इत्यन्तम् । ओमिति मणिपूरके निर्वाणं दशधा जपेत् । ततो मन्त्रसंस्कारं कुर्यात् । यथा "श्रींओं ज्वालामुखि मम सर्वशत्रून् भक्षय २ हूं फट् स्वाहा ह्रीं" इति त्रिर्जपेत्, इत्युत्कीलनम् । हूंओंह्रींश्रीं ज्वालामुखि मम सर्वशत्रून् भक्षय २ स्वाहा, इति त्रिःसञ्जीवनम् । चंछंजं मूलं झंञं इति त्रिर्जपेत्, इति तौटिल्यम् । ओंह्रींश्रीं ज्वालामुखि भैरवशापं मोचय २ हूं फट् स्वाहा, इति शाप-हरीं दशधा जपेत् । ओंह्रींश्रीं कुरुकुल्लायै स्वाहा, इति कुरुकुल्लां दशधा जपेत् । ओंह्रींश्रीं नमो ज्वालामुख्यस्त्राय दहदह दुरितं हूं फट् हन २ कीलान् स्वाहा ज्वालामुखीं ह्रीं स्वाहा, इत्यस्त्रमन्त्रं त्रि-र्जपेत् । ओं मूलं ओं इत्यशौचद्वयनिवारणार्थं सप्तधा जपेत् । ओंज्वा-लामुख्यै विद्महे ह्रीं जगद्भक्षिण्यै धीमहि श्रीं तन्नो ज्वाले प्रचोद यात्, इति मूलगायत्रीं दशधा जप्त्वा, मालामादाय ओं मां माले महामाले सर्वशक्तिस्वरूपिणि । चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ ओंह्रीं सिद्ध्यै नमः, इति मनसा गन्धादिना तां संपूज्य, ओंगं अविघ्नं कुरु माले त्वं सर्वभावेषु सर्वदा । इति मनसा पूजितां दक्ष-करेण मालामादाय शिरसि श्रीगुरुं शुक्लवर्णं कण्ठे स्वर्णवर्णां मूलविद्यां हृदि श्रीपरदेवीं यथोक्तरूपां ध्यायन् यथाशक्ति जपं कृत्वा, जपान्ते

त्वं माले सर्वदेवानां प्रीतिदा शुभदा भव ।
शुभं कुरुष्व मे भद्रे यशो वीर्यं च सर्वदा ॥

इति पठित्वा मालां शिरसि संस्थाप्य, ओंह्रांह्रौं महादेवाय नमः इति भैरवमन्त्रं यथोक्तविधिना संजप्य, मूलं ससंपुटं त्रिर्जप्त्वा पुन-

रपि प्राणायामादिन्यासान् विधाय,

गुह्यातिगुह्यगोप्त्री त्वं गृहाणास्मत्कृतं जपम् ।
सिद्धिर्भवतु मे देवि त्वत्प्रसादान्महेश्वरि ॥

इत्यनेन तेजोमयं जपं श्रीदेवीवामहस्ते समर्प्य योनिमुद्रया प्रणमेत् ।

प्रातः प्रभृति सायान्तं सायादि प्रातरन्ततः ।
यत्करोमि जगद्योने तदस्तु तव पूजनम् ॥

इति निजकृत्यं समर्प्य, स्वकार्यानुष्ठानाय,

त्रैलोक्यचैतन्यमयि सुरेशि श्रीज्वालिके त्वच्चरणाज्ञयैव ।
प्रातः समुत्थाय तव प्रियार्थं संसारयात्रामनुवर्तयिष्ये ॥
संसारयात्रामनुवर्तमानं ज्वालामुखि त्वच्चरणाज्ञयालम् ।
स्पर्धातिरस्कारकलिप्रमादभयानि मां माभिभवन्तु मातः ॥
जानाम्यधर्मं नच मे निवृत्तिर्जानामि धर्मं नच मे प्रवृत्तिः ।
त्वया हृषीकेशि हृदिस्थयाहं यथा नियुक्तोऽस्मि तथा करोमि ॥

इति श्रीदेव्याज्ञां प्रार्थ्य, मूलाधारादिद्वादशान्तचक्रपर्यन्तस्थिताभ्यो महागणपतिप्रभृतिदेवताभ्यः श्रीगुरूपदेशज्ञातं सहजसिद्धमजपाजपं सङ्कल्प्य समर्पयेत् । यथा अद्य पूर्वेद्युरहोरात्राचरितमुच्छ्वासनिःश्वासात्मकं षट्शताधिकमेकविंशतिसहस्रसंख्याकमजपाजपं मूलाधार-स्वाधिष्ठान-मणिपूरानाहत-विशुद्धाज्ञा-ब्रह्मरन्ध्रेषु चतुर्दल-षड्दल-दशदल-द्वादशदल-षोडशदल-द्विदल-सहस्रदलेषु स्वर्णविद्रुमनीलपिङ्गलधूम्रविद्युत्कर्बुरवर्णेषु स्थिताभ्यो गणपतिब्रह्मविष्णुरुद्र-जीवात्मपरमात्मश्रीगुरुपादुकाभ्यो यथा भागशः समर्पयामि, इति स्मृत्वा कृताञ्जलिर्न्यसेत् । यथा-ॐऐंह्रींश्रीं मूलाधारचक्रस्थाय श्रीगणपतये अजपाजपानां षट्शतानि समर्पयामि नमः । ४ स्वाधिष्ठानचक्रस्थाय ब्रह्मणेऽजपाजपानां षट्सहस्राणि समर्प० । ४ मणिपूरचक्रस्थाय विष्णवेऽजपाजपानां षट्सहस्राणि समर्पया० । ४ अनाहतचक्रस्थाय रुद्रायाजपाजपानां षट्सहस्राणि समर्पया० । ४ विशुद्धचक्रस्थाय जीवात्मनेऽजपाजपानां सहस्रं समर्पया० । ४ आज्ञाचक्रस्थाय परमात्मनेऽजपाजपानां सहस्रं समर्प० । ४ सहस्र-

दलकमलकर्णिकामध्यवर्तिन्यै श्रीगुरुपादुकायै अजपाजपानां सहस्रं समर्पयामि नमः । इत्यजपाजपं समर्प्य, अजपामन्त्रेण प्राणायामं कृत्वा संकल्पं कुर्यात् । यथा—

ॐअस्य श्रीअजपागायत्रीमन्त्रस्य, हंस ऋषिः, अव्यक्तगायत्रीछन्दः, श्रीपरमात्मा परमहंसो देवता, हं बीजं, सः शक्तिः, सोऽहं कीलकं, ॐकारस्तत्त्वं, उदात्तः स्वरः, नभः स्थानं, हैमो वर्णः, मम मुक्तिसाधनार्थे अजपाजपे विनियोगः । ॐ हंसऋषये नमः शिरसि । ॐ अव्यक्तगायत्रीच्छन्दसे नमो मुखे । ॐ श्रीपरमहंसदेवतायै नमो हृदि । ॐ हं बीजाय नमो गुह्ये । ॐ सः शक्तये नमः पादयोः । ॐ सोऽहं कीलकाय नमो नाभौ । ॐ ॐकारतत्त्वाय नमो हृदये । ॐ उदात्तस्वराय नमः कण्ठे । ॐ नभसे स्थानाय नमो मूर्ध्नि । ॐ हैमाय वर्णाय नमः सर्वाङ्गेषु, इति विन्यस्य मम मोक्षार्थेऽजपाजपे विनियोगः, इति कृताञ्जलिः पठेत् । इति ऋष्यादिन्यासः । ॐ ह्सां सूर्यात्मने स्वाहा अङ्गुष्ठाभ्यां नमः । ॐ ह्सीं सोमात्मने स्वाहा तर्जनीभ्यां स्वाहा । ॐ ह्सूं निरञ्जनात्मने स्वाहा मध्यमाभ्यां वषट् । ॐ ह्सैं निराभासात्मने स्वाहा अनामिकाभ्यां हुं । ॐ ह्सौं अनन्ततनुः सूक्ष्मादेवी प्रचोदयात् स्वाहा कनिष्ठिकाभ्यां वौषट् । ॐ ह्सः अव्यक्तबोधात्मने स्वाहा करतलकरपृष्ठाभ्यां फट् । एवं हृदयादिन्यासः । ततो ध्यानम्—

द्यां मूर्धानं यस्य विप्रा वदन्ति खं वै नाभिं चन्द्रसूर्यौ च नेत्रे ।
दिग्भिः श्रोत्रे यस्य पादौ क्षितिश्च ध्यातव्योऽसौ सर्वभूतान्तरात्मा ॥

इति विराट्स्वरूपं स्वात्मानं ध्यात्वा तदनुसन्धायिनं प्राणवायोर्निर्गमप्रवेशात्मकमजपामन्त्रं पञ्चविंशतिवारं जप्त्वा समर्प्य, श्रीगुरूपदिष्टमार्गेण नादानुसन्धानपूर्वकं निरस्तसमस्तोपाधिना केनापि चिद्विलासेन प्रवर्तमानोऽस्मीति विभाव्य, स्वकार्यानुष्ठानाय

समुद्रमेखले देवि पर्वतस्तनमण्डले ।
विष्णुपत्नि नमस्तुभ्यं पादस्पर्शं क्षमस्व मे ॥

इति भूमिं प्रार्थ्य, श्वासानुसारेण तस्यां पादं निधाय, "नन्दन्तु साधकाः सर्वे" इत्यादि पठन् बहिर्निर्गत्य मलमूत्रोत्सर्गशौचाचमनं निधाय, क्लीं कामदेवाय सर्वजनमनोहराय नमः, इति दन्तधावनं कुर्यात्। ततो नद्यादौ गत्वा वैदिकस्नानं निर्वर्त्य तान्त्रिकस्नानमारभेत्। यथा—तत्रादौ मूलेन करचरणमुखानि प्रक्षाल्य, ऊँमणिधरि वज्रिणि महाप्रतिसरे रक्ष २ हूं फट् स्वाहा, इति शिखां बद्ध्वा, मूलविद्यया त्रिराचम्य, मूलं आंह्रीं इति गण्डूषषट्कं कृत्वा, ह्रीं वैश्वानरऋषये नमः पुष्पार्घ्यधूपदीपादिना तुष्टो भव स्नानकाले विघ्नान्निवारय २ स्वाहा, इति दशधाभ्युक्ष्य मूलेन तटान्मृदं गृहीत्वा स्वाहेति शिलां प्रक्षाल्य, तत्र मृदं संस्थाप्य स्नानं कुर्यात्। तत्रादौ मूलं आत्मतत्त्वं शोधयामि स्वाहा, मू० विद्यातत्त्वं शोधयामि स्वाहा, मू० शिवतत्त्वं शोधयामि स्वाहा, इत्याचम्य ऋष्यादिकरषडङ्गन्यासं च कृत्वा, ऊँह्रींश्रीं ज्वालामुखि ह्रीं फट् स्वाहा, इति मृदो भागत्रयं कृत्वा ऊमित्येकां मृदं शोधयेत्। तत एकां मृदं गृहीत्वा अद्येत्यादि स्नानसङ्कल्पं कुर्यात्। ततो नद्यां नाभिमात्रे जले स्थित्वा स्वपुरतो जले हस्तमात्रं चतुरश्रं तीर्थं परिकल्प्य,

ऊँ ब्रह्माण्डोदरतीर्थानि करैः स्पृष्टानि ते रवे।
तेन सत्येन देवेश तीर्थान् देहि दिवाकर॥

इति सूर्यात्तीर्थं प्रार्थ्य, क्रोमिति अङ्कुशमुद्रया सूर्यमण्डलं भित्त्वा,

ऊँगां गङ्गे च यमुने चैव गोदावरि सरस्वति।
नर्मदे सिन्धुकावेरि जलेऽस्मिन् सन्निधिं कुरु॥

इति सूर्यमण्डलात्तीर्थान्यावाह्य पुरः कल्पिततीर्थे नियोज्य, पुनः सूर्यमण्डलादेव ह्रांह्रींह्रूंह्रैंह्रौंह्रः सर्वानन्दमयि तीर्थशक्ते एह्येहि स्वाहा, इति तीर्थशक्तिमावाह्य तस्मिंस्तीर्थमण्डले तां ध्यायेत्। यथा—

सर्वानन्दमयीमशेषदुरितध्वंसां मृगाङ्कप्रभां
त्र्यक्षां चोर्ध्वकरद्वयेन दधतीं पाशं सृणिं च क्रमात्।

---

१ 'प्रियाय' ख. पाठः।

दोर्भ्यां चामृतपूर्णहेमकलशं शुक्लाक्षमालाम्बरां
गङ्गासिन्धुसरिद्द्वयादिसहितां श्रीतीर्थशक्तिं भजे ॥

इति ध्यात्वा योनिमुद्रया मूलेन तज्जलमष्टधाभिमन्त्र्य ह्रीमित्यालोड्य, वमिति धेनुमुद्रयामृतीकृत्य, ॐआत्मतत्त्वाय नमः, ॐविद्यातत्त्वाय नमः ॐशिवतत्त्वाय नमः, इति तत्त्वत्रयं जले विन्यस्य तेन निजशिरस्त्रिः प्रोक्ष्य, एकां मृदं जले क्षिप्त्वा द्वितीयमृदाङ्गानि संशोध्य तृतीयां गृहीत्वा देवतावाहनं कुर्यात्। यथा—

ज्वालामुखि शिवारूढे ॐह्रींश्रींबीजत्रयान्विते ।
परिवारयुते देवि जलेऽस्मिन् सन्निधिं कुरु ॥

इति तृतीयया मृदा देवतामावाह्य तत्र जले यन्त्रं विभाव्य, ॐह्रींश्रीं ज्वालामुखि मम शत्रूनुत्सारय २, इति ज्वालामुखीं त्रिरभिषिच्य, मूलेन स्वात्मानं पूर्ववत् त्रिराचम्य मूलं स्मरन् श्रवणादिसप्तच्छिद्राणि निरुध्य त्रिर्निमज्ज्योन्मज्जेत्। ततः 'ह्रांह्रींसः सूर्याय एष ते जलाञ्जलिः' इति सूर्याय जलाञ्जलिं दत्त्वा त्रिराचम्य स्वशिरो मूलेन सप्तधाभ्युक्ष्य दशधा मूलं सञ्जप्य, जलात्तीरमारुह्य धौते वाससी परिधाप्य मूलेन त्रिपुण्ड्रमूर्ध्वपुण्ड्रं वा तिलकं कुर्यात्। इति स्नानविधिः।

ततः प्रथमं वैदिकीं संध्यां कृत्वा तान्त्रिकीमारभेत । यथा—पूर्ववदाचम्य प्राणायामर्ष्यादिकरषडङ्गन्यासान् विधाय स्वपुरतस्तीर्थजलं धेनुमुद्रयामृतीकृत्य मूलेनाष्टधाभिमन्त्र्य तेन जलेन " अं नमः " इत्यादि " क्षं नमः " इत्यन्तं मातृकया स्वशिरः प्रोक्ष्य, मूलेन च त्रिः संप्रोक्ष्य वामहस्ते जलमादाय दक्षहस्तेनाच्छाद्य, लंवंरंयंहं इति पाञ्चभौतिकैर्मन्त्रैः सप्तधाभिमन्त्र्य, मूलेन च त्रिरभिमन्त्र्य तज्जलबिन्दुभिस्तत्त्वमुद्रया मूलेन च स्वशिरस्त्रिः प्रोक्ष्यावशिष्टजलं दक्षहस्ते निधाय, तेजोरूपं तज्जलमिडयाकृष्य स्वदेहान्तःस्थितं सकलकलुषं प्रक्षाल्य, तज्जलं कृष्णवर्णं पिङ्गलया बहिर्निर्गतं मत्वा, पुनर्वामहस्ते कृत्वा स्ववामभागे ज्वलद्वज्रशिलां ध्यात्वा " ॐश्लींपशुहुं फट् " इति पाशुपतास्त्रमन्त्रेण तस्यां शिलायामास्फालयेत्। मूलेन जलमादाय प्रवहन्नाड्या सहस्रदलपरमामृतेनैकीभूतं विभाव्य निर्गमय्य

तेन जलेन " ओंअमृतमालिन्यै स्वाहा " इति कुशैः स्वशिरस्त्रिः प्रोक्ष्य, आत्मतत्त्वं शोधयामि स्वाहा, एवं विद्यातत्त्वं०, शिवतत्त्वं०, शिव-तत्त्वं०, विद्यातत्त्वं०, आत्मतत्त्वं०, मूलं सर्वतत्त्वं शोधयामि० इति च त्रिराचम्य, एवं नवधाचम्य जलमञ्जलिनादायोत्थाय " ओंह्रांह्रीं हंसः श्रीमार्तण्डभैरवाय प्रकाशशक्तिसहिताय इदमर्घ्यं परिकल्पयामि स्वाहा " इति कुलसूर्याय त्रिरर्घ्यं दत्त्वा, ततो हृत्पद्मात् सूर्यमण्डले मूलदेवीं नीत्वा तत्र विधिवद् ध्यात्वा मानसोपचारैः संपूज्य, ओं ज्वालारूपिण्यै विद्महे जगद्भक्षिण्यै धीमहि तन्नो ज्वाले प्रचोदयात्। अनया मूलगायत्र्या चतसृसु सन्ध्यासु श्रीदेव्यै अर्घ्यत्रयं दत्त्वा गायत्रीं मूलं यथाशक्ति जप्त्वा पुनरपि प्राणायामर्ष्यादिकरषडङ्गन्यासान् विधाय गुह्येति तर्पणं जपफलं च समर्प्य हृत्कमले श्रीदेवीं समानीय तीर्थं विसृजेत्। इति सन्ध्याविधिः ॥ इत्थं सन्ध्याचतुष्टयं कृत्वा श्रीदेवीरूपः साधकः स्यात्, तस्मात् सन्ध्याचतुष्टयमवश्यं कर्तव्यम्। अथवा केवलां प्रातः सन्ध्यामेव कुर्यात् तां न संत्यजेदिति शिव-शासनम् ॥

ततस्तर्पणं विदध्यात्। तीर्थं पूर्ववदावाह्य मूलेनामृतमुद्रया चामृतीकृत्य, तत्र जले यन्त्रं ध्यात्वा तत्र देवीं हृदयात् सपरिवारामानीय षडङ्गेन सकलीकृत्य, कुण्डलिनीप्रयोगेणामृतेनाभिषिच्य विधिवत् प्रपूज्य, ऐशान्यां ४ँ श्रीमच्छ्रीगुरुरमुकानन्दनाथभैरवस्तृप्यतां इति त्रिः सन्तर्प्य, वह्नौ ४ँ परमगुरुस्तृप्यतां, नैर्ऋत्यां ४ँ परमाचार्यगुरु०, वायव्ये ४ँ परमेष्ठिगुरुः०, इति त्रिः सकृद्वा सन्तर्प्य, दिव्यौघ-सिद्धौघ-मानवौघगुरवस्तृप्यन्ताम्। ततो बिन्दौ मूलं श्रीमहादेवभैरव-सहिता सपरिवारा सवाहना सायुधा समुद्रा श्रीज्वालामुखीदेवी तृप्यताम्। ह्रीं अखण्डभूतलभूर्भुवःस्वश्चारिण्यो योगिन्यो मातर-स्तृप्यन्ताम् इति सन्तर्प्य, पुनर्बिन्दौ श्रीदेवीं सन्तर्प्य हृदि समानीय, तीर्थानि स्वस्थाने विसृज्य पुनरपि प्राणायामादि कृत्वा, मूलेन जल पूर्णं कमण्डलुं गृहीत्वा मूलं स्मरन् यागगेहं प्रविशेत्। तत्र द्वार-देवता जलादिना पूजयेत्। यथा—गं गणपतये नमः वामशाखायां, धं धर्माय नमः दक्षिणस्यां, ग्लूं वासुकये नमः ऊर्ध्वे, नरसिंहाय

नमः अधः, ओंसुमुख्यै नमः वामायां, ह्रीं सत्यै नमः दक्षिणस्यां, श्रीं उमायै नमः ऊर्ध्वे, ह्रीं देहल्यै नमः अधः, ह्रींअं अलिन्दायै नमः, ओंह्रींज्वां ज्वालिन्यै नमः, ओंह्रींद्वां द्वारश्रियै नमः इति संपूज्य, ओं वास्तुपुरुषाय नमः इति मध्ये । ततो वामाङ्गसङ्कोचेनान्तः प्रविश्य मूलेन यागभूमिं संवीक्ष्य, तत्रासनमास्तीर्यासनशोधनं कुर्यात् । यथा—अस्य श्रीआसनशोधनमन्त्रस्य मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता, आसनशोधने विनियोगः । मेरुपृष्ठऋषये नमः शिरसि, सुतलच्छन्दसे नमो मुखे, कूर्माय देवतायै नमो हृदि, आसनशोधने विनियोगाय नमः सर्वाङ्गेषु । ओंप्रीं पृथ्वि त्वया धृताः० इति भूमिं प्रार्थ्य, मण्डूकाय नमः, कालाग्निरुद्राय नमः, ह्रीं आधारशक्तिकमलासनाय नमः, ह्रीं पीठासनाय नमः, इत्यासनं संपूज्य, तदुपरि समुपविश्य, संविदं यथामन्त्रं स्वीकुर्यात् ।

संविदे ब्रह्मसंभूते ब्रह्मपुत्रि सदानघे ।
ब्राह्मणानां च तृप्त्यर्थं पवित्रा भव सर्वदा ॥

ओंब्राह्मण्यै नमः स्वाहा । ओं सिद्धिमूलकरे[1] देवि हीनबोधप्रबोधिनि । राजपुत्रिवशङ्करि[2] शत्रुपक्षनिसूदिनि ॥ ऐं क्षत्रियायै नमः स्वाहा । अज्ञानेन्धनदीप्ताग्ने ज्ञानाग्निब्रह्मरूपिणि । आनन्दस्याहुतिं प्रीतिं[3] सम्यग्ज्ञानं प्रयच्छ मे ॥ ह्रीं वैश्यायै नमः स्वाहा । नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि । त्रैलोक्यविजये मातः समाधिफलदा भव ॥ क्लीं शूद्रायै नमः स्वाहा । ओंअमृते अमृतोद्भवे अमृतवर्षिणि अमृतमाकर्षय २ सिद्धिं देहि २ श्रीज्वालामुखीपदं मे वश्यमानय २ स्वाहा, इति तदुपरि मूलं च सप्तधा सञ्जप्य योनिमुद्रयामृतीकृत्य, आगच्छागच्छ संतिष्ठ २ संनिधत्स्व २ संनिरुद्धा भव २ संनिधेहि २ सर्वोपचारसहितां पूजां गृह्ण २ स्वाहा, इति मुद्राः प्रदर्श्य, च्छोटिकाभिर्दशदिग्बन्धनं विधाय, श्रीगुरुपादुकाविद्यया स्वशिरसि श्रीगुरुपरम्परां सप्तधा त्रिधा वा सन्तर्प्य मूलेन स्वहृदि श्रीदेवीं सायुधां सवाहनां सपरिवारां सशिवां सन्तर्प्य, ऐं वदवद वाग्वादिनि मम जिह्वाग्रे स्थिरीभव सर्वसत्त्ववशङ्करि स्वाहा, इत्यनेन मुखे जुहुयात् । तत आनन्दमयो भूत्वा,

१ 'सिद्धमूल्यचये' क. पाठः । २ 'पुत्र' क. पाठः । ३ 'मत्वा' क. पाठः ।

अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः ।
ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥
पाषाण्डकारिणो भूता भूता भूम्यन्तरिक्षगाः ।
दिवि लोके स्थिता ये च ते नश्यन्तु शिवाज्ञया ॥

इति तर्जनीमध्यमाभ्यामूर्ध्वोर्ध्वं तालत्रयदानेन वामपार्ष्णिघातत्रयेण च दिव्यदृष्ट्या च त्रिविधविघ्नानुत्सार्य च्छोटिकाभिर्दशदिग्बन्धनं कृत्वा चतुर्दिक्षु वह्निप्राकारं सञ्चिन्त्य, प्राणायामं कुर्यात् । यथा—

इडया पिब षोडशभिः पवनं कुरु षष्टिचतुष्टयमन्तरगम् ।
त्यज पिङ्गलया शनकैः शनकैर्दशभिर्दशभिर्दशभिर्द्व्यधिकैः ॥

इति त्रिधा प्राणायामेन निरस्तसकलकलुषं स्वदेहं देवताराधनयोग्यं विभाव्य भूतशुद्धिं कुर्यात् । यथा—

मूलाधारात् हंस इति मन्त्रेण पृथिव्या सह कुण्डलिनीं स्वाधिष्ठाने समानीय तत्र जले पृथिवीं लीनां विभाव्य, तस्माज्जलेन सह मणिपूरे समानीय तत्र वह्नौ जलं लीनं विभाव्य, तस्माद्वह्निना सहानाहते समानीय तत्र वायौ वह्निं लीनं विभाव्य, तस्माद्वायुना सह विशुद्धौ समानीय तत्राकाशे वायुं लीनं विभाव्य, तस्मादाकाशेन सहाज्ञाचक्रे समानीय तत्रस्थमनस्याकाशं लीनं सञ्चिन्त्य, मनो नादे लीनं सञ्चिन्त्य, ध्वनौ ध्वनिं लीनं सञ्चिन्त्य, सहस्रदलकमलकर्णिकास्थचन्द्रमण्डलमध्यगततेजोमयबिन्दुरूपपरमशिवे तां समर्प्य तत्र केवलशरीरे

वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम् ।
ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ॥
सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् ।
तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥
उपपातकरोमाणं रक्तश्मश्रुविलोचनम् ।
खड्गचर्मधरं क्रुद्धं पापं कुक्षौ विचिन्तयेत् ॥

इति पापपुरुषं ध्यात्वा, प्राणायामविधिना यमिति वायुबीजं धूम्रवर्णं षोडशवारं जपंस्तं पापपुरुषं संशोष्य, ततो रमिति वह्निबीजं रक्तवर्णं चतुष्षष्टिवारं जपंस्तमेव संदह्य, वमित्यमृतबीजं सहस्रारे विचिन्त्य

द्वात्रिंशद्वारं जपंस्तदुद्भवामृतधारया निष्पापं शरीरमुत्पाद्य, ललाटस्थ-लमिति पृथ्वीबीजेन पीतवर्णेन सुदृढीकृत्य, ह्रीमिति मूलस्थबीजेन सैश्वर्यं सोऽहमिति मन्त्रेण कुण्डलिनीममृतलोलीभूतां पञ्चभूतानि जीवात्मानं च ब्रह्मपथे स्वस्वस्थाने संयोजयेत्। इति भूतशुद्धिः॥

ततो देवीरूपमात्मानं विचिन्त्य हृदि हस्तं निधाय प्राणप्रतिष्ठां कुर्यात्। यथा—ॐआंह्रींक्रों यंरंलंवं-शंषंसंहं-ळंक्षं हंसः सोऽहं मम प्राणाः इह प्राणाः, १८ँ मम जीव इह स्थितः, १८ँ मम सर्वेन्द्रियाणि इह स्थितानि, १८ँ मम वाङ्मनस्त्वक्चक्षुःश्रोत्रघ्राणप्राणा इहैवागत्य सुखं चिरं तिष्ठन्तु स्वाहा। इति प्राणप्रतिष्ठां विधाय, स्वमूल-ऋष्यादिस्मरणं कुर्यात्। यथा—

ॐ अस्य श्रीज्वालामुखीमन्त्रराजस्य श्रीवैश्वानर ऋषिः, अनुष्टुप् छन्दः, श्रीमदद्वैतरूपिणी ज्वालामुखी देवता, ह्रीं बीजं, श्रीं शक्तिः, हूं कीलकं मम धर्मार्थकाममोक्षार्थे जपे विनियोगः, इति कृताञ्जलिर्वदेत्। वैश्वानरऋषये नमः शिरसि, अनुष्टुपछन्दसे नमो मुखे, ज्वालामुखीदेवतायै नमो हृदि, ह्रीं बीजाय नमो गुह्ये, श्रीं शक्त्यै नमः पादयोः, हूं कीलकाय नमो नाभौ, जपे विनियोगाय नमः सर्वाङ्गेषु। ॐह्रांश्रां अङ्गुष्ठाभ्यां नमः, ह्रींश्रीं तर्जनी०, ह्रूंश्रूं मध्यमा०, ह्रैंश्रैं अनामिका०, ह्रौंश्रौं कनिष्ठि०, ह्रःश्रः करतल०। एवं हृदयादिन्यासः॥ ॐह्रींश्रीं नमः शिरसि, ज्वालामुखि हृदि, मम सर्वशत्रून् नाभौ, भक्षय २ लिङ्गे, हूं गुह्ये, फट् स्वाहा नमः सर्वाङ्गेषु। इति मन्त्रन्यासः॥

अथ समन्त्रमातृकान्यासः। ॐअंकंखंगंघंङंॐ नमः शिरसि, एवं आं चं ५ ह्रीं ललाटे इं टं ५ श्रीं नेत्रयोः, ईं तं ५ ज्वां मुखे, उं पं ५ लां कण्ठे, ऊं यं मु स्कन्धयोः, ऋं रं खि पाण्योः, ॠं लं मम स्तनयोः, ऌं वं सर्व हृदि, ॡं शं शत्रून् कुक्षौ, एं षं भक्षय पार्श्वयोः, ऐं सं भक्षय नाभौ. ॐ हं हूं लिङ्गे, औं ळं फट् गुह्ये, अं अः क्षं स्वाहा नमः पादयोः। इति समन्त्रमातृकान्यासः॥

अथान्तर्मातृकान्यासः। तत्र स्वरैः पूरकः, कादिमान्तैः कुम्भकः, यादिभी रेचकः। ॐअस्य श्रीअन्तर्मातृकान्यासस्य, ब्रह्मा ऋषिः, गायत्री छन्दः, श्रीअन्तर्मातृकासरस्वती देवता, हलो बीजानि, स्वराः शक्तयः, अव्यक्तं कीलकं न्यासे विनियोगः इति कृताञ्जलिः स्मृत्वा

न्यसेत् । ब्रह्मऋषये शि०, गायत्रीछन्दसे मुखे, अन्तर्मातृकासरस्वतीदेवतायै हृदि, हलूभ्यो बीजेभ्यो गुह्ये, स्वरेभ्यः शक्तिभ्यः पादयोः, अव्यक्तकीलकाय नाभौ, न्यासे विनियोगाय नमः सर्वाङ्गेषु, इति ऋष्यादिन्यासः ॥ ऊँऐंह्रींश्रींअंकं ५ आं अङ्गुष्ठाभ्यां नमः । एवं ४ इं चं ५ ईं तर्जं०, ४ उं टं ५ ऊं मध्यमा०, ४ एं तं ५ ऐं अनामिका०, ४ ओंपं ५ औं कनिष्ठिका०, ४ अं यं १० अः करतलपृष्ठाभ्यां० । एवं हृदादिन्यासः ॥ ततो ध्यानम्—

शुद्धस्फटिकसङ्काशां शुद्धक्षौमविराजिताम् ।
मुक्तारत्नस्फुरद्भूषां जपमालां कमण्डलुम् ॥
पुस्तकं वरदानं च बिभ्रतीं परमेश्वरीम् ।
एवं ध्यात्वा हृदम्भोजे मातृकां विन्यसेत् सुधीः ॥

इति ध्यात्वा न्यासं कुर्यात् । अं १६ कण्ठे, कं १२ अनाहते, डं १० नाभौ, बं ६ स्वाधिष्ठाने, वं ४ मूलाधारे, ळंक्षं भ्रूमध्ये, इत्यन्तर्मातृका । ततो बहिर्मातृकान्यासं यथोक्तं कुर्यात् ।

ततस्तत्त्वन्यासः । मूलं आत्मतत्त्वाय स्वाहा पादादिनाभ्यन्तम् । मू० विद्यातत्त्वा० नाभ्यादिभ्रूमध्यपर्यन्तम् । मू० शिवतत्त्वा० आज्ञादिशिरोऽन्तम् । मू० सर्वतत्त्वेभ्यः स्वाहा सर्वाङ्गेषु । इति तत्त्वन्यासः ॥ अथ मूलमन्त्रन्यासः । ओं नमो मस्तके ह्रीं ललाटे, श्रीं भ्रूमध्ये,

---

अस्य मन्त्रस्योत्कीलनादिर्यथा—श्रीं मूलं ह्रीं उत्कीलनाय नमः । हूं मूलं फट् सञ्जीवनाय नमः । ओं ज्वालामुखि मम सर्वशत्रून् भक्षय २ हूं फट् स्वाहा ओं ह्रींश्रींतौटिल्याय नमः । येन मन्त्रेण श्रीदेवी त्वरिता संप्रजायते । वरं प्रदातुं देवेशि तौटिल्यं परिकीर्तितम् ॥ विना तौटिल्यमन्त्रेण सर्वं निष्फलतां व्रजेत् ॥ ओं ह्रींश्रीं ज्वालामुखि भैरवशापं मोचय २ हूं स्वाहा शापहार्यै नमः । ओं ह्रींश्रींक्लीं कुरुकुल्लायै नमः । स्नाने जपे तथा होमे या मनः संप्रसादयेत् । कुरुकुल्लेति विख्याता साधकानां वरानने ॥ कुरुकुल्लां परित्यज्य यो मन्त्रं सञ्जपेत्प्रिये । सर्वं जपादिकं व्यर्थं साधकस्य भवेद् ध्रुवम् ॥ अथास्त्रम् । ओं स्त्रींज्वालादिव्यास्त्राय ह्रीं महास्त्राय श्रीं सर्वास्त्राय हूं फडस्त्राय अस्त्रविद्यायै नमः, इति त्रिः पठेत् ॥

ज्वां नासिकायां, लां नेत्रयोः, मुं मुखे, खिं कण्ठे, मं स्कन्धयोः, मं स्तनयोः, सं वक्षसि, वँ कुक्षौ, शं पार्श्वयोः, त्रून् नाभौ, भं लिङ्गे, त्तं पृष्ठे, यं कट्यां, भं गुदे, त्तं मेढ्रे, यं ऊर्वोः, हूं जानुनोः, फट् जङ्घयोः, स्वां गुल्फयोः, हां पादयोः, मूलं सर्वाङ्गेषु । इति मूलमन्त्रन्यासः ॥

अथ दैवतन्यासः । ओंह्रीं मायादेव्यै वारुणीवात्यालीसहितायै नमो मस्तके । ह्रीं मोहिन्यै श्रीवाराहीकुलसुन्दरीसहितायै नमो मुखे। ह्रीं बालादेव्यै श्रीकूवरीकौलिनीसहितायै नमो हृदि । श्रीं भगरूपिणीदेव्यै श्रीकुण्ठीकुत्सितासहितायै नमः कुक्षौ । ह्रीं भगावासादेव्यै श्रीकुटिलाकुहूसहितायै नमो नाभौ । ह्रीं भेरुण्डादेव्यै श्रीकुन्तीकुम्भेश्वरीसहितायै नमो गुल्फे । ह्रीं मृडानीदेव्यै श्रीकुन्ताकूवरीसहितायै नमो गुल्फयोः । श्रींह्रीं वैन्दवेश्वरीदेव्यै श्रीकारुणीकृतिसहितायै नमः पादयोः । इति दैवतन्यासः ॥

पूर्ववदृष्यादिन्यासं ? पीठन्यासं कुर्यात् । यथा—मण्डूकाय नमो मूलाधारे, कालाग्निरुद्राय नमः स्वाधिष्ठाने । आधारशक्त्यै नमो मणिपूरके । प्रकृत्यै नमो हृदये । कमठाय० शेषाय० सुधार्णवासनाय० पृथिव्यै० इक्षुसमुद्राय० मदिरासमुद्राय० घृतसमुद्राय० दुग्धसमुद्राय० दक्षांसे, धर्माय० वामांसे, ज्ञानाय० वामोरौ, वैराग्याय० दक्षोरौ, ऐश्वर्याय० मुखे, अधर्माय० वामपार्श्वे, अज्ञानाय० नाभौ, अवैराग्याय० दक्षपार्श्वे, अनैश्वर्याय० हृदि । पुनर्हृदि—मायायै० विद्यायै० अनन्ताय० धर्माय० आनन्दकन्दाय० संविन्नालाय० प्रकृतिमयपत्रेभ्यो० विकृतिमयकेसरेभ्यो० पञ्चाशद्वर्णबीजाढ्यसर्वतत्त्वरूपायै कर्णिकायै० अं अर्कमण्डलाय० सों सोममण्डलाय० रं वह्निमण्डलाय० आं आत्मने० अं अन्तरात्मने० पं परमात्मने० ह्रीं ज्ञानात्मने० ह्रीं पीठासनाय० ह्रीं षट्चक्रासनाय० ओंह्रूं सहस्रदलकमलकर्णिकायै० ह्रीं शवासनाय० ह्रीं वेदासनाय० ह्रीं शवासनाय० ह्रीं वेदासनाय० ह्रींह्रींह्रूं फट् स्वाहा रुद्राब्जपीठाय नमः इति पीठन्यासं कृत्वा, तत्रैव स्वाभेदेन श्रीज्वालामुखीदेवीं ध्यायेत् । यथा—

ज्वालापर्वतसंस्थितां त्रिनयनां पीठत्रयाधिष्ठितां
ज्वालाडम्बरभूषितां सुवदनां नित्यामदृश्यां जनैः ।

षट्चक्राम्बुजमध्यगां वरशराम्भोजाभयान् बिभ्रतीं
चिद्रूपां सकलार्थदीपनकरीं ज्वालामुखीं नौम्यहम् ॥

इति हृत्कमले श्रीदेवीं ध्यात्वा, स्वैक्येन विभाव्य मूलविद्यया स्वशिरसि पुष्पाञ्जलिं दत्त्वा, पुनर्हृदयकमले यथोक्तरूपां देवीं साङ्गां सावरणां सशिवां ध्यात्वा, वक्ष्यमाणप्रकारेण पीठपूजापूर्वकं मानसैरुपचारैः संपूज्य नैवेद्यं दत्त्वा भोजनावसरेऽन्तर्वैश्वदेवं कुर्यात्। तत्र मूलाधारे आत्मान्तरात्मपरमात्मज्ञानात्मेत्यात्मचतुष्टयं सचतुरश्रं कुण्डलिन्यग्निसमुज्ज्वलं कुण्डं ध्यात्वा, तत्र श्रीपरदेवतां ध्यात्वा तन्मुखे मूलान्ते "अहन्तां जुहोमि स्वाहा" इत्थमहन्तासत्यपैशुन्यकामक्रोधलोभमोहमदमात्सर्याणि सुषुम्नाम्बुकूलक्रमनःस्रुवेण प्रत्येकं हुत्वा, धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा। सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् स्वाहा॥ प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचम्। धर्माधर्मकलास्नेहपूर्णां वह्नौ जुहोम्यहम् स्वाहा॥ इति हुत्वा, अथवा—

अन्तर्निरन्तरनिरिन्धनमेधमाने
मायान्धकारपरिपन्थिनि संविदग्नौ।
कस्मांश्चिदद्भुतविकासिमरीचिभूमौ
विश्वं जुहोमि वसुधादिशिवावसानम्, स्वाहा॥

इति हुत्वा, पुनर्हृदयकमले श्रीदेवीं ध्यात्वा, उत्तरापोशानादिसर्वोपचारैराराध्य, मूलं यथाशक्ति जपित्वा, प्राणायामादिना जपं समर्प्य श्रीगुरुं प्रणम्य स्वदेहं गन्धादिना संभूष्य मनसा यथाशक्ति जपहोमादिकं च कृत्वा, स्वशरीरं कामकलारूपं ध्यायन् स्वदेहं पूजायोग्यं कृत्वा सामान्यार्घ्यं कुर्यात्। तत्र स्वदक्षे त्रिकोणवृत्तबिम्बं चक्रं विधाय, तत्र "आधारशक्तये नमः" इति संपूज्य तदुपरि त्रिपादिकां संस्थाप्य "रं वह्निमण्डलाय दशकलात्मने नमः" इति संपूज्य, तत्र अस्त्राय फडिति क्षालितपात्रं शङ्खादिकं वा संस्थाप्य, ("अं सूर्यमण्डलाय द्वादशकलात्मने नमः" इति संपूज्य शुद्धजलेन तत्पात्रमापूर्य "सौं सोममण्डलाय षोडशकलात्मने नमः" इति संपूज्य,) तत्र "गङ्गे च यमुने चैव" इत्यादिना तीर्थान्यावाह्य गन्धाक्षतपुष्पाणि निःक्षिपेत्। एवं सूर्यसोमकलाः संपूज्य धेनुमुद्रां प्रदर्शयेदिति सामान्यार्घ्यविधिः॥

ततः स्ववामे षट्कोणान्तर्गतत्रिकोणद्वयबिन्दुं बाह्यवृत्तबिम्बं मण्डलं विरचय्य, तत्र "मण्डूकाय नमः" इत्यादिपीठपूजाक्रमेण पीठपूजामारभेत् । ततो नमः इत्याधारं प्रक्षाल्य मण्डलोपरि संस्थाप्य "रं वह्निमण्डलाय दशकलात्मने नमः" इति संपूज्य, फडिति कलशं प्रक्षाल्य कारणेन प्रपूर्य रक्तवस्त्रमाल्यादिना संभूष्य श्रीदेवीबुद्ध्या संस्थाप्य "अं अर्कमण्डलाय द्वादशकलात्मने नमः" इति कलशं संपूज्य, "सौं चन्द्रमण्डलाय षोडशकलात्मने नमः" इति द्रव्यं संपूज्य, फडिति संरक्ष्य हूमित्यवगुण्ठ्य मूलेन संवीक्ष्य मूलेन गन्धमाघ्राय, कुम्भे पुष्पं दत्त्वा शापमोचनं कुर्यात् । यथा—

ओं एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् ।
कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥ १ ॥
ओं सूर्यमण्डलसंभूते वरुणालयसंभवे ।
अमाबीजमये देवि शुक्रशापाद् विमुच्यताम् ॥ २ ॥
ओं वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि ।
तेन सत्येन देवेशि ब्रह्महत्या व्यपोहतु ॥ ३ ॥

इति त्रिः, ततो वां वीं वूं वैं वौं वः ब्रह्मशापमोचितायै सुरादेव्यै नमः इति त्रिः, ह्रीं श्रीं क्रां क्रीं क्रूं क्रैं क्रौं क्रः कृष्णशापं मोचय २ अमृतं स्रावय स्रावय स्वाहा इत्यपि त्रिः पठित्वा । ओंह्रीं नमस्तेजोराशेऽशेषसत्त्वाह्लादिनि मयूरमुखि अमोघसिद्धिदायिनि महोत्साहनिमित्ते कपालिनि वर्ध २ रक्ष २ समयं मे प्रयच्छ २ रुद्ररौद्रसुरासवे शुक्रशापनिकृन्तनि ब्रह्महत्याहरे ह्रीं हूं लां लूं फट् फट् स्वाहा, इति शुक्रशापहरीविद्यां दशधा जपेत् । ओं हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतम् ॥ इत्यपि त्रिः पठेत् । ततः आनन्दभैरवं सुरादेवीं च ध्यायेत् । यथा—

सूर्यकोटिप्रतीकाशं चन्द्रकोटिसुशीतलम् ।
अष्टादशभुजं देवं पञ्चवक्त्रं त्रिलोचनम् ॥ १ ॥
अमृतार्णवमध्यस्थं ब्रह्मपद्मोपरि स्थितम् ।
वृषारूढं नीलकण्ठं सर्वाभरणभूषितम् ॥ २ ॥

कपालखट्वाङ्गधरं घण्टाडमरुवादिनम् ।
पाशाङ्कुशधरं देवं गदामुसलधारिणम् ॥ ३ ॥
खड्गखेटकपट्टीश-मुद्गरशूलकुन्तिनम् ।
विचित्रखेटकं मुण्डवरदाभयपाणिकम् ॥ ४ ॥
लोहितं देवदेवेशं भावयेत् साधकोत्तमः ।
दत्त्वा पुष्पाञ्जलिं कुम्भे जपेदानन्दभैरवम् ॥ ५ ॥

इत्यानन्दभैरवं ध्यात्वा सुरादेवीं ध्यायेत् । यथा—

समुद्रे मथ्यमाने तु क्षीराब्धौ सागरोत्तमे ।
तत्रोत्पन्ना सुरादेवी कुमारीरूपधारिणी ॥ ६ ॥
भावयेच्च सुरादेवीं चन्द्रकोट्ययुतप्रभाम् ।
हिमकुन्देन्दुधवला पञ्चवक्त्रां त्रिलोचनाम् ॥ ७ ॥
अष्टादशभुजैर्युक्तां सर्वानन्दकरोद्यताम् ।
प्रहसन्तीं विशालाक्षीं देवदेवस्य संमुखीम् ॥ ८ ॥

इति सुरादेवीं ध्यात्वा "हसक्षमलवयऊं आनन्दभैरवाय वौषट्, सहक्षमलवरयऊं सुरादेव्यै वौषट्" इति देवदेव्यौ त्रिः संपूज्य, दशधा मूलं संजप्य, दक्षिणावर्तेन त्रिपङ्क्त्या अं १६ कं १६ थं १६ इत्यकथादिशक्तिचक्रं विलिख्य, तन्मध्ये हंक्षं च संलिख्य, एतत्समावेशाद् द्रव्यमध्येऽमृतं विचिन्त्य, धेनुमुद्रयामृतीकृत्य वमिति सुधाबीजं मूलमप्यष्टधा घटं धृत्वा पठित्वा, आत्मश्रीचक्रयोर्मध्ये त्रिकोणषट्कोणवृत्तचतुरस्रं विलिख्य, चतुरस्रे—४ पूर्णगिरिपीठाय नमः, ४ उड्डीयाणपीठाय नमः, ४ कामरूपपीठाय नमः, ४ जालन्धरपीठाय नमः, इति संपूज्य, षडङ्गेन षट्कोणं प्रपूज्य, त्रिकोणस्याग्रे ऊँ नमः, दक्षे ह्रीं नमः, वामे श्रीं नमः, इति त्रिकोणं संपूज्य, मध्ये ऊँह्रीं आधारशक्तये नमः इति संपूज्य, त्रिकोणगर्भे षट्कोणभूषितां यन्त्रिकां संस्थाप्य सामान्यार्घ्यजलेनाभ्युदय पूजयेत् । यथा—यं धूम्रार्चिषे नमः, रं ऊष्मायै० , लं ज्वलिन्यै०, वं ज्वालिन्यै०, शं विस्फुलिङ्गिन्यै०, षं सुश्रियै०, सं सुरूपायै०, हं कपिलायै०, ळं हव्यवाहायै०, क्षं

कव्यवाहायै नमः, इति संपूज्य, मध्ये "रं वह्निमण्डलाय दशकलात्मने नमः" इति प्रपूज्य, षट्कोणे षडङ्गं च संपूज्य, मध्ये मूलेन देवीं संपूज्य, हूंहूं ब्रह्माण्डचषकाय फट् स्वाहा, इति नारिकेलपात्रं प्रक्षाल्य, यन्त्रिकोपरि संस्थाप्य, तत्र—कंभं तपिन्यै नमः, खंबं तापिन्यै०, गंफं धूम्रायै०, घंपं मरीच्यै०, ङंनं ज्वालिन्यै०, चंधं रुच्यै०, छंदं सुषुम्नायै०, जंथं भोगदायै०, झंतं विश्वायै०, ञंणं बोधिन्यै०, टंढं क्षमायै०, ठंडं धारिण्यै नमः, अं अर्कमण्डलाय द्वादशकलात्मने नमः इति संपूज्य, त्रिकोणं षट्कोणं सचतुरस्रं पात्रे विलिख्य बीजत्रयेण त्रिकोणं संपूज्य, षडङ्गेन षट्कोणं संपूज्य, ततो विलोममातृकां पठन्नमृतेन त्रिकोणं प्रपूर्य जलेन च भागमेकं संपूर्य तत्र सुगन्धादि निक्षिप्य, अं अमृतायै नमः, आं मानदायै, इं पूषायै, ईं तुष्ट्यै, उं पुष्ट्यै, ऊं रत्यै, ऋं धृत्यै, ॠं शशिन्यै, लृं चन्द्रिकायै, ॡं कान्त्यै, एं ज्योत्स्नायै, ऐं श्रियै, ओं प्रीत्यै, औं अङ्गदायै, अं पूर्णायै, अः पूर्णामृतायै, सौं षोडशकलात्मने सोममण्डलाय नमः इति संपूज्य, पूर्ववद् द्रव्ये यन्त्रं विलिख्य, बीजत्रयेण त्रिकोणं संपूज्य, षडङ्गेन षट्कोणं प्रपूज्य, गङ्गेत्यादिना तीर्थमावाह्य आनन्दभैरवभैरव्यौ स्वस्वमन्त्रेण संपूज्य, पूर्वे ग्लूं गगनरत्नेभ्यो नमः। दक्षे स्लूं स्वर्गरत्नेभ्यो नमः। उत्तरे म्लूं मर्त्यरत्नेभ्यो नमः। पश्चिमे प्लूं पातालरत्नेभ्यो नमः। मध्ये न्लूं नागरत्नेभ्यो नमः। इति संपूज्य, मांसादिकं संशोधयेत्। यथा—तत्र स्वाग्रे चतुरश्रं विधाय तत्र मांसादिपात्रं संस्थाप्य, यमिति संशोष्य, रमिति सन्दह्य, वामित्यमृतेनाप्लाव्य, धेनुमुद्रयामृतीकृत्य, मूलं तदुपरि दशधा प्रजप्य, क्रमेण शोधयेत्। यथा—ओं प्र तद्विष्णुः स्तवते वीर्येण मृगो न भीमः कुचरो गिरिष्ठाः। यस्योरुषु त्रिषु विक्रमणेष्वधिक्षियन्ति भुवनानि विश्वा ॥ इति द्वितीयशोधनम्। ओं त्र्यम्बकं यजामहे सुगन्धिं पुष्टिवर्धनम्। उर्वारुकमिव बन्धनान्मृत्योर्मुक्षीय मामृतात् ॥ इति मीनशोधनम्। "ओं तद्विष्णोः परमं पदं" इत्यादिना मुद्राशोधनम्। ओं विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु। आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते ॥ गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति। गर्भं ते ह्यश्विनौ देवावाधत्तां पुष्करस्रजा ॥

इति पञ्चमं शोधयेत् । ततः पात्रोपरि ह्रूमित्यवगुण्ठ्य वमित्यमृतीकृत्य तालत्रयेण दिशः संबद्ध्य, तदुपरि मूलं सप्तधा प्रजप्य योनिमुद्रां प्रदर्शयेत् । ततः श्रीपात्रोपरि कुण्डलिन्याः प्रयोगेण राजदन्तवर्त्मना निःसृताममृतधारां योनिमुद्रोल्लासितेन करेणानीय, मूलं ॐ ब्रह्माण्डखण्डसंभूतमशेषरससंभृतम् । आपूरितं महापात्रं[1] पीयूषरसमावह ॥ ऐं अमृते अमृतोद्भवे अमृतेश्वरि अमृतवर्षिणि अमृतं स्रावय २ ह्रसौः स्वाहा इत्यभिमन्त्र्य, सौः तद्रूपेणैकरस्यं च दत्त्वार्घ्यं तत्स्वरूपिणि । भूत्वा परामृताकारं मयि चित्स्फुरणं कुरु ॥ इत्यभिमन्त्र्य, ह्स्सौं नमः इति संपूज्य, शङ्खमुद्रां प्रदर्श्य षडङ्गेन सकलीकृत्य मत्स्यमुद्रया पात्रमाच्छाद्य मूलं दशधा संजप्य पात्रं देवीरूपं भावयेदिति श्रीपात्रस्थापनविधिः ॥

ततो देव्या आज्ञामादाय घटसमीपे गुरुपात्रं ततः शक्तिपात्र-भोगपात्र-स्वपात्र-योगिनीपात्र-वीरपात्र-बलिपात्र-पाद्यपात्रार्घ्यपात्राचमनीयपात्र-मधुपर्कपात्रमित्येतानि पात्राणि संस्थाप्य, ततश्चर्वणयुतकारणेन तत्त्वमुद्रया श्रीपात्रामृतबिन्दून् समुद्धृत्य, ह्सरक्लमलवयऊं सुरादेव्यै वौषट् आनन्देश्वरभैरवं तर्पयामि नमः सुरादेवीं तर्पयामि नमः इति त्रिः सन्तर्प्य, ततो गुरुपात्रामृतेन श्रीपादुकामुच्चार्य श्रीमच्छ्री-अमुकानन्दनाथ-श्रीपादुकां पू० इति त्रिः सन्तर्प्य, एवं परमगुरुं परमाचार्यगुरुं परमेष्ठिगुरुं च श्रीगुरुपात्रामृतेन सन्तर्प्य, ततः श्रीपात्रामृतेन मूलं श्रीमच्छ्रीमहादेवभैरवसहितां सवाहनां समुद्रां सपरिकरां सायुधां श्रीज्वालामुखीं तर्पयामि नमः इति स्वहृदि सन्तर्प्य, प्रोक्षणीपात्रं संस्थाप्य श्रीपात्रामृतबिन्दुना संस्कृत्य मूलेन स्वात्मानं संप्रोक्षयेत् । अनेनैव जलेन यागभूमिवस्तूनि च प्रोक्षयेत् । इति कलशस्थापनविधिः ॥

ततः पूर्ववत् पीठन्यासक्रमेण श्रीचक्रपीठोपरि पीठपूजां विधाय कुसुमाञ्जलिं गृहीत्वा, श्रीदेवीं ध्यात्वा यमिति वायुबीजेन स्वहृदयाद्वामनासापुटेन श्रीदेवीं तेजोमयीं कुसुमाञ्जलौ समानीय, तत्र विधिवद् ध्यात्वा, ॐ देवेशि भक्तिसुलभे परिवारसमन्विते । यावत् त्वां पूजयिष्यामि तावद् देवि इहावह ॥ इति पठित्वा कुसुमाञ्जलिं श्रीचक्रोपरि निःक्षिपेत् । ततो मूलं श्रीमहादेवसहिते ज्वालामुखि इहागच्छ २ इह संतिष्ठ २ इह संनिधत्स्व २ इह संनिरुद्धा भव २

---

१ 'तं मया पात्रं' ख. पाठः ।

मम सर्वोपचारसहितां पूजां गृह्ण २ स्वाहा, इत्यावाहनादिमुद्राः प्रदर्श्य श्रीचक्रपीठोपरि लेलिहानमुद्रां प्रदर्श्य, प्राणप्रतिष्ठां कुर्यात्। ऊँ आंह्रींक्रों हंसः सोहं श्रीज्वालामुख्याः प्राणा इह प्राणाः १३ जीव इह स्थितः १३ सर्वेन्द्रियाणि इह स्थितानि १३ वाङ्मनश्चक्षुःश्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा, इति प्राणप्रतिष्ठां विधाय, दशदिग्बन्धनं च विधाय, हुमित्यवगुण्ठ्य, अमृतमुद्रयामृतीकृत्य, षडङ्गेन सकलीकृत्य, परमीकृत्य धेनुयोनिमुद्रे प्रदर्श्य, श्रीपात्रामृतेन मूलं श्रीमहादेवभैरवसहितां श्रीज्वालामुखीं तर्पयामि नमः इति त्रिः सन्तर्प्य, मू० श्रीमहादेवभैरवसहितायै श्रीज्वालामुखीभगवत्यै एतत्पादयोः पाद्यं नमः। एवं मू० अर्घ्यं स्वाहा। मू० एतदाचमनीयं स्वधा। एतन्मधुपर्कं सुधा। मू० पुनराचमनीयं सुधा। मू० एतत्स्नानीयं नमः। इति गङ्गादिजलेन सर्वाङ्गं संस्नाप्य, शुद्धदुगूलेनाङ्गं प्रोञ्छ्य, विचित्रपट्टवस्त्रकुङ्कुमकस्तूरीचन्दनसिन्दूरमुकुटकुण्डलहारादिनानालङ्कारान् दत्त्वा, पुनराचमनीयं दद्यात्। ततो मध्यमानामाङ्गुष्ठैः, मूलं एष गन्धो नमः इति तिलकं ललाटे कुर्यात्। अङ्गुष्ठतर्जनीभ्यां मूलं श्रीमहादेवभैरवसहितायै श्रीज्वालामुख्यै अक्षतपुष्पाणि वौषट् इति पुष्पैः संपूज्य, धूपपात्रं फडिति संपूज्य पुरतः स्थापयित्वा वामतर्जन्या स्पृशन् श्रीपात्रामृतेन धूपं निवेदयामीति निवेद्य, "ऊँजगद्ध्वनि-मन्त्रमातः स्वाहा" इति घण्टां संपूज्य वामेन पाणिना तां वादयन् मध्यमानामाङ्गुष्ठैः पात्रं धृत्वा, मूलं ऊँज्वालारूपिण्यै विद्महे जगद्भक्षिण्यै धीमहि तन्नो ज्वालामुखी प्रचोदयात्। मू० "वनस्पतिरसोत्पन्नो गन्धाढ्यो गन्ध उत्तमः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥" इति त्रिधोत्तोल्प देवीं धूपयेत्। ततो दीपं संमुखे संस्थाप्य पूर्ववत् प्रोक्षणपूजने कृत्वा वाममध्यमया दीपपात्रं संस्पृशन् दीपं निवेदयामीति निवेद्य, पूर्ववद् घण्टां वादयन् मध्यमानामध्ये दीपपात्रमङ्गुष्ठेन धृत्वा दर्शयन् गायत्रीं च पठन् "ऊँसुप्रकाशो महादीपः सर्वतस्तमनाशकः। प्रसीद मम देवेशि दीपोऽयं प्रतिगृह्यताम्॥" इति दीपयेत्। ततः स्वर्णादिपात्रे कुङ्कुमेन वसुपत्रं चन्द्ररूपं चरुं कृत्वा मध्ये दीपमेकमष्टपत्रेषु दीपाष्टकं संस्थाप्य, श्रीं सौः ग्लूं स्लूं म्लूं प्लूं न्लूं सौः श्रीं श्रीरत्नेश्वर्यै नमः इत्यभ्यर्च्य,

---

१ "गजध्वनि" पाठोऽपि दृश्यते।

मूलेन चाभ्यर्च्य स्थालकमामस्तकमुद्धृत्य नववारं मूलं "समस्तचक्रचक्रेशीयुते देवि नवात्मिके । आरात्रिकमिदं देवि गृहाण मम सिद्धये ॥" इति चक्रमुद्रया नीराजयेदिति नीराजनविधिः ॥

ततो नानानैवेद्यं स्वर्णपात्रे निःक्षिप्य ह्रूमित्यवगुण्ठ्य वमित्यमृतीकृत्य, मूलं सप्तधा सञ्जप्य वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृशन् मूलान्ते "हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम् । पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि" नैवेद्यं निवेदयामीति दक्षानामाङ्गुष्ठाभ्यां निवेदयेत् । ततो मूलं अमृतोपस्तरणमसि स्वाहा इत्यपोशानं दत्त्वा, पञ्च प्राणादिमुद्राः प्रदर्श्य सुतृप्तां देवीं भावयित्वा, पुनराचमनीयं दत्त्वा मूलान्ते कर्पूरादियुक्तं ताम्बूलं निवेदयामीति ताम्बूलं दद्यात् । ॐऐं नमः उच्छिष्टचाण्डालि मातङ्गिनि सर्ववशङ्करि स्वाहा श्रीशेषिकापादुकां पू० इदमुच्छिष्टभोजनं कल्पयित्वा देवी-ईशाने त्रिकोणे क्षिपेत् । ततः सर्वेषामर्घ्यपात्रजलेनोत्सर्गः कार्यः । ततस्तत्त्वमुद्रया श्रीपात्रामृतेन देवीं त्रिः सन्तर्प्य, हृदि क्षोभिणीं, मुखे द्राविणीं, भ्रूमध्ये आकर्षिणीं, ललाटे वशिनीं, ब्रह्मरन्ध्रे आह्लादिनीं, इति पञ्चमुद्रामयीं योनिमुद्रां प्रदर्श्य, कृताञ्जलिः श्रीज्वालामुखि ते आवरणं पूजयामि, इत्याज्ञां गृहीत्वा आवरणपूजामारभेत । यथा—

तत्रादौ पूर्वत आरभ्य दक्षावर्तेन, ॐह्रींगांगींगूं गणेशश्रीपा० पूर्वे, ॐह्रीं धं धर्मराजश्रीपा० दक्षे, ॐह्रीं वं वासुकिश्रीपा० पश्चिमे, ॐह्रीं नं नरसिंहश्रीपा० उत्तरे, इति गन्धाक्षतपुष्पैः संपूज्य भूपुरे प्रथमावरणम् । तत्रैव गुरुपूजनम् ॥

ततः षोडशपत्रेषु षोडशज्वाला वामावर्तक्रमेण पूजयेत । यथा—ॐश्रीं वारुणीश्रीपा० । ॐह्रीं वात्यालीश्रीपा० । ॐह्रीं वाराहीश्रीपा० । ॐह्रीं कुलसुन्दरीश्रीपा० । ॐऐंक्लीं कूवरीश्रीपा० । ॐसौः क्लीं कुलिकाश्रीपा० । ॐक्रीं कुण्ठीश्रीपा० । ॐक्रीं कुत्सिताश्रीपा० । ॐक्रींह्रूं कुटिलाश्रीपा० । ॐह्रींक्रीं कुहूश्रीपा० । ॐक्रीं कुन्तीश्रीपा० । ॐऐंक्लीं कुम्भेश्वरीश्रीपा० । ॐक्रीं कुन्ताश्रीपा० । ॐक्रीं कूचरीश्रीपा० । ॐक्रीं कारुणीश्रीपा० । ॐह्रींश्रींऐंक्लींसौः कृतिश्रीपा० । इति गन्धपुष्पाक्षतैः संपूज्य षोडशदले द्वितीयावरणम् ॥

ततोऽष्टदलेषु अष्टौ कन्या वामावर्तेन पूजयेत् । यथा—ह्रीं माया-

श्रीपा० । ह्रीं मोहिनीश्रीपा० । ऐंक्लींसौः बालाश्रीपा० । ऊँह्रींभैं भगरूपिणीश्रीपा० । ऊँह्रींभैं भगावासाश्रीपा० । ऊँह्रींभैं भीरुण्डाश्रीपा० । ऊँऐंसौः मृडानीश्रीपा० । ऊँह्रींश्रींऐंसौःक्लींब्लूं बैन्दवेश्वरीश्रीपा० । इति गन्धाक्षतपुष्पैः संपूज्य तृतीयावरणम् ॥

ततोऽन्तर्दशपत्रेषु दशज्वालाः पूजयेत् । यथा—ऊँह्रींब्रां ब्राह्मीश्रीपा० । २ शां शाम्भवीश्रीपा० । २ दुं दुर्गाश्रीपा० । २ वां वाराहीश्री० । २ कुं कुलकामिनीश्रीपा० । २ नां नारासिंहीश्रीपा० । २ कौं कौमारीश्रीपा० । २ मां मातङ्गीश्रीपा० । २ भैं भद्रकालीश्रीपा० । २ स्त्रीं उग्रताराश्रीपा० । इति गन्धाक्षतपुष्पैः संपूज्य चतुर्थावरणम् ॥

तत ऊर्ध्वत्रिकोणे ऊँश्रीं त्रिपुरासुन्दरीश्रीपा० । ततोऽधः ऊँक्रीं दक्षिणकालिकाश्रीपा० । ततो मध्ये बिन्दौ मूलं महादेवभैरवसाहितश्रीज्वालामुखीश्री० । ऊँह्रीं ज्वालिनीश्री० । २ जटिनीश्री० । २ जातीश्री० । २ जालन्धरीश्री० । इति बिन्दौ संपूज्य सन्तर्प्य योनिमुद्रया प्रणमेदिति पञ्चमावरणम् ॥

ततश्चतुःसमुद्रान् पूजयेत् । ऊँह्रींसः सुधासमुद्रश्री० । ऊँक्षां क्षीरसमुद्रश्री० । ऊँद्रां दधिसमुद्रश्री० । ऊँलूं लवणसमुद्रश्री० । इति विदिग्गते चतुरश्रके चतुःसमुद्रान् संपूज्य संतर्प्य, अत्रैवायुधानि पूजयेत् । यथा—ऊँह्रींवं वरश्री० । २ अं अभयश्री० । २ क्रीं कमलश्री० । २ श्रीं शरश्री० । इत्यायुधानि संपूज्य सन्तर्प्य, अत्रैवासनचतुष्टयं पूजयेत् । यथा—ऊँह्रीं शवासनश्री० । २ पद्मासनश्री० । २ पीठत्रयासनश्री० । २ रुद्राब्जपीठासनश्री० । इति संपूज्य सन्तर्प्य योनिमुद्रया प्रणमेदिति षष्ठावरणम् ॥ पुनर्बिन्दौ श्रीदेवीं गन्धादिनैवेद्यान्तैरुपचारैः संपूज्य सन्तर्प्य पुनः पुष्पाञ्जलित्रयेण पूजयेत् । इत्थं संपूज्य नित्यहोममाचरेत् । यथा—

तत्राग्नौ जले वा श्रीचक्रं विलिख्य विभाव्य वा तत्र स्वहृदयाद्देवीमावाह्य मूलेन स्रुक्स्रुवघृतचरुसंस्कारं विधाय होमं कुर्यात् । यथा—प्राणाय स्वाहा, अपानाय स्वाहा, समानाय स्वाहा, उदानाय स्वाहा, व्यानाय स्वाहा, इति पञ्चाहुतीर्हुत्वा, षडङ्गाहुतीर्जुहुयात् । ऊँह्रांश्रां

हृदयाय नमः स्वाहा, एवमस्त्रान्तं षडङ्गाहुतीर्हुत्वा, आवरणदेवता अपि हुत्वा देवीं स्वहृद्यानीयाग्निं विसर्जयेदिति नित्यहोमविधिः ॥

तत ईशाने मण्डलं कृत्वा "वां वटुकाय नमः, ओंह्रींश्रीं एह्येहि देवीपुत्र वटुकनाथ कपिलजटाभारभास्वर त्रिनेत्र ज्वालामुख सर्वविघ्नान् नाशय २ सर्वोपचारसहितां पूजां बलिं गृह्ण २ स्वाहा" इति वामाङ्गुष्ठानामिकाभ्यां बलिं दद्यात्। तत आग्नेये यां योगिनीभ्यो नमः, "ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निस्तले वा पाताले वानले वा पवनसलिलयोर्यत्र कुत्र स्थिता वा। क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपालिमांसैः प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः" ॥ यां योगिनीभ्यो नमः "सर्वयोगिभ्यो हूंफट् स्वाहा" इति वामाङ्गुष्ठमध्यमाभिर्विसृजेत्। ततो नैर्ऋते "क्षां क्षेत्रपालाय नमः, ओंक्षांक्षींक्षूंक्षैंक्षौंक्षः क्षेत्रपालालिबलिसहितं बलिं गृह्ण २ स्वाहा, "योऽस्मिन् क्षेत्रे निवासी च क्षेत्रपालः सकिङ्करः। स प्रीतो बलिदानेन सर्वरक्षां करोतु मे ॥" इति वामाङ्गुष्ठतर्जनीभ्यां बलिमुत्सृजेदिति। ततो वायव्ये "गांगींगूंगं गणपतये वर वरद सर्व जनं मे वशमानय बलिं गृह्ण २ स्वाहा" इति वामाङ्गुष्ठमध्यमाभ्यां बलिमुत्सृजेदिति। तत उत्तरे ओंसर्वभूतेभ्यो नमः "ओंह्रीं सर्वविघ्नकृद्भ्यः सर्वभूतेभ्यो हूंस्वाहा एष बलिर्नमः" इति सर्वाङ्गुलीभिर्बलिमुत्सृजेदिति बलिपञ्चकं दद्यात्। अशक्त एकपात्र एव कुर्यात्। अस्मिन्नेवावसरे छागादिबलिं दद्यात्। तत्र मूलेन पशुं संस्नाप्य गन्धस्रगादिभिरलङ्कृत्य देव्यग्रे संस्थाप्य, मूलेन प्रोक्षणीजलेन प्रोक्ष्यास्त्राय फडिति संरक्ष्य हुमित्यवगुण्ठ्य मूलेन धेनुमुद्रयामृतीकृत्य "सर्वदेवतारूपिणे बलिरूपायामुकपशवे नमः" इति गन्धादिना त्रिः संपूज्य, तस्य दक्षकर्णे "ओंपशुपाशाय विद्महे विप्रकर्णाय धीमहि तन्नो जीवः प्रचोदयात्।" इति पशुगायत्रीं त्रिः पठित्वा, पुरतः खड्गं निधाय "ओंकालि कालि वज्रेश्वरि लोहदण्डायै नमः" इति गन्धादिना त्रिरभ्यर्च्य, तस्य मुष्टौ ओंऐंह्रींश्रीं वागीश्वरीब्रह्माभ्यां नमः, मध्ये ॐ४ लक्ष्मीनारायणाभ्यां नमः, ॐ४ उमामहेश्वराभ्यां नमः इति संपूज्य तं धृत्वा मन्त्रयेत्। "ओंखड्गायासुरनाशाय देवकार्यार्थतत्पर। पशुश्छेद्यस्त्वया शीघ्रं खड्गनाथ नमोऽस्तु ते ॥" इत्यभिमन्त्र्य, गन्धाक्षत-

जलादिकमादाय, मूलं मासादिकमुत्कीर्त्यामुकगोत्रोऽमुकशर्मामुककामः श्रीज्वालामुख्या इमं पशुं तुभ्यमर्पयाम्यहं संप्रसीद, इति पठित्वा पशोः शिरसि निःक्षिपेत् । ततस्तच्छिरो धृत्वा, ॐयज्ञार्थे पशवः सृष्टा यज्ञार्थे पशुघातनम् । अतस्त्वां घातयिष्यामि तस्माद्यज्ञे बधोऽवधः ॥ शिवायत्तमिदं पिण्डमतस्त्वं शिवतां गतः । उद्बुध्यस्व पशो त्वं हि नाशिवस्त्वं शिवोऽसि हि ॥ इति संबोधयित्वा खड्गमादाय "ः सौः अस्त्राय फट् छिन्धि २ स्वाहा" इति खड्गं तस्य स्कन्धे योजयेत् । ततः स्वयं देवीरूपो भूत्वा निर्विकल्प एकेन प्रहारेण छिन्द्यात् । सविकल्पः परहस्तेन च्छेदयेत् । अत्रैव ब्राह्मणातिरिक्तैः स्वास्नादिबलिर्देयः । इति बलिं दत्त्वा मूलदेवीं संपूज्य रक्तेन सन्तर्प्य, जलममृतीकृत्य मूलेन त्रिरभिमन्त्र्य, मूलं श्रीज्वालामुखि इमं जलं गृहाणेति जलं दत्त्वा योनिमुद्रया प्रणमेत् । ततः कुमारीं सूक्ष्मक्रमेण मूलेन पूजयेत् । ततो मूलेन मूलदेवीं संपूज्य, प्राणायामर्ष्यादिकरषडङ्गन्यासान् विधाय स्वात्मानं कामकलारूपं ध्यायन् मालामादाय, ॐमां माले माले महामाले सर्वशक्तिस्वरूपिणि । चतुर्वर्गस्त्वयि न्यस्तस्तस्मान्मे सिद्धिदा भव ॥ इति संपूज्य, गं अविघ्नं कुरु माले त्वं सर्वभावेषु सर्वदा, इति दक्षकरेण मालां गृहीत्वा स्वशिरसि श्रीगुरुं, कण्ठे पीतवर्णां मूलविद्यां, हृदये ज्वालामुखीदेवीं, श्रीगुरुचरणयोः स्वात्मानं ध्यात्वा, भ्रूमध्ये तेषां चतुर्णामैक्यं विभाव्य, विशुद्धौ चतुष्टयमेकीभूतमानीय देवतारूपं क्षणं ध्यात्वा, मूलं स्मरन् यथाशक्ति जपं कृत्वा, जपान्ते "त्वं माले सर्वदेवानां प्रीतिदा शुभदा भव । शुभं कुरुष्व मे भद्रे यशो वीर्यं च देहि मे ॥ इति मालां स्वशिरसि संस्थाप्य पुनरपि प्राणायामर्ष्यादिकरषडङ्गन्यासान् विधाय "गुह्यातीति" सामान्यार्घ्यामृतेन वामहस्ते तेजोमयं जपफलं समर्प्य, मालां संपूज्य रहः स्थापयेत् । ततो मूलदेव्यै पुष्पाञ्जलिं दत्त्वा, कवचसहस्रनाम-स्तोत्रपाठं कृत्वा श्रीदेवीं सन्तोष्य, प्रागुक्तगुरुस्तोत्रेण श्रीगुरुं स्तुत्वा प्रणम्य, सर्वशक्तिक्रमोद्भूतिप्रभिन्नामहमात्मिकाम् । देवस्य देवतां कांचित् संवित्सुखमयीं श्रये ॥ इति नत्वा क्षमापयेत् ।

भूमौ स्खलितपादानां भूमिरेवावलम्बनम् ।
त्वयि जातापराधानां त्वमेव शरणं शिवे ॥
अपराधो भवत्येव सेवकस्य पदे पदे ।

कोऽपरः सहते लोके केवलं स्वामिनं विना ॥
अपराधसहस्राणि क्रियन्तेऽहर्निशं मया ।
समक्षं सविधं सर्वमिति मातः क्षमस्व मे ॥

इति प्रणामपूर्वं क्षमाप्य, अर्घ्योदकं चुलुकेन गृहीत्वा, ॐ इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा पद्भ्यामुदरेण शिश्ना यत् स्मृतं यदुक्तं यत् कृतं तत् सर्वं श्रीदेव्यर्पणमस्तु स्वाहा, इत्यनेन देव्याश्चरणारबिन्दयोर्गृहीतोदकदानेनात्मानं समर्प्य, कृताञ्जलिर्भूत्वा,

यद् दत्तं भक्तिमात्रेण पुष्पं पत्रं फलं जलम् ।
निवेदितं च नैवेद्यं तद् गृहाणानुकम्पया ॥
आवाहनं न जानामि न जानामि विसर्जनम् ।
पूजाभागं न जानामि त्वं गतिः परमेश्वरि ॥
कर्मणा मनसा वाचा नास्ति वान्या गतिर्मम ।
अन्तश्चारेण भूतानां रक्ष त्वं परमेश्वरि ॥
मातर्योनिसहस्रेषु येषु येषु व्रजाम्यहम् ।
तेषु तेष्वच्युता भक्तिरच्युतेऽस्तु सदा त्वयि ॥
देवी दात्री च भोक्त्री च देवी सर्वमिदं जगत् ।
देवी जयति सर्वत्र या देवी सोऽहमेव हि ॥
यदक्षरपदभ्रष्टं मात्राहीनं च यद्भवेत् ।
क्षन्तुमर्हसि देवेशि कस्य न स्खलितं मनः ॥
क्षमस्व देवदेवेशि ज्वालामुखि महेश्वरि ।
तव पादाम्बुजे नित्यं निश्चला भक्तिरस्तु मे ॥

इति पुष्पैः क्षमापयित्वा, योनिमुद्रया प्रणम्य शङ्खमुद्धृत्य देव्युपरि भ्रामयित्वा,

साधु वासाधु वा कर्म यद्यदाचरितं मया ।
तत् सर्वं कृपया देवि गृहाणाराधनं मम ॥

इति देवीदक्षहस्ते शङ्खजलं किञ्चिद् दत्त्वा, शङ्खं स्वस्थाने संस्थाप्य, तज्जलं किञ्चिद्वामहस्ते निधाय मूलेन सप्तधाभिमन्त्र्य स्वात्मानमन्या-

नपि सामयिकान् तेन प्रोक्ष्य, पुष्पाञ्जलिमादाय

गच्छ गच्छ परं स्थानं स्वस्थानं परमेश्वरि ।
यत्र ब्रह्मादयो देवा न विदुः परमं पदम् ॥

इति विसृज्य संहारमुद्रया श्रीचक्रात् पुष्पमादाय तत्तेजः समुद्धृत्याघ्राय पूरकयोगेन हृदयकमलं प्रापय्य, तत्र यथोक्तरूपां ध्यायन्,

तिष्ठ तिष्ठ परे स्थाने स्वस्थाने परमेश्वरि ।
यत्र ब्रह्मादयः सर्वे सुरास्तिष्ठन्ति मे हृदि ॥

इति हृदयकमले संस्थाप्य, 'चण्डेश्वराय नमः' इति निर्माल्यं संपूज्य ऐशान्यां जलेन त्रिकोणं विधाय, तत्र "निर्माल्यवासिन्यै नमः" इति नैवेद्यशतांशं सहस्रांशं वा निर्माल्यपुष्पसहितं क्षिपेत्, तालत्रयपूर्वं निर्माल्यवासिनीं विसर्जयेत् । ततः

देव नाथ गुरो स्वामिन् देशिक स्वात्मनायक ।
त्राहि त्राहि कृपासिन्धो पूजां पूर्णतरां कुरु ॥

इति श्रीगुरुं प्रणम्य प्रार्थ्य, श्रीपात्रं समुद्धृत्यामस्तकान्तं शिरःस्थाय श्रीगुरवे समर्प्य, तत्पात्रं दक्षकरे निधाय वामकरेण तत्त्वमुद्रया श्रीपादुकामन्त्रेण श्रीपादुकां तर्पयामि नमः इति त्रिः सन्तर्प्य तत्पात्रं स्वस्थाने संस्थाप्य, तज्जलं किञ्चित् पात्रान्तरे निधाय, ऐं आत्मतत्त्वाय नमः, ह्रीं विद्यातत्त्वाय नमः, श्रीं शिवतत्त्वाय नमः, मूलं सर्वतत्त्वाय नमः, इति चतुस्तत्त्वानि जले विन्यस्य तज्जलं चुलकेनादाय, ऐंह्रींश्रीं प्रकृतिबुद्ध्यहङ्कारमनःश्रोत्रत्वक्चक्षुर्जिह्वाघ्राणवाक्पाणिपादपायूपस्थशब्दस्पर्शरूपरसगन्धाकाशवाय्वग्निसलिलपृथिव्यात्मकं अं आं इं ईं उं ऊं ऋं ॠं लृं ॡं एं ऐं ओं औं अं अः ऐं मूलं आत्मतत्त्वात्मकाशुद्धचतुर्विंशतितत्त्वसहितं स्थूलदेहं शोधयामि स्वाहा, ऐंह्रींश्रीं मायाकलाविद्यारागकालनियतिपुरुषात्मकशुद्धाशुद्धसप्ततत्त्वसहितं कं खं गं घं ङं चं छं जं झं ञं टं ठं डं ढं णं तं थं दं धं नं पं फं बं भं मं क्लीं मूलं विद्यातत्त्वात्मकं सूक्ष्मदेहं शोधयामि स्वाहा, ऐंह्रींश्रीं शिवशक्तिसदाशिवेश्वरशुद्धविद्यादिपञ्चतत्त्वसहितं यं रं लं वं शं षं सं हं ळं क्षः सौः मूलं शिवतत्त्वात्मकं परदेहं शोधयामि स्वाहा, ऐंह्रींश्रीं शिवादिषट्त्रिंशत्तत्त्वसहितं अं आं इत्यादि क्षः इत्यन्तं ऐंक्लींसौः मूलं सर्वतत्त्व-

स्थूलसूक्ष्मपराख्यदेहरूपाभिमानिनं जीवात्मानं शोधयामि स्वाहा, इति चुलकचतुष्टयं स्वीकृत्य तत्पात्रं कराभ्यामादाय, मूलं गुरुपादुकामुच्चार्य,

ॐ प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचम् ।
धर्माधर्मकलास्नेहपूर्णां वह्नौ जुहोम्यहं स्वाहा ॥

इति तज्जलमश्नीयात् । ततः कराभ्यां मूर्धादिपादान्तं षट्त्रिंशत्तत्त्वात्मकतां भावयन् स्वदेहं स्पृशेत् । ततः स्वसामयिकैः सह यथाशास्त्रं गुरूपदिष्टविधिना पात्रवन्दनं कुर्यात् । तत्रादौ मूलाधारात् कुण्डलिनीमिष्टदेवतारूपामुत्थाप्य स्वजिह्वाग्रान्तमानीय पात्रं वामहस्तकृतत्रिखण्डोपरि दत्तहस्तेनाच्छाद्य श्लोकं पठेत् ।

अधुना देवि वक्ष्येऽहं पात्रवन्दनमीश्वरि ।
तत्कालं यद्वरानन्दपात्रं देवैश्च वन्दितम् ॥ १ ॥
पूजायां पात्रमानन्दभरितं परमेश्वरि ।
गुरुणा दत्तमभ्यर्च्य प्रणमेच्छिरसा तदा ॥ २ ॥

श्रीमद्भैरवशेखरप्रविलसच्चन्द्रामृतप्लावितं
क्षेत्राधीश्वरयोगिनीगणमहासिद्धैः समाराधितम् ।
आनन्दागमकं महात्मकमिदं साक्षात् त्रिखण्डामृतं
वन्दे श्रीप्रथमं कराम्बुजगतं पात्रं विशुद्धिप्रदम् ॥ ३ ॥

ॐ आत्मतत्त्वं शोधयामि स्वाहा ।

हैमं चैर्ण[1]रसावहं दयितया दत्तं च पेयादिभिः
किञ्चिच्चञ्चलरक्तपङ्कजदृशा सानन्दमालोकितम् ।
वामे स्वादुविशुद्धशुद्धिशकलं पाणौ निधाय स्वके
वन्दे पात्रमहं द्वितीयमधुनानन्दैकसंवर्धनम् ॥ ४ ॥

ॐ विद्यातत्त्वं शोधयामि स्वाहा ।

ॐ सर्वाम्नायकलाकलापकलितं कौतूहलोद्योतितं[3]
चन्द्रोपेन्द्रमहेन्द्रशंभुवरुणब्रह्मादिभिः सेवितम्[2] ।

१ ' सिन्धु ' ख. पाठः । २ ' उद्वीक्षितम् ' ख. पाठः । ३ ' उदद्योतितं ' ख. पाठः ।

ध्यातं देवगणैः परं मुनिगणै[1]र्मोक्षार्थिभिः सर्वदा
वन्दे पात्रमहं तृतीयमधुना स्वात्मावबोधक्षमम् ॥ ५ ॥

ॐ शिवतत्त्वं शोधयामि स्वाहा ।

मद्यं मीनरसावहं हरिहरब्रह्मादिभिः सेवितं
मुद्रामैथुनधर्मकर्मनिरतं क्षाराम्लतिक्ताश्रितम्[2] ।
आचार्या[3]र्चितमष्टभैरवकलान्यासेन चाच्छादितं
पायात् पञ्चमकारतत्त्वनिलयं पात्रं चतुर्थं नुमः ॥ ६ ॥

प्रकृतितत्त्वं शोधयामि स्वाहा ।

आधारे भुजगाधिराजवलये पात्रं महीमण्डलं
द्रव्यं[4] सप्तसमुद्रवारि पिशितं चाष्टौ च दिग्दन्तिनः ।
सोहं भैरवमर्चयन् प्रतिदिनं तारागणैरक्षतै-
रादित्यप्रमुखैः सुरासुरगणैराज्ञाकरैः किङ्करैः ॥ ७ ॥

पुरुषतत्त्वं शोधयामि स्वाहा ।

स[5]च्छत्रामलभद्रपीठपरमानन्दोदयादायकं[6]
रम्यं राज्यकरं सदा सुखकरं सायुज्यसाम्राज्यदम् ।
नानाव्याधिभवान्धकारहरणं जन्मान्तरध्वंसनं
श्रीमद्भैरवभैरवीप्रियतरं पात्रं च षष्ठं नुमः ॥ ८ ॥

मनस्तत्त्वं शोधयामि स्वाहा ।

जाग्रत्स्वप्नसुषुप्तिबोधं[7]पवनं चैतन्यसाद्यप्रदं
विद्युद्भास्करवह्निचन्द्रधनुषां ज्योतिष्कलाव्यापितम् ।
वामापिङ्गलमध्यगा त्रिवलया त[8]स्याः प्रबोधोद्धतं
पात्रं सप्तममूषणेन तरुणानन्दप्रदं पातु माम् ॥ ९ ॥

बुद्धितत्त्वं शोधयामि स्वाहा ।

---

१ ‘ वरैः ’ ख. पाठः । २ ‘ श्रयम् ’ ख. पाठः । ३ ‘ आचार्याष्टकसिद्धभैरव ’ ग. पाठः । ४ ‘ मद्यं ’ ग. पाठः । ५ ‘ छत्रं चामरभद्र ’ ग. पाठः । ६ ‘ दयं दायकं वाजीदन्तिमनोहरं ’ ख. पाठः । ७ ‘ तुर्यपरतः ’ ग. पाठः । ८ ‘ सत् कुण्डली चोर्ध्वगं ’ ख. पाठः ।

खड्गं श्रीगुरुपादुकां च तिलकं कण्ठेऽपि सारस्वतं
शत्रोर्वाग्बलशौर्यकार्यहरणं देहस्थितेः कारणम् ।
वाञ्छासिद्धिकरं मनःस्थितिकरं चावर्जनं योषितां
पात्रं चाष्टममष्टसिद्धिकरणं प्रौढप्रसन्नं भजे ॥ १० ॥

अहङ्कारतत्त्वं शोधयामि स्वाहा ।

सर्वानन्दकरं सदा शिवपदं सर्वार्थसंपत्प्रदं
साम्राज्यार्थकरं समस्तसुखदं चाज्ञानविध्वंसनम् ।
आयुष्कान्तियशोविवर्धनकरं संसारमोहच्छिदं
पात्रं लक्षगुणात्मकं च नवमं प्रौढप्रतापं भजे ॥ ११ ॥

शक्तितत्त्वं शोधयामि स्वाहा ।

ब्रह्मविष्णुमहेशानां देवानां च विशेषतः ।
दुर्लभं पावनं पात्रं दशमं प्रणमाम्यहम् ॥ १२ ॥

भैरवतत्त्वं शोधयामि स्वाहा ।

पापघ्नं शान्तिशुभदं दिव्यं स्वादु सुखावहम् ।
पात्रमेकादशं वन्दे गुरुसेवासुखागतम् ॥ १३ ॥

सर्वतत्त्वं शोधयामि स्वाहा । इति पात्रवन्दनं कृत्वा पात्रप्रशंसा कुर्यात् ।

पात्रं कृत्वा करे मन्त्री सर्वकर्म लभेत्सुखी ।
इह लोके श्रियं भुक्त्वा देहान्ते भैरवो भवेत् ॥ १४ ॥
करे पात्रं मुखे स्तोत्रमानन्दो हृदयाम्बुजे ।
भक्तिर्गुरुपदाम्भोजे स्मरणं किमतः परम् ॥ १५ ॥

एकेन शुष्कचणकेन घटं पिबामि
वापीं पिबामि सहसा लवणार्द्रकेण ।
आस्वाद्य मांसमलिरोहितमुण्डखण्डं
गङ्गां पिबामि यमुनां सह सागरेण ॥ १६ ॥

करे माला मुखे हाला वामे रामा सुकोमला ।

---

१ 'बुद्धि' ग. पाठः । २ 'वश्यं जगन्मोपितां' ख. पाठः । ३ 'लक्षम' ख. पाठः ।

त्रिपुरा हृदये बाला यागशाला गृहे गृहे ॥ १७ ॥
पात्रं भैरवपात्रं गोत्रं श्रीनाथपादुकागोत्रम् ।
शास्त्रं संविच्छास्त्रं ज्ञानं तत्त्वावबोधकं ज्ञानम् ॥ १८ ॥

अलिपिशितपुरन्ध्रीभोगपूजापरोऽहं
बहुविधकुलमार्गारम्भसंभावितोऽहम् ।
पशुजनविमुखोऽहं भैरवीमाश्रितोऽहं
गुरुचरणरतोऽहं भैरवोऽहं शिवोऽहम् ॥ १६ ॥

वामे चन्द्रमुखी मुखे च मदिरा पात्रं कराम्भोरुहे
मूर्ध्नि श्रीगुरुचिन्तनं भगवतीध्यानास्पदं मानसम् ।
जिह्वायां जपसाधनं परिणतिः कौलक्रमाभ्यासने
ये सन्तो नियतं पिबन्ति सरसं ते भुक्तिमुक्ती गताः ॥२०॥

वामे रामा रमणकुशला दक्षिणे चालिपात्र-
मग्रे मुद्राश्चणकवटकाः सूकरस्योष्णशुद्धिः ।
स्कन्धे वीणा सरसकविता सद्गुरोः सत्कथायां
कौलो मार्गः परमगहनो योगिनामप्यगम्यः ॥ २१ ॥

पीत्वा पीत्वा पुनः पीत्वा यावत् पतति भूतले ।
उत्थाय च पुनः पीत्वा पुनर्जन्म न विद्यते ॥ २२ ॥
धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा ।
सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥ २३ ॥
प्रकाशाकाशहस्ताभ्यामवलम्ब्योन्मनीस्रुचा ।
धर्माधर्मकलास्नेहपूर्णां वह्नौ जुहोम्यहम् ॥ २४ ॥
यावन्न चलते दृष्टिर्यावन्न चलते मनः ।
तावत् पानं प्रकर्तव्यं पशुपानमतः परम् ॥ २५ ॥

इत्थं पात्रप्रशंसां कृत्वा, ततः स्वसामयिकान् यथाशास्त्रं गुरूपदिष्ट-विधिना संपूज्य संतर्प्य, पूर्वस्थापितबलिपात्रस्थमन्नादिकमेकस्मिन्

पात्रे कृत्वा तद्गृहादुत्थाय सोदकपात्रहस्तो बहिर्गत्वा, जलेन शुचौ देशे चतुरश्रवृत्तत्रिकोणात्मकं मण्डलं कृत्वा, तत्र "गदात्रिशूलडमरुपात्रहस्तं त्रिलोचनम्। कृष्णाभं भैरवं देवं सर्वविघ्नविनाशनम्" ॥ इत्युच्छिष्टभैरवं ध्यात्वा, गन्धादिना संपूज्य, "ॐ उच्छिष्टभैरव एह्येहि बलिं गृह्ण २ हुं फट् स्वाहा" इति पात्रस्थं बलिद्रव्यं तत्र मण्डले विसृज्य, तत्पात्रे हस्तौ पादौ च प्रक्षाल्याचम्य, तत्पात्रं जलेनापूर्य पूजागृहद्वारं गत्वा प्रविश्य स्वासने समुपविश्य तत्पात्रस्थजले श्रीपात्रजलबिन्दुं दत्त्वा तेन जलेन स्वात्मानमभिषिञ्चन् शान्तिस्तोत्रं पठेत्। तदुक्तं श्रीदेवीरहस्ये (२१ प०)। यथा—

देवि वक्ष्यामि पूजान्ते शान्तिस्तोत्रमनुत्तमम्।
वीरा येन परानन्दपदं प्राप्स्यन्त्यनामयम्[1] ॥ १ ॥
योगिनीचक्रमध्यस्थं मातृमण्डलवेष्टितम्।
नमामि शिरसा नाथं भैरवं भैरवीप्रियम् ॥ २ ॥
अनादिघोरसंसारव्याधिध्वंसैकहेतवे।
नमः श्रीनाथवैद्याय कुलौषधिप्रदायिने ॥ ३ ॥
आपदो दुरितं रोगाः समयाचारलङ्घनात्।
ते सर्वेऽत्र व्यपोहन्तु दिव्यचक्रस्य मेलनात् ॥ ४ ॥
आयुरारोग्यमैश्वर्यं कीर्तिर्लाभः सुखं जयः।
कान्तिर्मनोरथश्चास्तु पान्तु सर्वाश्च देवताः ॥ ५ ॥
संपूजकानां परिपालकानां यतीन्द्रयोगीन्द्रतपोधनानाम्।
देशस्य राष्ट्रस्य कुलस्य राज्ञां करोतु शान्तिं भगवान् कुलेशः ॥ ६ ॥
नन्दन्तु साधककुलान्वयदर्शका ये
सृष्ट्याद्यनाख्यचतुरुक्रमहान्वया ये।
नन्दतु सर्वकुलकौलरताः परे येऽ-
प्यन्ये विशेषपदभेदकशाम्भवा ये ॥ ७ ॥

---

१ 'निःस्पृहाः' ख. पाठः।

नन्दन्तु सिद्धगुरवः स्वगुरुक्रमौघा
ज्येष्ठानुगाः समयिनो वटुकाः कुमार्यः ।
षड्योगिनीप्रवरवीरकुलप्रसूता
नन्दन्तु भूमिपतिगोद्विजसाधुलोकाः ॥ ८ ॥

नन्दन्तु नीतिनिपुणा निरवद्यनिष्ठा
निर्मत्सरा निरुपमा निरुपद्रवाश्च ।
नित्या निरञ्जनरता गुरवो निरीहाः
शाक्ताश्च शान्तमनसो हृतशोकशङ्काः ॥ ९ ॥

नन्दन्तु योगनिरताः कुलयोगयुक्ता
आचार्यसामयिकसाधकपुत्रकाश्च ।
गावो द्विजा युवतयो यतयः कुमार्यो
धर्मे भवन्तु निरता गुरुभक्तियुक्ताः ॥ १० ॥

नन्दन्तु साधककुला अणिमादिनिष्ठाः
शापाः पतन्तु समयद्विषि योगिनीनाम् ।
सा शाम्भवी स्फुरतु कापि ममाध्यवस्था
यस्यां गुरोश्चरणपङ्कजमेव लभ्यम् ॥ ११ ॥

याश्चक्रक्रमभूमिकावसतयो नाडीषु या संस्थिता
याः कायद्रुमरोमकूपनिलया याः संस्थिता धातुषु ।
उच्छ्वासोर्मिमरुत्तरङ्गनिलया निःश्वासवासाश्च या-
स्ता देव्यो रिपुपक्षभक्षणपरास्तृप्यन्तु कौलार्चिताः ॥ १२ ॥

या दिव्यक्रमपालिकाः क्षितिगता या देवतास्तोयगा
या नित्यं प्रथितप्रभाः शिखिगता या मातरिश्वाश्रयाः ।
या व्योमामृतमण्डलामृतमया याः सर्वगाः सर्वदा-
स्ताः सर्वाः कुलमार्गपालनपराः शान्तिं प्रयच्छन्तु मे ॥ १३ ॥

ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निस्तले वा
पाताले वा तले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा ।
क्षेत्रे पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन
प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवन्द्याः १४
ब्रह्मांशेषेशदुर्गागुहवटुकगणा भैरवाः क्षेत्रपाला
वेतालादित्यरुद्रग्रहवसुमनुसिद्धाप्सरोगुह्यकाद्याः ।
भूता गन्धर्वविद्याधरऋषिपितृयक्षासुराहिप्रभूता
योगीशाश्चारणाः किंपुरुषमुनिवराश्चक्रगाः पान्तु सर्वे ॥ १५ ॥
देहस्थाखिलदेवता गजमुखाः क्षेत्राधिपा भैरवा
योगिन्यो वटुकाश्च यक्षपितरो भूताः पिशाचा ग्रहाः ।
अन्ये भूचरदिक्चराश्च खचरा वेतालकाश्चेटका-
स्तृप्ताः स्युः कुलपुत्रकस्य पिबतः पानं सदीपं चरुम् ॥१६॥
सत्यं चेद्गुरुवाक्यमेव पितरो देवाश्च चेद्योगिनी-
प्रीतिश्चेत् परदेवता च यदि चेद्वेदाः प्रमाणं च चेत् ।
शाक्तेयं यदि दर्शनं भवति चेदाज्ञेयमेषास्ति चेत्
सन्त्यत्रापि च कौलिकाश्च यदि चेत् स्यान्मे जयः सर्वदा ॥१७॥
तृप्यन्तु मातरः सर्वाः सरुद्राः सगणाधिपाः ।
योगिन्यः क्षेत्रपालाश्च मम देहे व्यवस्थिताः ॥ १८ ॥
शिवाद्यवनिपर्यन्तं ब्रह्मादिस्तम्बसंयुतम् ।
कालाग्न्यादिशिवान्तं च जगद्यज्ञेन तृप्यतु ॥ १९ ॥
पठित्वेदं नमेद्वीरान् वीरवन्दनमाचरेत् ।
स्तुवेद्वीरान्नमेद्वीरान् मन्त्रसिद्धिः प्रजायते ॥ २० ॥

इत्थं शान्तिस्तोत्रं पठित्वा वीरवन्दनस्तोत्रं पठन् ।

जगत्त्रयाभ्यर्चितशासनेभ्यः
परार्थसंपादनकोविदेभ्यः ।

---

१ 'श्रीशेष' ख. पाठः ।

समुद्धृतक्लेशमहोरगेभ्यो
　　नमो नमः साधकनायकेभ्यः ॥ १ ॥
प्रहीणसर्वाश्रयवासनेभ्यः
　　सर्वार्थतत्त्वोदितसाधनेभ्यः ।
सर्वप्रजाभ्युद्धरणोद्यतेभ्यो
　　नमो नमः साधकनायकेभ्यः ॥ २ ॥
विधूतकेशालिकपालिकेभ्यः
　　सुरासवारक्तविलोचनेभ्यः ।
नवीनकान्ता-रततत्परेभ्यो
　　नमो नमः शाम्भविशांभवेभ्यः ॥ ३ ॥
विभूतिलिप्ताङ्गदिगम्बरेभ्य-
　　श्चिताग्निधूमालिभयानकेभ्यः ।
कपालपात्रामृतपानकेभ्यः
　　नमो नमो भैरविभैरवेभ्यः ॥ ४ ॥
सिद्ध्यष्टकाधानमहामुनिभ्यः
　　श्रीभैरवाचारकृतादरेभ्यः ।
स्वाधीनतान्यक्कृतनिर्जरेभ्यो
　　नमो नमो भैरविभैरवेभ्यः ॥ ५ ॥
अनेन वीरस्तवकीर्तनेन
　　समुद्धृतक्लेशसुवासनोऽहम् ।
संसारकान्तारमहार्णवेऽस्मि-
　　न्निमज्जमानं जगदुद्धरेयम् ॥ ६ ॥

इति शान्तिस्तोत्रं वीरवन्दनं च पठित्वा सर्वान् सामयिकानभिषिच्य, विशेषार्घ्यपात्रमुद्धृत्य शिरःस्थाय श्रीगुरवे समर्प्य तथैव तत्पादुकां त्रिः संपूज्य मूलविद्यया गुरुपादुकाविद्यान्ते च, स्वाहेति स्वमूलाधा-

रकुण्डलिन्यात्मकपरदेवतामुखे हवनबुद्ध्या तज्जलं पात्रान्तरे कृत्वा-श्नीयात् । शेषं प्रियशिष्याय प्रसादबुद्ध्या किञ्चिद् दद्यात् । सोऽपि स्वपात्रे कृत्वा तज्जलं प्राश्नीयादित्थमर्घ्यप्रतिपत्तिः । ततः स्वगुरूप-दिष्टविधिना शेषकृत्यं समापयेत् । ततस्ताम्रादिपात्रे गन्धपुष्पाक्षतान्वितं जलमापूर्य, " ॐ नमो विवस्वते ब्रह्मन् भास्वते विष्णुतेजसे । जग-त्पवित्रे शुचये सवित्रे कर्मदायिने ॥ ॐह्रांह्रींसः सूर्य एष तेऽर्घः स्वाहा " इत्यर्घ्यं सूर्याय दत्त्वा कृताञ्जलिः—" ॐ यच्छिद्रं तपःच्छिद्रं यच्छिद्रं पूजने मम । अच्छिद्रमस्तु तत्सर्वं भास्करस्य प्रसादतः ॥ " इत्यच्छि-द्रमवधारयेत् । ततो मूलेन प्राणायाममर्घ्यादिकरषडङ्गन्यासान् विधाय षडा-सन-वाग्देवताष्टकन्यासान् विधाय प्रागुक्तगुरुस्तोत्रं पठित्वा, श्रीगुरुं प्रणम्य मूलविद्यया द्वितीयकूटेन निर्माल्यं शिरसि धृत्वा मूलविद्ययैव चरणोदकं स्वीकृत्य श्रीपरदेवताभक्तेभ्यो नैवेद्यादिकं विभज्य सुहृद्-बान्धवजनैः साकं भुक्त्वा स्वात्मानं कामकलारूपं भावयन् सुखं विहरेदिति ॥

इत्येषा नित्यपूजायाः पद्धतिर्गद्यरूपिणी ।
ज्वालासर्वस्वरूपापि न देया तत्त्ववादिभिः ॥
श्रीज्वालापद्धतिर्गुह्या नित्यार्चनक्रमाङ्किता ।
गुह्यातिगुह्यगुह्याढ्या गोपनीया मुमुक्षुभिः ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीज्वालामुखीपद्धतिः । २ ॥

अथ

# श्रीज्वालामुखीकवचम् ।

श्रीभैरव उवाच ।

शृणु देवि जगन्मातर्ज्वालामुख्या ब्रवीम्यहम् ।
कवचं मन्त्रगर्भं च त्रैलोक्यविजयाभिधम् ॥ १ ॥
अप्रकाश्यं परं गुह्यं न कस्य कथितं मया ।
विनामुना न सिद्धिः स्यात् कवचेन महेश्वरि ॥ २ ॥
अवक्तव्यमदातव्यं दुष्टायासाधकाय च ।
निन्दकायान्यशिष्याय न वक्तव्यं कदाचन ॥ ३ ॥

श्रीदेव्युवाच

त्रैलोक्यनाथ वद मे बहुधा कथितं मया ।
स्वयं त्वया प्रसादोऽयं कृतः स्नेहेन मे प्रभो ॥ ४ ॥

श्रीभैरव उवाच ।

प्रभाते चैव मध्याह्ने सायंकालेऽर्धरात्रके ।
कवचं मन्त्रगर्भं च पठनीयं परात्परम् ॥ ५ ॥
मधुना मत्स्यमांसादिमोदकेन समर्चयेत् ।
देवतां परया भक्त्या पठेत् कवचमुत्तमम् ॥ ६ ॥
ओं ह्रीं मे पातु मूर्धानं ज्वाला द्व्यक्षरमातृका ।
ओं ह्रींश्रीं मेऽवताद्भालं त्र्यक्षरी विश्वमातृका ॥ ७ ॥
ओं ऐंक्लींसौः ममाव्यात् सा देवी माया भ्रुवौ मम ।
ओं अंआंइंईंह्सौः पायान्नेत्रे मे विश्वसुन्दरी ॥ ८ ॥

ऊँ ह्रींऐंसौंः पातु नासां उंऊं कर्णौ च मोहिनी ।
ऋंऋंलृंलॄंहसौंः मे बाला पायाद् गण्डौ च चक्षुषी ॥ ९ ॥
एंऐंओंऔं सदाऽव्यान्मे मुखं श्रीभगरूपिणी ।
अंअः ऊँह्रींक्लींसौंः पायाद् गलं मे भगधारिणी ॥ १० ॥
कंखंगंघंहसौंः पायात् स्कन्धौ मे त्रिपुरेश्वरी ।
ङंचंछंजंहसौंः वक्षः पायाच्च बैन्दवेश्वरी ॥ ११ ॥
झंञंटंठंहसौंःऐंक्लींहूं ममाऽव्यात् सा भुजान्तरम् ।
डंढंणंतं स्तनौ पायाद् भीरुण्डा मम सर्वदा ॥ १२ ॥
थंदंधंनं कुक्षिं पायान्मम ह्रींश्रीं परा जया ।
पंफंबंश्रींह्रींसौंः पार्श्वं मृडानी पातु मे सदा ॥ १३ ॥
भंमंयंरंश्रींहसौंःलंवं नाभिं मे पान्तु कन्यकाः ।
शंषंसंहं सदा पातु गुह्यं मे गुह्यकेश्वरी ॥ १४ ॥
ळंक्षः पातु सदा लिङ्गं ह्रींश्रीं लिङ्गनिवासिनी ।
ऐंक्लींसौंः पातु मे मेढ्रं पृष्ठं मे पातु वारुणी ॥ १५ ॥
ऊँ श्रींह्रींक्लींहूंहूं पातु ऊरू मे पात्वमां[1] सदा ।
ऊँ ऐंक्लींसौंःयां वात्याली[2] जङ्घे पायात् सदा मम ॥ १६ ॥
ऊँ श्रींसौंक्लीं सदा पायाज्जानुनी कुलसुन्दरी ।
ऊँ श्रींह्रींहूं कूबरी[3] च गुल्फौ ऐंश्रीं ममावतु ॥ १७ ॥
ऊँ श्रींह्रींक्लींऐंसौंः पायात् कुण्ठी क्रींह्रींहसौंः मे तलम् ।
ऊँ श्रींश्रीं पादौ हसौंः पायाद् ह्रींश्रींक्रीं कुत्सिता मम ॥१८॥
ऊँ ह्रींश्रीं कुटिला ह्रींक्रीं पादपृष्ठं च मेऽवतु ।
ऊँ श्रींह्रींश्रीं च मे पातु पादस्था अङ्गुलीः सदा ॥ १९ ॥
ऊँ ह्रींहसौंःऐं कुहूः मज्जां ऊँ श्रीं कुन्ती[4] ममावतु ।
रक्तं कुम्भेश्वरी ऐंक्लीं शुक्रं पायाच्च कूचरी ॥ २० ॥

१ 'पातु मां' ख. पाठः। २ 'वाराही' ख. पाठः। ३ 'कुब्जिका' ख. पाठः। ४ 'कुन्ता' ख. पाठः।

पातु मेऽङ्गानि सर्वाणि ओं ह्रींश्रींक्लींऐंह्सौः सदा ।
पादादिमूर्धपर्यन्तं ह्रींक्लींश्रीं कारुणी' सदा ॥ २१ ॥
मूर्धादिपादपर्यन्तं पातु क्लींश्रीं कृतिर्मम ।
ऊर्ध्वं मे पातु ब्रां ब्राह्मी अधः श्रीं शाम्भवी मम ॥ २२ ॥
दुं दुर्गा पातु मे पूर्वे वां वाराही शिवालये ।
ह्रींक्लींहूंश्रीं च मां पातु उत्तरे कुलकामिनी ॥ २३ ॥
नारसिंही ह्सौःऐंक्लीं वायव्ये पातु मां सदा ।
ओं श्रींक्लींऐं च कौमारी पश्चिमे पातु मां सदा ॥ २४ ॥
ओं ह्रींश्रीं निर्ऋतौ पातु मातङ्गी मां शुभङ्करी ।
ओं श्रींह्रींक्लीं सदा पातु दक्षिणे भद्रकालिका ॥ २५ ॥
ओं श्रींऐंक्लीं सदाग्नेय्यामुग्रतारा सदावतु ।
ओं वां दशदिशो रक्षेन्मां ह्रीं दक्षिणकालिका ॥ २६ ॥
सर्वकालं सदा पातु ऐंसौः त्रिपुरसुन्दरी ।
मारीभये च दुर्भिक्षे पीडायां योगिनीभये ॥ २७ ॥
ओं ह्रींश्रीं त्र्यक्षरी पातु देवी ज्वालामुखी मम ।
इतीदं कवचं पुण्यं त्रिषु लोकेषु दुर्लभम् ॥ २८ ॥
त्रैलोक्यविजयं नाम मन्त्रगर्भं महेश्वरि ।
अस्य प्रसादादीशोऽहं भैरवाणां जगत्त्रये ॥ २९ ॥
सृष्टिकर्तापहर्ता च पठनादस्य पार्वति ।
कुङ्कुमेन लिखेद्भूर्जे आसवेन स्वरेतसा ॥ ३० ॥
स्तम्भयेदखिलान् देवान् मोहयेदखिलाः प्रजाः ।
मारयेदखिलान् शत्रून् वशयेदपि देवताः ॥ ३१ ॥
बाहौ धृत्वा चरेद्युद्धं शत्रूञ्जित्वा गृहं व्रजेत् ।
पोते रणे विवादे च कारायां रोगपीडने ॥ ३२ ॥

---

क्लींश्रीं मे वारुणी ' ख. पाठः ।

ग्रहपीडादिकालेषु पठेत् सर्वं शमं व्रजेत् ।
इतीदं कवचं देवि मन्त्रगर्भं सुरार्चितम् ॥ ३३ ॥
यस्य कस्य न दातव्यं विना शिष्याय पार्वति ।
मासैकेन भवेत् सिद्धिर्देवानां या च दुर्लभा ।
पठेन्मासत्रयं मर्त्यो देवीदर्शनमाप्नुयात् ॥ ३४ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीज्वालामुखीकवचम् ॥ ३ ॥

अथ

# श्रीज्वालामुखीसहस्रनामकम् ।

श्रीभैरव्युवाच ।
भगवन् सर्वधर्मज्ञ[1] देवानामभयङ्कर ।
पुरा मे यत् त्वया प्रोक्तं वरं कैलाससानुतः ॥ १ ॥
कृपया परया नाथ तं मे दातुं क्षमो भव ।
श्रीभैरव उवाच ।
सत्यमेतत् त्वया प्रोक्तं वरं वरय पार्वति ॥ २ ॥
तं प्रयच्छामि संसिद्ध्यै मनसा यदभीप्सितम् ।
श्रीभैरव्युवाच ।

१ 'शास्त्रज्ञ' ख. पाठः ।

ज्वालामुख्यास्त्वया देव सहस्राणि च तत्त्वतः ॥ ३ ॥
प्रोक्तानि ब्रूहि मे भक्त्या यदि मे त्वत्कृपा भवेत् ।

श्रीभैरव उवाच ।

प्रवक्ष्यामि महादेवि ज्वालानामानि तत्त्वतः ॥ ४ ॥
सहस्राणि कलौ नृणां वरदानि यथेप्सितम् ।
अभक्ताय न दातव्यं दुष्टायासाधकाय च ॥ ५ ॥
या सा ज्वालामुखी देवी त्रैलोक्यजननी स्मृता ।
तस्या नामानि वक्ष्यामि दुर्लभानि जगत्त्रये ॥ ६ ॥
विना नित्यबलिं स्तोत्रं न रक्ष्यं साधकोत्तमैः ।
दुर्भिक्षे शत्रुभीतौ च मारणे स्तम्भने पठेत् ॥ ७ ॥
सहस्राख्यं स्तवं देव्याः सद्यः सिद्धिर्भविष्यति ।
विना गन्धाक्षतैः पुष्पैर्धूपैर्दीपैर्विना बलिम् ॥ ८ ॥
न रक्ष्यं साधकेनैव देवीनामसहस्रकम् ।
दत्त्वा बलिं पठेद् देव्या मन्त्री नामसहस्रकम् ।
देवि सत्यं मया प्रोक्तं सिद्धिहानिस्ततोऽन्यथा ॥ ९ ॥

अस्य श्रीज्वालामुखीसहस्रनामस्तवस्य, भैरव ऋषिः, अनुष्टुप् छन्दः, श्रीज्वालामुखी देवता, ह्रीं बीजं, श्रीं शक्तिः, ओं कीलकं पाठे विनियोगः ॥ भैरवऋषये नमः शिरसि । अनुष्टुप्छन्दसे नमो मुखे । श्रीज्वालामुखीदेवतायै नमो हृदि । ह्रीं बीजाय नमो नाभौ । श्रीं शक्तये नमो गुह्ये । ओं कीलकाय नमः पादयोः । विनियोगाय नमः सर्वाङ्गेषु । ओंह्रामिति षड्दीर्घयुक्तमायया करषडङ्गानि विधाय ध्यायेत्—

उद्यच्चन्द्रमरीचिसंनिभमुखीमेकादशाराब्जगां
पाशाम्भोजवराभयान् करतलैः संबिभ्रतीं सादरात्[1] ।
अग्नीन्द्वर्कविलोचनां शशिकलाचूडां त्रिवर्गोज्ज्वलां
प्रेतस्थां ज्वलदग्निमण्डलशिखां ज्वालामुखीं नौम्यहम् ॥

---

१ 'तीमादरात्' ख. पाठः ।

ॐह्रींज्वालामुखी जैत्री श्रींज्योत्स्ना जयदा जया ।
औदुम्बरा महानीला शुक्लुप्ता शची श्रुतिः[1] ॥ १ ॥
स्मयदा स्मयहर्त्री च स्मरशत्रुप्रियङ्करी ।
मानदा मोहिनी मत्ता माया बाला बलन्धरा ॥ २ ॥
भगरूपा[2] भगावासा भीरुण्डा भयघातिनी ।
भीतिर्भयानकास्या च भ्रूः सुभ्रूः सुखिनी सती ॥ ३ ॥
शूलिनी शूलहस्ता च शूलिवामाङ्कवासिनी ।
शशाङ्कजननी शीता शीतला शारिका शिवा[3] ॥ ४ ॥
स्रुचिका मधुमन्मान्या त्रिवर्गफलदायिनी ।
त्रेता[4] त्रिलोचना दुर्गा दुर्गमा दुर्गतिर्गतिः ॥ ५ ॥
पूता प्लुतिर्विमर्शा[5] च सृष्टिकर्त्री सुखावहा ।
सुखदा सर्वमध्यस्था लोकमाता महेश्वरी ॥ ६ ॥
लोकेष्टा वरदा स्तुत्या स्तुतिर्द्रुतगतिर्नुतिः[6] ।
नयदा नयनेत्रा च नवग्रहनिषेविता ॥ ७ ॥
अम्बा वरूथिनी वीरजननी वीरसुन्दरी ।
वीरसूर्वारुणी वार्ता वराऽभयकरा वधूः[7] ॥ ८ ॥
वानीरतलगा वाम्या वामाचारफलप्रदा ।
वीरा शौर्यकरी शान्ता शार्दूलत्वक् च शर्वरी ॥ ९ ॥
शलभी शास्त्रमर्यादा शिवदा शम्बरान्तका ।
शम्बरारिप्रिया शम्भुकान्ता शशिनिभानना ॥ १० ॥
शस्त्रायुधधरा शान्तिर्ज्योतिर्दीप्तिर्जगत्प्रिया ।
जगती जित्वरा जारी मार्जारी पशुपालिनी (१००) ॥ ११ ॥

---

१ 'स्तुतिः' ख. पाठः । २ 'माता' ख. पाठः । ३ 'शिला' ग. पाठः । ४ 'त्रिलोचना' ग. पाठः । ५ 'विसर्गा' ख. ग. पाठः । ६ 'द्रुतिर्गतिः' ख. पाठः । ७ 'वीरा' ख. पाठः । 'धीरा' ग. पाठः ।

मेरुमध्यगता मैत्री मुसलायुधधारिणी ।
मान्या मन्त्रेष्टदा माध्वी माध्वीरसविघूर्णिता ॥ १२ ॥
मोदकाहारमत्ता च मत्तमातङ्गगामिनी ।
महेश्वरप्रियोन्नत्ता दार्वी दैत्यविमर्दिनी ॥ १३ ॥
देवेष्टा साधकेष्टा च साध्वी सर्वत्रगाऽसमा ।
सन्तानकतरुश्छायासन्तुष्टाऽध्वश्रमापहा ॥ १४ ॥
शारदा शरदब्जाक्षी वरदाब्जनिभानना ।
नम्राङ्गी कर्कशाङ्गी च वज्राङ्गी वज्रधारिणी ॥ १५ ॥
वज्रेष्टा वज्रकङ्काला वानरी वायुवेगिनी ।
वराकी कुलका काम्या कुलेष्टा कुलकामिनी ॥ १६ ॥
कुन्ता कामेश्वरी क्रूरा कुल्या कामान्तकारिणी ।
कुन्ती कुन्तधरा कुब्जा कष्टहा वगलामुखी ॥ १७ ॥
मृडानी मधुरा मूका प्रमत्ता बैन्दवेश्वरी ।
कुमारी कुलजाऽकामा कूवरी नडकूवरी ॥ १८ ॥
नगेश्वरी नगावासा नगपुत्री नगारिहा ।
नागकन्या कुहूः कुण्ठी[२] करुणा कृपयान्विता ॥ १९ ॥
ककारवर्णरूपाढ्या ह्रीर्लज्जा श्रीः शुभाशुभा ।
खेचरी खगपत्नी च खगनेत्रा खगेश्वरी ॥ २० ॥
खाता खनित्री खस्था च जप्या जाप्याऽजरा धुतिः[३] ।
जगती जन्मदा जम्भी जम्बुवृक्षतलस्थिता ॥ २१ ॥
जाम्बूनदप्रिया सत्या सात्त्विकी सत्त्ववर्जिता[४] ।
सर्वमाता समालोका लोकाख्यातिर्लयात्मिका ॥ २२ ॥
लूता लतारातिर्लज्जा वाजिगा ( २०० ) वारुणी वशा ।
कुटिला कुत्सिता ब्राह्मी ब्रह्माणी ब्रह्मदायिनी ॥ २३ ॥

---

चन्द्रनि' ग. पाठः । २ 'कण्ठा' ग. पाठः । '३ श्रुतिः' ग. पाठः । ४ 'संस्थिता' ख. पाठः ।

व्रतेष्टा वाजिनी वस्तिर्वामनेत्रा वशङ्करी ।
शङ्करी शङ्करेष्टा च शशाङ्ककृतशेखरा ॥ २४ ॥
कुम्भेश्वरी कुरुघ्नी च पाण्डवेष्टा परात्परा ।
महिषासुरसंहर्त्री माननीया मनुप्रिया ॥ २५ ॥
दक्षिणा दक्षजा दक्षा द्राक्षा दृती द्युतिर्धरा ।
धर्मदा धर्मराजेष्टा धर्मस्था धर्मपालिनी ॥ २६ ॥
धनदा धनिका धर्म्या पताका पार्वती प्रजा ।
प्रजावती पुरी प्रज्ञा पूः पुत्री पत्रिवाहिनी ॥ २७ ॥
पत्रिहस्ता च मातङ्गी पत्रिका च पतिव्रता ।
पुष्टिः स्रष्टा श्मशानस्था देवी धनदसेविता ॥ २८ ॥
दयावती दया दूरा दूता निकटवासिनी ।
नर्मदाऽनर्मदा नन्दा नाकिनी नाकसेविता ॥ २९ ॥
नासा सङ्क्रान्तिरीड्या च भैरवी च्छिन्नमस्तका ।
श्यामा श्यामाम्बरा पीता पीतवस्त्रा कलावती ॥ ३० ॥
कौतुकी कौतुकाचारा कुलधर्मप्रकाशिनी ।
शाम्भवी गारुडीविद्या गरुडासनसंस्थिता ॥ ३१ ॥
विनता वैनतेयेष्टा वैष्णवी विष्णुपूजिता ।
वार्तादा[1] वालुका वेत्री वेत्रहस्ता वराङ्गना ॥ ३२ ॥
विवेकलोचना विज्ञा विशाला विमला ध्वजा ।
विवेका प्रचुरा लुप्ता नौर्नारायणपूजिता[2] ॥ ३३ ॥
नारायणी ( ३०० ) च सुमुखी दुर्जया दुःखहारिणी ।
दौर्भाग्यहा दुराचारा दुष्टहन्त्री च द्वेषिणी ॥ ३४ ॥
वाङ्मयी भारती भाषा मषी लेखकपूजिता ।
लेखपत्री च लोलाक्षी लास्या हास्या प्रियङ्करी ॥ ३५ ॥

---

१ 'वान्तदा' ग. पाठः । २ 'सेविता' ग. पाठः ।

प्रेमदा प्रणयज्ञा च प्रमाणा प्रत्ययाङ्किता ।
वाराही कुब्जिका कारा कारावन्धनमोक्षदा ॥ ३६ ॥
उग्रा चोग्रतरोग्रेष्टा नृमान्या नरसिंहिका ।
नरनारायणस्तुत्या नरवाहनपूजिता ॥ ३७ ॥
नृमुण्डा नूपुराढ्या च नृमाता त्रिपुरेश्वरी ।
दिव्यायुधोग्रतारा च त्र्यक्षा त्रिपुरमालिनी ॥ ३८ ॥
त्रिनेत्रा कोटराक्षी च षट्चक्रस्था क्रिमीश्वरी ।
क्रिमिहा[1] क्रिमियोनिश्च कला चन्द्रकला चमूः ॥ ३९ ॥
चर्माम्बरा च चार्वङ्गी चञ्चलाक्षी च भद्रदा ।
भद्रकाली सुभद्रा च भद्राङ्गी प्रेतवाहिनी ॥ ४० ॥
सुषमा स्त्रीप्रिया कान्ता कामिनी कुटिलालका ।
कुशब्दा कुगतिर्मेधा मध्यमाङ्गा च काश्यपी ॥ ४१ ॥
दक्षिणाकालिका काली कालभैरवपूजिता ।
क्लींकारी[2] कुमतिर्वाणी बाणासुरनिसूदिनी ॥ ४२ ॥
निर्ममा निर्ममेष्टा च निरयोनिर्निराश्रया ।
निर्विकारा निरीहा च निलया नृपपुत्रिणी ॥ ४३ ॥
नृपसेव्या विरिञ्चीष्टा विशिष्टा विश्वमातृका ।
मातृकाऽर्णविलिप्ताङ्गी मधुस्नाता मधुद्रवा ॥ ४४ ॥
शुक्रेष्टा शुक्रसन्तुष्टा शुक्रस्नाता कृशोदरी ।
वृषा वृष्टिरनावृष्टिर्लभ्या लोभविवर्जिता ॥ ४५ ॥
अब्धिश्च (४००) ललना लक्ष्या लक्ष्मी रामा रमा रतिः ।
रेवा रम्भोर्वशी वश्या वासुकिप्रियकारिणी ॥ ४६ ॥
शेषा शेषरता श्रेष्ठा शेषशायिनमस्कृता ।
शय्या शर्वप्रिया शस्ता प्रशस्ता शम्भुसेविता ॥ ४७ ॥

---

१ 'क्रमिका' ग. पाठः । २ 'क्रीं' ख. पाठः ।

आशुशुक्षणिनेत्रा च क्षणदा क्षणसेविता ।
क्षुरिका कार्णिका सत्या सचराचररूपिणी ॥ ४८ ॥
चरित्री च धरित्री च दितिर्दैत्येन्द्रपूजिता ।
गुणिनी गुणरूपा च त्रिगुणा निर्गुणा घृणा ॥ ४९ ॥
घोषा गजाननेष्टा च गजाकारा गुणिप्रिया[1] ।
गीता गीतप्रिया तथ्या पथ्या त्रिपुरसुन्दरी ॥ ५० ॥
पीनस्तनी च रमणी रमणीष्टा च मैथुनी ।
पद्मा पद्मधरा वत्सा धेनुर्मेरुधरा मघा ॥ ५१ ॥
मालती मधुरालापा मातृजा मालिनी तथा ।
वैश्वानरप्रिया वैद्या चिकित्सा वैद्यपूजिता ॥ ५२ ॥
वेदिका वारपुत्री च वयस्या वाग्भवी प्रसूः ।
क्रीता पद्मासना सिद्धा सिद्धलक्ष्मीः सरस्वती ॥ ५३ ॥
सत्त्वश्रेष्ठा सत्त्वसंस्था सामान्या सामवायिका ।
साधकेष्टा च सत्पत्नी सत्पुत्री सत्कुलाश्रया ॥ ५४ ॥
समदा प्रमदा श्रान्ता[2] परलोकगतिः शिवा ।
घोररूपा घोररावा मुक्तकेशी च मुक्तिदा ॥ ५५ ॥
मोक्षदा बलदा पुष्टिर्मुक्तिर्बलिप्रियाऽभया ।
तिलप्रसूननासा च प्रसूना कुलशीर्षिणी ॥ ५६ ॥
परद्रोहकरी[3] ( ५०० ) पान्था पारावारसुता भगा ।
भगप्रिया भर्गशिखा हेला हैमवतीश्वरी ॥ ५७ ॥
हेरुकेष्टा वटुस्था च वटुमाता वटेश्वरी ।
नटिनी त्रोटिनी त्राता स्वसा सारवती सभा ॥ ५८ ॥
सौभाग्या भाग्यदा भाग्या भोगदा भूः प्रभावती ।
चन्द्रिका कालहर्त्री च ज्योत्स्नोल्काऽशनिराह्निका ॥ ५९ ॥

---

१ 'गजप्रिया' ग. पाठः । २ 'प्रान्ता' ख. पाठः । ३ 'पुर' ग. पाठः ।

ऐहिकी चौष्मिकी चोष्मा ग्रीष्मांशुद्युतिरूपिणी ।
ग्रीवा ग्रीष्मानना गर्व्या[1] कैलासाचलवासिनी ॥ ६० ॥
मल्ली मार्तण्डरूपा च मानहर्त्री मनोरमा ।
मानिनी मानकर्त्री च मानसी तापसी तुटिः ॥ ६१ ॥
पयःस्था तु परब्रह्मस्तुता स्तोत्रप्रिया तनुः ।
तन्वी तनुतरा सूक्ष्मा स्थूला शूरप्रियाऽधमा ॥ ६२ ॥
उत्तमा मणिभूषाढ्या मणिमण्डपसंस्थिता ।
माषा तीक्ष्णा त्रपा चिन्ता मण्डिका चर्चिका चला ॥ ६३ ॥
चण्डी चुल्ली चमत्कारकर्त्री हर्त्री हरीश्वरी ।
हरिसेव्या कपिश्रेष्ठा चर्चिता चारुरूपिणी ॥ ६४ ॥
चण्डीश्वरी चण्डरूपा मुण्डहस्ता मनोगतिः ।
पोता पूता पवित्रा च मज्जा मेध्या सुगन्धिनी ॥ ६५ ॥
सुगन्धा पुष्पिणी पुष्पा प्रेरिता पवनेश्वरी ।
प्रीता क्रोधाकुला न्यस्ता न्यक्कारा सुरवाहिनी ॥ ६६ ॥
स्रोतस्वती मधुमती देवमाता सुधाम्बरा ( ६०० ) ।
मत्स्या मत्स्येन्द्रपीठस्था वीरपाना मदातुरा ॥ ६७ ॥
पृथिवी तैजसी तृप्तिर्मूलाधारा प्रभा पृथुः ।
नागपाशधरानन्ता पाशहस्ता प्रबोधिनी ॥ ६८ ॥
प्रसादना कलिङ्गाख्या मदनाशा मधुद्रवा ।
मधुवीरा मदान्धा च पावनी वेदना स्मृतिः ॥ ६९ ॥
बोधिका बोधिनी पूषा काशी वाराणसी गया ।
कौशी चोज्जयिनी धारा काश्मीरी कुङ्कुमाकुला ॥ ७० ॥
भूमिः सिन्धुः प्रभासा च गङ्गा गौरी शुभाश्रया ।
नानाविद्यामयी वेत्रवती गोदावरी गदा ॥ ७१ ॥

---

१ 'नागकन्या' ग. पाठः ।

गदहन्त्री गजारूढा इन्द्राणी कुलकौलिनी ।
कुलाचारा कुरूपा च सुरूपा रूपवर्जिता ॥ ७२ ॥
चन्द्रभागा च यमुना यामी यमक्षयङ्करी
काम्भोजी सरयूश्चित्रा वितस्तैरावती झषा ॥ ७३ ॥
चषिका पथिका तन्त्री वीणा वेणुः प्रियंवदा ।
कुण्डलिनी निर्विकल्पा[1] गायत्री नरकान्तका ॥ ७४ ॥
कृष्णा[2] सरस्वती तापी[4] पयोष्णी शतरुद्रिका ।
कावेरी शतपत्राभा शतबाहुः शतद्रुदा ॥ ७५ ॥
रेवती रोहिणी क्षिप्या क्षीणा क्षोणी क्षमा क्षया ।
क्षान्तिर्भ्रान्तिर्गुरुर्गुर्वी गरिष्ठा गोकुला नदी ॥ ७६ ॥
नादिनी कृषिणी कृष्या सत्कुटी भूमिका (७००) भ्रमा ।
विभ्राजमाना तीर्थ्या[3] च तीर्था तीर्थफलप्रदा ॥ ७७ ॥
तरुणी तामसी पाशा विपाशा पाशधारिणी ।
पशूपहारसन्तुष्टा कुक्कुटी हंसवाहना ॥ ७८ ॥
मधुरा विपुलाऽकाङ्क्षा वेदकाण्डी विचित्रिणी ।
स्वप्नावती सरित् सीताधारिणी मत्सरी च मुत् ॥ ७९ ॥
शतद्रूर्भारती कद्रूरनन्तानन्तशाखिनी ।
वेदना वासवी वेश्या पूतना पुष्पहासिनी ॥ ८० ॥
त्रिशक्तिः शक्तिरूपा चाक्षरमाता क्षुरी क्षुधा ।
मन्दा मन्दाकिनी मुद्रा भूता भूतपतिप्रिया ॥ ८१ ॥
भूतेष्टा पञ्चभूतघ्नी स्वच्छा कोमलहासिनी ।
वासिनी कुहिका लम्भा लम्बकेशी सुकेशिनी ॥ ८२ ॥
ऊर्ध्वकेशी विशालाक्षी घोरा पुण्यपतिप्रिया[5] ।

---

१ 'निर्विकारा' ग. पाठः । २ 'तृष्णा' ख. पाठः । ३ 'धारा' ख. पाठः ।
४ 'तापसी' ख. पाठः । ५ 'पतिव्रता' ग. पाठः ।

पांसुला पात्रहस्ता च खर्परी खर्परायुधा ॥ ८३ ॥
केकरी काकिनी कुम्भी सुफला केकराकृतिः ।
विफला विजया श्रीदा श्रीदसेव्या शुभङ्करी ॥ ८४ ॥
शैत्या शीतालया शीधुपात्रहस्ता कृपावती ।
कारुण्या विश्वसारा च करुणा कृपणा कृपा ॥ ८५ ॥
प्रज्ञा ज्ञाना च षड्वर्गा षडास्या षण्मुखप्रिया ।
क्रौञ्ची क्रौञ्चाद्रिनिलया[1] दान्ता दारिद्र्यनाशिनी[2] ॥ ८६ ॥
शाला चाभासुरा साध्या साधनीया च सामगा ।
सप्तस्वरा सप्तधरा सप्तसप्तिविलोचना ॥ ८७ ॥
स्थितिः क्षेमङ्करी स्वाहा वाचाली (८००) विविधाम्बरा ।
कलकण्ठी घोषधरा सुग्रीवा कन्धरा रुचिः ॥ ८८ ॥
शुचिस्मिता समुद्रेष्टा शशिनी वशिनी सुदृक् ।
सर्वज्ञा सर्वदा शारी सुनासा सुर[3]कन्यका ॥ ८९ ॥
सेना सेनासुता भृङ्गी भृङ्गिणी हाटकेश्वरी ।
होटिका हारिणी लिङ्गा भगलिङ्गस्वरूपिणी ॥ ९० ॥
भगमाता च लिङ्गाख्या लिङ्गप्रीतिः[4] कलिङ्गजा ।
कुमारी युवती प्रौढा नवोढा प्रौढरूपिणी ॥ ९१ ॥
रम्या रजोवती रज्जू रजोली राजसी घटी ।
कैवर्ती राक्षसी रात्री रात्रिश्चरक्षयङ्करी ॥ ९२ ॥
महोग्रा मुदिता भिल्ली भल्लहस्ता भयङ्करी ।
तिलाभा दारिका द्वाःस्था द्वारिका मध्यदेशगा ॥ ९३ ॥
चित्रलेखा वसुमती सुन्दराङ्गी वसुन्धरा ।
देवता पर्वतस्था च परभूः परमाकृतिः ॥ ९४ ॥

---

१ 'दलनी' ख. पाठः । २ 'हारिणी' ग. पाठः । ३ 'मुनि' ग. पाठः ।
४ 'प्रीता' ग. पाठः ।

परमूर्तिर्मुण्डमाला नागयज्ञोपवीतिनी ।
श्मशानकालिका श्मश्रुः प्रलयात्मा प्रलोपिनी ॥ ९५ ॥
प्रस्थस्था प्रस्थिनी प्रस्था धूम्रार्चिर्धूम्ररूपिणी ।
धूम्राङ्गी धूम्रकेशा च कपिला कालनाशिनी ॥ ९६ ॥
कङ्काली कालरूपा च कालमाता मलिम्लुची ।
शर्वाणी रुद्रपत्नी च रौद्री रुद्रस्वरूपिणी ॥ ९७ ॥
सन्ध्या त्रिसन्ध्या संपूज्या सर्वैश्वर्यप्रदायिनी ।
कुलजा सत्यलोकेशा सत्यवाक् सत्यवादिनी ॥ ९८ ॥
सत्यस्वरा सत्यमयी हरिद्वारा हरिन्मयी ।
हरिद्रत्नमयी राशि ( ९०० ) ग्रहताराततिथितनुः ॥ ९९ ॥
तुम्बुरुस्त्रुटिका त्रोटी भुवनेशी भयापहा ।
राज्ञी राज्यप्रदा योग्या योगिनी भुवनेश्वरी ॥ १०० ॥
तुरी तारा महालक्ष्मीर्भीडा भार्गी भयानका ।
कालरात्रिर्महारात्रिर्महाविद्या शिवालया ॥ १०१ ॥
शिवासङ्गा शिवस्था च समाधिरग्निवाहना ।
अग्नीश्वरी महाव्याप्तिर्बलाका बालरूपिणी ॥ १०२ ॥
वटुकेशी विलासा च सदसत्पुरभैरवी ।
विघ्नहा खलहा गाथा कथा कन्था शुभाम्बरा ॥ १०३ ॥
क्रतुहा क्रतुजा क्रान्ता माधवी चामरावती ।
अरुणाक्षी विशालाक्षी पुण्यशीला विलासिनी ॥ १०४ ॥
सुमाता स्कन्दमाता च कृत्तिका भरणी बलिः ।
जिनेश्वरी सुकुशला गोपी गोपतिपूजिता ॥ १०५ ॥
गुप्ता गोप्यतरा ख्याता प्रकटा गोपितात्मिका ।
कुलाम्नायवती कीला पूर्णा स्वर्णाङ्गदोत्सुका ॥ १०६ ॥

---

१ 'कलि' ख. पाठः । २ 'सप्त' ग. पाठः । ३ सामचतुष्टम् । ४ 'सदावाप्ति' ग. पाठः ।

उत्कण्ठा कलकण्ठी च रक्तपा पानपाऽमला ।
संपूर्णचन्द्रवदना यशोदा च यशस्विनी ॥ १०७ ॥
आनन्दा सुन्दरी सर्वानन्दा नन्दात्मजा लया ।
विद्युत् खद्योतरूपा च सादरा जविका जविः ॥ १०८ ॥
जननी जनहर्त्री च खर्परा खञ्जनेक्षणा ।
जीर्णा जीमूतलक्ष्या च जटिनी जयवर्धिनी ॥ १०९ ॥
जलस्था च जयन्ती च जम्भारिवरदा तथा ।
सहस्रनामसंपूर्णा देवी ज्वालामुखी स्मृता (१०००) ॥ ११० ॥
इति नाम्नां सहस्रं तु ज्वालामुख्याः शिवोदितम् ।
चतुर्वर्गप्रदं नित्यं बीजत्रयप्रकाशितम् ॥ १११ ॥
मोक्षैकहेतुमतुलं भुक्तिमुक्तिप्रदं नृणाम् ।
स्तुत्यं च साधनीयं च सर्वस्वं सारमुत्तमम् ॥ ११२ ॥
महामन्त्रमयं विद्यामयं विद्याप्रदं परम् ।
परब्रह्मस्वरूपं च साक्षादमृतरूपणम् ॥ ११३ ॥
अद्वैतरूपणं नाम्नां सहस्रं भैरवोदितम् ।
यः पठेत् पाठयेद्वापि शृणोति श्रावयेदपि ॥ ११४ ॥
भक्त्या युतो महादेवि स भवेद्भैरवोपमः ।
शिवरात्र्यां च संक्रान्तौ ग्रहणे जन्मवासरे ॥ ११५ ॥
भैरवस्य बलिं दत्त्वा मूलमन्त्रेण मान्त्रिकः ।
पठेन्नामसहस्रं च ज्वालामुख्याः सुदुर्लभम् ॥ ११६ ॥
अनन्तफलदं गोप्यं त्रिसन्ध्यं यः पठेत् सुधीः ।
अणिमादिविभूतीनामीश्वरो धार्मिको भवेत् ॥ ११७ ॥
अर्धरात्रे समुत्थाय शून्यगेहे पठेदिदम् ।
नाम्नां सहस्रकं दिव्यं त्रिवारं साधकोत्तमः ॥ ११८ ॥

---

'नृणाम्' ग. पाठः। २ 'कुक्कुटस्य' ख. पाठः।

कर्मणा मनसा वाचा ज्वालामुख्याः सुतो भवेत् ।
मध्याह्ने प्रत्यहं गत्वा प्रेतभूमिं विधानवित् ॥ ११९ ॥
नरमांसबलिं दत्त्वा पठेत् सहस्रनामकम् ।
दिव्यदेहधरो भूत्वा विचरेद्भुवनत्रयम् ॥ १२० ॥
शनिवारे कुजेऽष्टम्यां पठेन्नामसहस्रकम् ।
दत्त्वा क्षीरबलिं तस्यै करस्थाः सर्वसिद्धयः ॥ १२१ ॥
विना नैवेद्यमात्रेण न रक्ष्यं साधकोत्तमैः ।
कुजवारे सदा देवि दत्त्वासवबलिं नरः ॥ १२२ ॥
पठेत् साधक एवाशु लभेद् दर्शनमुत्तमम् ।
शनिवारे सदा विद्यां जप्त्वा दत्त्वा बलिं प्रिये ॥ १२३ ॥
कपोतस्य महेशानि पठेन्नामसहस्रकम् ।
तद्गृहे वर्धते लक्ष्मीर्गोकर्णमिव नित्यशः ॥ १२४ ॥
शतावर्तं चरेद्रात्रौ साधको दर्शनं लभेत् ।
वन्ध्या वा काकवन्ध्या वा कुङ्कुमेन लिखेदिदम् ॥ १२५ ॥
स्वस्तन्येन च शुक्रेण भूर्जे नामसहस्रकम् ।
गले वा वामबाहौ वा धारयेत् प्रत्यहं प्रिये ॥ १२६ ॥
वन्ध्यापि लभते पुत्रान्शूरान् विद्याधरोपमान् ।
इदं धृत्वा सव्यबाहौ गत्वा रणधरां प्रति ॥ १२७ ॥
निर्जित्य शत्रुसङ्घातान् सुखी[1] याति स्वकं गृहम् ।
वारत्रयं पठेन्नित्यं शत्रुनाशाय पार्वति ॥ १२८ ॥
वारद्वयं पठेल्लक्ष्म्यै मुक्त्यै तु शतधा पठेत् ।
वश्यार्थे दशधा नित्यं मारणार्थे च विंशतिम्[2] ॥ १२९ ॥
स्तम्भनार्थे पठेन्नित्यं सप्तधा मान्त्रिकोत्तमः ।
भूम्यर्थे त्रिंशतिं देवि पठेन्नामसहस्रकम् ॥ १३० ॥

---

१ 'प्रत्यायाति सुखी गृहम्' ख. पाठः । २ 'विंशधा' ख. पाठः ।

प्रत्यहमेकवारं तु मृतो मोक्षमवाप्नुयात् ।
अप्रकाश्यमदातव्यमवक्तव्यमभक्तिषु ॥ १३१ ॥
अशाक्तायाकुलीनाय कुपुत्राय दुरात्मने ।
गुरुभक्तिविहीनाय दीक्षाहीनाय पार्वति ॥ १३२ ॥
दत्त्वा कुष्ठी भवेल्लोके परत्र नरकं व्रजेत् ।
श्रद्धायुक्ताय भक्ताय साधकाय महात्मने ।
साचाराय सुशीलाय दत्त्वा मोक्षमवाप्नुयात् ॥ १३३ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीज्वालामुखीसहस्रनामस्तोत्रम् ॥ ४ ॥

अथ

# श्रीज्वालामुखीस्तोत्रम् ।

श्रीभैरव उवाच ।

तारं यो भजते मातर्बीजं तव सुधाकरम् ।
पारावारसुता नित्यं निश्चला तद्गृहे वसेत् ॥ १ ॥
शून्यं यो दहनाधिरूढममलं वामाक्षिसंसेवितं
सेन्दुं बिन्दुयुतं भवानि वरदे स्वान्ते स्मरेत् साधकः ।
मूकस्यापि सुरेन्द्रसिन्धुजलवद्वाग्देवता भारती
सद्यः पद्यपयीं निरर्गलतरा मातर्मुखे तिष्ठति ॥ २ ॥

शुभ्रं वह्न्यारूढं मतियुतमनल्पेष्टफलदं
सबिन्द्वीन्दुं मन्दो यदि जपति बीजं तव प्रियम्[1] ।
तदा मातः स्वःस्त्रीजनविहरणक्लेशसहितः
सुखमिन्द्रोद्याने स्वपिति स भवत्पूजनरतः ॥ ३ ॥
ज्वालामुखीति जपते तव नामवर्णान्
यः साधको गिरिशपत्नि सुभक्तिपूर्वम् ।
तस्याङ्घ्रिपद्मयुगलं सुरनाथवेश्याः
सीमन्तरत्नकिरणैरनुरञ्जयन्ति ॥ ४ ॥
पाशाम्बुजाभयधरे मम सर्वशत्रून्
शब्दं त्विति स्मरति यस्तव मन्त्रमध्ये ।
तस्याद्रिपुत्रि चरणौ बहुपांसुयुक्तौ
प्रक्षालयन्त्यरिवधूनयनाश्रुपाताः ॥ ५ ॥
मन्त्रयद्वयमिदं यदि भक्त्या साधको जपति चेतसि मातः ।
स स्मराररिव त्वत्प्रसादतस्त्वत्पदं च लभते दिवानिशम् ॥ ६ ॥
कूर्चबीजमनघं यदि ध्यायेत् साधकस्तव महेश्वरि योऽन्तः ।
अष्ट हस्तकमलेषु सुवश्यास्तस्य त्र्यम्बकसमस्तसिद्धयः ॥ ७ ॥
ठद्वयं तव मनूत्तरस्थितं यो जपेत्तु परमप्रभावदम् ।
तस्य देवि हरिशङ्करादयः पूजयन्ति चरणौ दिवौकसः ॥ ८ ॥
ओंह्रींश्रीं त्र्यक्षरे देवि सुरासुरनिषूदिनि ।
त्रैलोक्याभयदे मातर्ज्वालामुखि नमोऽस्तु ते ॥ ९ ॥
उदितार्कद्युते[2] लक्ष्मि लक्ष्मीनाथसमर्चिते ।
वराम्बुजाभयधरे ज्वालामुखि नमोऽस्तु ते ॥ १० ॥
सर्वसारमयि शर्वे[3] सर्वामरनमस्कृते ।
सत्ये सति सदाचारे ज्वालामुखि नमोऽस्तु ते ॥ ११ ॥

---

१ 'प्रिये' ख. पाठः । २ 'दिने' ख. पाठः । ३ 'सर्वे' ख. पाठः ।

यस्या मूर्ध्नि शशी विलोचनगता यस्या रवीन्द्वग्नयः
पाशाम्भोजवराभयाः करतलाम्भोजेषु सद्धेतयः।
गात्रे कुङ्कुमसन्निभा द्युतिरहिर्यस्यागले सन्ततं
देवीं कोटिसहस्ररश्मिसदृशीं ज्वालामुखीं नौम्यहम् ॥ १२ ॥

निद्रां नो भजते विधिर्भगवति शङ्का शिवं नो त्यजेद्
विष्णुर्व्याकुलतामलं कमलिनीकान्तोऽपि धत्ते भयम्।
दृष्ट्वा देवि त्वदीयकोपदहनज्वालां ज्वलन्तीं तदा
देवः कुङ्कुमपीतगण्डयुगलः संक्रन्दनः क्रन्दति ॥ १३ ॥

यामाराध्य दिवानिशं सुरसरित्तीरे स्तवैरात्मभू-
रुद्यद्भास्वरघर्मभानुसदृशीं प्राप्तोऽमरज्येष्ठताम्।
दारिद्र्योरगदष्टलोकत्रितयीसंजीविनीं मातरं
देवीं तां हृदये शशाङ्कशकलाचूडावतंसां भजे ॥ १४ ॥

आपीनस्तनश्रोणिभारनमितां कन्दर्पदर्पोज्ज्वलां
लावण्याङ्कितरम्यगण्डयुगलां यस्त्वां स्मरेत् साधकः।
वश्यास्तस्य धराभृदीश्वरसुते गीर्वाणवामभ्रुवः
पादाम्भोजतलं भजन्ति त्रिदशा गन्धर्वसिद्धादयः ॥ १५ ॥

हृत्वा देवि शिरो विधेर्यदकरोत् पात्रं कराम्भोरुहे
शूलप्रोतममुं हरिं व्यगमयत् सङ्कर्षणं स्कन्धयोः।
कालान्ते त्रितयं मुखेन्दुकुहरे शम्भोः शिरः पर्वति
तन्मातर्भुवने विचित्रमखिलं जाने भवत्याः शिवे ॥ १६ ॥

गायत्री प्रकृतिर्गलेऽपि विधृता सा त्वं शिवे वेधसा
श्रीरूपा हरिणापि वक्षसि धृताप्यर्धाङ्गभागे तथा।
शर्वेणापि भवानि देवि सकलाः ख्यातुं न शक्ता वयं
त्वद्रूपं हृदि मादृशां जडधियां ध्यातुं कथैवास्ति का ॥ १७ ॥

---

१ 'त्रिलोचन' ख. पाठः। २ 'पार्वति' क. ख. पाठः।

ज्वालामुखीस्तवमिमं पठते यदन्तः
श्रीमन्त्रराजसहितं विभवैकहेतुम् ।
इष्टप्रदानसमये भुवि कल्पवृक्षं
स्वर्गं व्रजेत् सुरवधूजनसेवितः सः ॥ १८ ॥

इति श्रीपरमाज्वालातत्त्वं पञ्चाङ्गमीरितम् ।
परारहस्यकं श्यामासर्वस्वं कुलसुन्दरि ॥ १९ ॥

गोप्यं गुह्यतमं सारं शिवदं पुण्यवर्धनम् ।
कोटियज्ञफलप्राज्यं कुलाचारैककारणम् ॥ २० ॥

स्तुत्यं रोगापहं दिव्यं सर्वैश्वर्यप्रदायकम् ।
सर्वस्वभूतं देवेशि रहस्यं मम पार्वति ॥ २१ ॥

परशिष्याय नो देयं दत्त्वा हानिर्भवेन्मनोः ।
गुरुपूजां विधायादौ गुरुं सन्तोष्य यत्नतः ॥ २२ ॥

गृह्णीयात् परमेशानि ज्वालामुख्या यथाविधि ।
पञ्चाङ्गमखिलं दिव्यं रहस्यं पारदैवतम् ॥ २३ ॥

सर्वसिद्धिर्भवेदाशु देवानामपि दुर्लभा ।

श्रीदेव्युवाच ।

क्रीतास्मि भवतानेन स्तोत्रेणापि महेश्वर ।
सर्वथा तव दास्यस्मि पञ्चाङ्गश्रवणेन हि ॥ २४ ॥

श्रीभैरव उवाच ।

इदं रहस्यं परमं तव भक्त्या मयोदितम् ।
पञ्चाङ्गमखिलं देव्या गोपनीयं मुमुक्षुभिः ॥ २५ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीज्वालामुखीस्तोत्रम् ॥ ५ ॥

समाप्तं श्रीज्वालामुखीपञ्चाङ्गम् ॥

अथ

## श्रीशारिकापञ्चाङ्गम् ॥

श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि पटलं देवदुर्लभम् ।
सर्वसिद्धिकरं दिव्यं सर्वैश्वर्यप्रदायकम् ॥ १ ॥
या देवदेवी वरदा शारिका त्रिपुरेश्वरी ।
त्रैलोक्यजननी दुर्गा विद्या सप्ताक्षरी परा ॥ २ ॥
सप्तविद्येश्वरी सैव सप्तलोकान्तराश्रया ।
सप्तद्वीपमयी पृथ्वी शून्यरूपा कुलेश्वरी ॥ ३ ॥
या देवी चेतना लोके शिलारूपास्ति शारिका ।
सर्वेप्सितप्रदा नित्यं प्रद्युम्नपीठमाश्रिता ॥ ४ ॥
वक्ष्यामि पटलं तस्या मन्त्रोद्धारप्रकाशकम् ।
यन्त्रोद्धारं लयाङ्गाढ्यं यथावद्वर्णयामि ते ॥ ५ ॥
मन्त्रोद्धारं महद्गोप्यं सर्वसिद्धिप्रदं कलौ ।
मन्त्रं हितार्थं लोकानां तत्रादौ शृणु पार्वति ॥ ६ ॥

तारं परामातटसिन्धुरार्णाः
खं शर्म तन्मध्यगतं च नाम ।
अन्तेऽश्मरी पार्वति शारिकाया-
स्त्रयोदशार्णो मनुरस्ति गोप्यः ॥ ७ ॥

मन्त्रस्यास्य महादेवि न विघ्नो नापि दूषणम् ।
न विपर्ययभीर्लोके सिद्धसाध्यारिसंशयः ॥ ८ ॥
पुरश्चर्याफलं नापि न कायक्लेशसंग्रहः ।
साक्षात् सिद्धिप्रदो मन्त्रः सर्वविघ्नापहारकः ॥ ९ ॥

ब्रह्महत्या-सुरापान-महापातकजं मलम् ।
प्रक्षालयंति मन्त्रोऽयमभक्ष्यभक्षणं द्रुतम् ॥ १० ॥
मन्त्रमुत्कीलयेदादौ मन्त्रं[1] सञ्जीवयेत्ततः ।
सिद्धं मन्त्रं जपेन्मध्ये दद्यादन्ते च संपुटम् ॥ ११ ॥
ततः सिद्धमनुः सिद्धो नासाध्यो भवति ध्रुवम् ।
अस्य मन्त्रस्य देवेशि प्रसादाद्भैरवोऽस्म्यहम् ॥ १२ ॥
विष्णुर्नारायणो देवि ब्रह्मा लोकपितामहः ।
न देयः परशिष्याय भक्तिहीनाय पार्वति ॥ १३ ॥
अन्यथा सिद्धिहानिः स्यादुभयोः शिवशापतः ।
मन्त्रस्यास्य ऋषिः प्रोक्तो महादेवो महेश्वरि ॥ १४ ॥
त्रिष्टुप् छन्दः समाख्यातं शारिका देवता स्मृता ।
शर्म बीजं रमा शक्तिः सिन्धुरं कीलकं स्मृतम् ॥ १५ ॥
धर्मार्थकाममोक्षार्थे विनियोग इतीरितः ।
तारपरारमाबीजैः षड्दीर्घोच्चाररूपकैः ॥ १६ ॥
न्यासं कुर्यात् षडङ्गादि येन देवीमयो भवेत् ।
ध्यानमस्याः प्रवक्ष्यामि जगच्चैतन्यकारणम् ।
येन ध्यातेन देवेशि परानन्दः प्रजायते ॥ १७ ॥

बालार्ककोटिद्युतिमिन्दुचूडां
वरासिचक्राभयबाहुमाद्याम् ।
सिंहाधिरूढां शिववामदेह-
लीनां भजे चेतसि शारिकेशीम् ॥ १८ ॥

यन्त्रोद्धारं प्रवक्ष्यामि साधकानां शुभावहम् ।
सर्वार्थसाधकं दिव्यं सर्वाशापरिपूरकम् ॥ १९ ॥

---

१ 'मूलं 'ग. पाठः ।

खत्रिकोण–वसुकोणसुवृत्तोद्-
द्योतनागदलवृत्त(सत्रि)मण्डलम् ।
भूगृहं शिखिरवीन्दुभाश्रितं
यन्त्रमेतदुदितं शिवाऽऽलयम् ॥ २० ॥
शारिकाया महायन्त्रं त्रैलोक्योद्धारकारकम् ।
न देयं परशिष्येभ्यो दत्त्वा तु ब्रह्महा भवेत् ॥ २१ ॥
लयाङ्गमस्य वक्ष्यामि ब्रह्मविष्णुसमर्चितम् ।
यन्त्रराजस्य देवेशि चतुर्वर्गप्रदायकम् ॥ २२ ॥
गणेशधर्मवरुणाः कुबेरसहिताः शिवे ।
पूज्या दूर्वाक्षतैः पुष्पैश्चतुर्द्वारेषु साधकैः ॥ २३ ॥
इन्द्राद्याश्चैव दिक्पालास्तथेशानक्रमेण च ।
ब्राह्मी च वैष्णवी देवी चण्डिकाप्यपराजिता ॥ २४ ॥
कौमारी शाम्भवी चैव वाराही नारसिंहिका ।
पूज्या वामक्रमेणैता मातृचक्रस्थमातरः ॥ २५ ॥
तत्रैव गुरवोऽभ्यर्च्यास्त्रिषु वृत्तेषु साधकैः ।
गुरुं च परमं देवि परापरगुरुं तथा ॥ २६ ॥
परमेष्ठिगुरुं देवि नुत्वा पूज्याश्च भैरवाः ।
संहारो भीषणो देवि कपाल्युन्मत्तभैरवौ ॥ २७ ॥
क्रोधश्चण्डो रुरुश्चैवमसिताङ्गो महेश्वरि ।
इत्येतान् भैरवान् देवि वसुपत्रेषु पूजयेत् ॥ २८ ॥
ब्राह्म्याद्या मातरो यत्र तत्र संपूजयेत् सदा ।
भैरवान् दक्षिणावृत्त्या मातृचक्रं तु वामतः ॥ २९ ॥
अमा कामा च चार्वङ्गी देवी च टङ्कधारिणी ।
तारा च पार्वती देवि संपूज्या यक्षिणी शिवा ॥ ३० ॥

१ "शिला" ग. पाठः ।

वामावर्तक्रमेणैव वसुकोणगताः शिवे ।
कालिका त्रिपुरा दुर्गा पूज्या मध्यत्रिकोणगाः ॥ ३१ ॥
ईशानक्रमयोगेन यथाभीष्टफलप्रदाः ।
मध्ये श्रीशारिकादेवीं वामदेवाङ्कमध्यगाम् ॥ ३२ ॥
मकारैः पञ्चभिः कौलः कौलाचारपरायणः ।
संपूजयेन्महादेवि साधको मन्त्रसाधकः ॥ ३३ ॥
वरं चक्रं च खड्गं च पूजयेदभयं तथा ।
बिन्दौ पुष्पाक्षतैश्चैव धूपदीपादितर्पणैः ॥ ३४ ॥
नैवेद्याचमनीयाद्यैस्ताम्बूलैश्च सुवासितैः ।
लयाङ्गमिदमाख्यातं प्रयोगाञ्छृणु पार्वति ॥ ३५ ॥
स्तम्भनं मोहनं चैव मारणाकर्षणे तथा ।
वशीकारं तथोच्चाटं शान्तिकं पौष्टिकं तथा ॥ ३६ ॥
एतेषां साधनं वक्ष्ये रहस्यं परमाद्भुतम् ।
येन साधनमात्रेण साधको भैरवो भवेत् ॥ ३७ ॥
(१) रवौ स्नात्वा शिवे कूपे कृत्वा कर्माह्निकं तथा ।
अर्धरात्रे निराहारो जपेन्मूलं चतुष्पथे ॥ ३८ ॥
अयुतं नियमेनैव दशांशं होममाचरेत् ।
घृतरास्नाशटीक्षौद्र-कृकलासादिभिः शिवे ॥ ३९ ॥
ब्रह्मा हरिः शिवो जिष्णुः स्तम्भवान् भवति ध्रुवम् ।
(२) चन्द्रे मध्याह्नसमये वेतसीमूलमण्डले ॥ ४० ॥
त्रिकोणं मण्डलं कृत्वा श्रीचक्रं पूजयेत्ततः ।
अयुतं प्रजपेन्मूलं नियमेन सुरेश्वरि ॥ ४१ ॥
हुनेदाज्यपयोमत्स्य-कर्पूरासवतज्जटाः ।
शीतोद्धृतेन देवेशि भस्मना तिलकं चरेत् ॥ ४२ ॥
तस्य दर्शनमात्रेण त्रैलोक्यं मोहमेष्यति ।

(३) भौमे निशामुखे गत्वा श्मशानमयुतं जपेत् ॥ ४३ ॥
चितायां तत्र दीप्ताग्नौ हुनेदाज्यं सगोमयम् ।
शमीमूले नरास्थीनि शत्रुनाम्ना निखातयेत् ॥ ४४ ॥
अपि देवसमो वापि शत्रुर्मृत्युमुखं व्रजेत् ।

(४) बुधे गत्वा वनं देवि वटाश्वत्थतले जपेत् ॥ ४५ ॥
अयुतं मूलमेकाकी हुनेत् पुष्पचयं सितम् ।
साज्यं सासवरक्तं च पुष्पाणि च महेश्वरि ॥ ४६ ॥
मेनका पीनवक्षोजा प्रातः प्रादुर्भविष्यति ।

(५) गुरौ गत्वा शवासीनो जपेन्मूलं चतुष्पथे ॥ ४७ ॥
अयुतं वायुतार्धं वा हुनेत् पायसमासवम् ।
स्वयं चासवलोलाक्षः साज्यं ताम्बूलमिश्रितम् ॥ ४८ ॥
इन्द्राग्नियममांसाद-वरुणानिलवित्तदाः ।
सेश्वराः सहसा तस्य वशमेष्यन्त्यसंशयम् ॥ ४९ ॥

(६) शुक्रेऽर्धरात्रे विष्ट्यां वा गत्वा प्रेतालयं परम् ।
एकाकी प्रजपेत्तत्र कृत्वा पानाञ्जनं शिवे ॥ ५० ॥
अयुतं तु चितावह्नौ हुनेदाज्यं सकाञ्जिकम् ।
चिताङ्गारचये देवि रिपोरुच्चाटनं भवेत् ॥ ५१ ॥

(७) शनौ मध्याह्नसमये स्नात्वा कृत्वाह्निकीं क्रियाम् ।
गत्वा देवालयं देवि देवीं ध्यात्वा यथाविधि ॥ ५२ ॥
तदग्रे पूजयेद्यन्त्रं जपेन्मूलमथायुतम् ।
तत्र त्रिकोणकुण्डे तु हुनेदाज्यं समैरवम् ॥ ५३ ॥
रुरुमासं कुलेशानि कुक्कुटस्य शिरस्तथा ।
सद्यः सर्वभयानां च शान्तिर्भवति पार्वति ॥ ५४ ॥

(८) अष्टम्यां च चतुर्दश्यां गत्वा प्रेतालयं शिवे ।
जपेदयुतमर्धं वा हुनेत् पायसशर्कराम् ॥ ५५ ॥

मृद्वीकां त्रींश्च मद्यादीन्महापुष्टिः प्रजायते ।
इत्येष विधिराख्यातः सर्वतन्त्रेषु गोपितः ॥ ५६ ॥
नाख्येयो नच देष्टव्यो योगिनीचक्रपूजकैः ।
इत्येष पटलो गुह्यः सकलागमसारवान् ।
रहस्यभूतोऽयं देवि गोपनीयो मुमुक्षुभिः ॥ ५७ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीशारिकादेवीपटलः ॥ १ ॥

अथ

# श्रीशारिकापूजापद्धतिः ।

श्रीभैरव उवाच ।
अधुना पद्धतिं वक्ष्ये शारिकार्चनसंयुताम् ।
गद्यपद्यमयीं गोप्यां सकलागमनिश्चिताम् ॥ १ ॥
प्रातः कृत्यमकृत्वा तु यो देवीं च समर्चयेत् ।
तस्य पूजा तु विफला शौचहीना यथा क्रिया ॥ २ ॥

तत्रादौ ब्राह्म्ये मुहूर्ते प्रातःकृत्यं विधाय नद्यां स्नानसन्ध्यादि कर्म कृत्वा, गृहमागत्य पूजामण्डपद्वारदेवताः पूजयेत् । यथा—ॐह्रीं द्वारश्रियै नमः ऊर्ध्वे, गं गणपतये नमः दक्षे, क्षां क्षेत्रपालाय नमः वामे, वां वास्तुपुरुषाय नमः देहल्यां, इत्यभ्यर्च्य वामपादपुरःसरमन्तः प्रवि-

श्य, स्वासने उपविश्य, अस्य श्री आसनशोधनमन्त्रस्य मेरुपृष्ठ ऋषिः सुतलं छन्दः कूर्मो देवता आसनशोधने विनियोगः । "पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता । त्वं च धारय मां देवि पवित्रं कुरु चासनम् ॥ "ओं ह्रीं आधारशक्तिकमलासनाय नमः" इत्यासनं संपूज्य, "अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ पाषण्डकारिणो भूता भूता भूम्यन्तरिक्षगाः । अपसर्पन्तु ते सर्वे ते नश्यन्तु शिवाज्ञया ॥ भूताः प्रेताः पिशाचाश्च राक्षसाश्च सरीसृपाः । अपसर्पन्तु ते सर्वे देव्या अस्त्रेण ताडिताः ॥" इति तालत्रयेण तर्जनीमध्यमाभ्यामूर्ध्वोर्ध्वं तालत्रयदानेन वामपार्ष्णिघातत्रयेण च दिव्यदृष्ट्या च त्रिविधविघ्नानुत्सार्य, दशभिश्छोटिकाभिर्दशदिग्बन्धनं कृत्वा चतुर्दिक्षु वह्निप्राकारं सञ्चिन्त्य, प्राणायामत्रयं कुर्यात् । १६ पूरकम् ६४ कुम्भकम् ३२ रेचकम् इत्येकः, विपर्ययेण द्वितीयः, प्रथमवत् तृतीयः, । इति प्राणायामत्रयेण निरस्तसकलकिल्बिषं स्वदेहं देवताराधनयोग्यं विभाव्य न्यासं कुर्यात् । अस्य श्रीशारिकाभगवतीमन्त्रस्य, महादेव ऋषिः, त्रिष्टुप् छन्दः, श्रीशारिकादेवी देवता, शां बीजं श्रीं शक्तिः फ्रां कीलकं धर्मार्थकाममोक्षार्थे पूजने विनियोगः, इति कृताञ्जलिर्वदेत् । महादेवऋषये नमः शिरसि, त्रिष्टुप्छन्दसे नमो मुखे, श्रीशारिकादेवतायै नमो हृदि, शां बीजाय नमो गुह्ये, श्रीं शक्तये नमः पादयो, फ्रां कीलकाय नमो नाभौ, पूजने विनियोगाय नमः सर्वाङ्गेषु । इति ऋष्यादिन्यासः । ओंह्रांश्रां अङ्गुष्ठाभ्यां नमः, ओं ह्रींश्रीं तर्जनीभ्यां नमः, ओंहूंश्रूं मध्यमाभ्यां नमः, ओं ह्रैंश्रैं अनामिकाभ्यां नमः, ओंह्रौंश्रौं कनिष्ठाभ्यां नमः, ओंह्रःश्रः करतलपृष्ठाभ्यां नमः, । इति करन्यासः । वं षडङ्गेष्वपि न्यसेत् । इति न्यासैर्देहं सन्नह्य,

"मूलाधारे मूलविद्यां विद्युत्कोटिसमप्रभाम् । सूर्यकोटिप्रतीकाशां चन्द्रकोटिप्रभां प्रिये ॥ बिसतन्तुस्वरूपां तां बिन्दुत्रिवलयां प्रिये । ऊर्ध्वशक्तिनिपातेन सहजेन वरानने ॥ मूलशक्तिदृढत्वेन मध्यशक्तिप्रबोधतः । परमानन्दसन्दोहसानन्दां चिन्तयेत् पराम् ॥" इत्यन्तर्यजनं कृत्वा, मूलाधारे आत्मान्तरात्मपरमात्मज्ञानात्मेत्यात्मचतुष्टयं सचतुरश्रं कुण्डल्यग्निसमुज्ज्वलं कुण्डं ध्यात्वा, तन्मुखे मूलान्ते "अहन्तां

जुहोमि स्वाहा" इत्यहन्तां समर्प्य, असत्यं पैशुन्यं कामं क्रोधं लोभं मदं मात्सर्यं जुहोमि सुषुम्नासङ्क्रमनःस्रुवेण प्रत्येकं हुत्वा, अथवा "धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुचा । सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहम् ॥ इति हुत्वा पुनः हृत्कमले यथोक्तरूपां देवीं ध्यात्वा मानसोपचारैराराध्य यथाशक्ति जपहोमादिकं च मनसैव कृत्वा, कामकलारूपं स्वात्मानं विचिन्त्य स्वदेहं गन्धादिना संपूज्य कलशस्थापनं कुर्यात् ।

तत्र स्वदक्षे त्रिकोणं वृत्तमण्डलं विधाय "आधारशक्तये नमः" इत्यभ्यर्च्य, तत्राधारं निधाय तदुपरि अस्त्राय फडिति शोधितं, नमः इति पूरितं, पात्रं शङ्खं वा संस्थाप्य, तत्र गङ्गे च यमुने चैवेत्यादिना तीर्थान्यावाह्य, ओमिति गन्धादि निःक्षिप्य "वह्निसूर्यसोमकलाभ्यो नमः" इति संपूज्य धेनुमुद्रां प्रदर्श्य स्वमन्त्रेण संपूजयेदिति सामान्यार्घ्यं विधाय । ततः स्ववामे षट्कोणान्तर्गतत्रिकोणबिन्दुबाह्यवृत्तचतुरश्रं विधाय सामान्यार्घ्योदकेन तं मण्डलमभ्युक्ष्य, तत्र "आधारशक्तिभ्यो नमः" इति संपूज्य आधारं संस्थाप्य "रं वह्निमण्डलाय दशकलात्मने नमः" इति प्रपूज्य, फडिति कलशं प्रक्षाल्य कारणेन प्रपूर्य, रक्तवस्त्रमाल्यादिना संभूष्य देवीबुद्ध्या संस्थाप्य, "अं अर्कमण्डलाय द्वादशकलात्मने नमः" इति कलशं संपूज्य, "सौं सोममण्डलाय षोडशकलात्मने नमः" इति द्रव्यं संपूज्य फडिति संरक्ष्य, हूमित्यवगुण्ठ्य, मूलेन संवीक्ष्य, नम इत्यभ्युक्ष्य मूलेन गन्धमाघ्राय, कुम्भे पुष्पं दत्त्वा शापमोचनं कुर्यात् ।

एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् । कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥ सूर्यमण्डलसंभूते वरुणालयसंभवे । अमाबीजमयि देवि शुक्रशापाद्विमुच्यताम् ॥ वेदानां प्रणवो बीजं ब्रह्मानन्दमयो यदि । तेन सत्येन देवेशि ब्रह्महत्यां व्यपोहतु ॥ इति त्रिः पठित्वा, ततो "वां वीं वूं वैं वौं वः ब्रह्मशापमोचितायै सुरादेव्यै नमः" इत्यपि त्रिरुच्चार्य, हंसः शुचिषदित्यादि अद्रिजा ऋतमित्यन्तं त्रिः पठित्वा, आनन्दभैरवमष्टादशभुजं त्रिनयनं पञ्चमुखं सुरादेवीसहितं ध्यात्वा, "ह्ँ आनन्दभैरवाय वौषट् सहक्षमलवरयऊं सुरादेव्यै वौषट्" इति त्रिः संपूज्य, द्रव्यमध्ये दक्षिणावर्तेन त्रिपंक्त्या अं १६ कं १६ थं १६

इति विलिख्य, तन्मध्ये हंसः इति, तत्समावेशाद् द्रव्यमध्येऽमृतं विचिन्त्य, धेनुमुद्रयामृतीकृत्य वमिति सुधाबीजं मूलमपि चाष्टधा पठेत् । तयोर्मध्ये त्रिकोणषट्कोणवृत्तचतुरश्रं विलिख्य चतुरश्रे 'पूर्णगिरिपीठाय नमः, उड्डीयानपीठाय नमः, कामरूपपीठाय नमः, जालन्धरपीठाय नमः, इति संपूज्य, षट्कोणे षडङ्गं संपूज्य, त्रिखण्डेन त्रिकोणाग्रदक्षोत्तरं संपूज्य, मध्ये "आधारशक्त्यै नमः" इति संपूज्य, त्रिकोणगर्भे यन्त्रिकां संस्थाप्य, नम इति सामान्यार्घ्यजलेनाभ्युक्ष्य मध्ये "रं वह्निमण्डलाय दशकलात्मने नमः" इति संपूज्य, फडिति पात्रं प्रक्षाल्य यन्त्रिकोपरि संस्थाप्य, तत्र "अं अर्कमण्डलाय द्वादशकलात्मने नमः" इति संपूज्य, त्रिकोणवृत्तषट्कोणं पात्रे विलिख्य समस्तव्यस्तमन्त्रेण संपूज्य वं मूलं विलोममातृकां च पठन्नमृतेन त्रिकोणं प्रपूर्य तत्र गन्धादि निःक्षिप्य "सौं सोममण्डलाय षोडशकलात्मने नमः" इति संपूज्य पूर्ववद्यन्त्रं द्रव्ये विलिख्य, त्रिकोणत्रिरेखायां अं १६ कं १६ थं १६ इति विलिख्य मूलेन त्रिकोणं त्रिः संपूज्य, षडङ्गेन षट्कोणं संपूज्य, गङ्गे च यमुने चैवेति तीर्थमावाह्य, आनन्दभैरवभैरव्यौ स्वस्वमन्त्रेण संपूज्य, पूर्वादितः ग्लूं गगनरत्नेभ्यो नमः पूर्वे । स्लूं स्वर्गरत्नेभ्यो नमः दक्षिणे । म्लूं मर्त्यरत्नेभ्यो नमः पश्चिमे । प्लूं पातालरत्नेभ्यो नमः उत्तरे । न्लूं नागरत्नेभ्यो नमः मध्ये । इति संपूज्य मांसादि संशोधयेत् । मांसपात्रमानीय फडस्त्राय फडिति सामान्यार्घ्योदकेनाभ्युक्ष्य हुमित्यवगुण्ठ्य वमित्यमृतमुद्रयामृतीकृत्य मूलं सप्तधोच्चार्य "प्र तद्विष्णुः स्तवते" इत्यृचा संशोधयेत् । त्र्यम्बकं यजामहे" इत्यृचा मीनं शोधयेत् । "ॐ विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु । आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु ते । गर्भं धेहि सिनीवालि गर्भं धेहि सरस्वति । गर्भं ते अश्विनौ देवा आधत्तां पुष्करस्रजम् ॥" ॐ ह्सः ह्रौं जुंसः अमृते अमृतोद्भवे अमृतवर्षिणि अमृतं स्रावय २ स्वाहा, इति कुण्डगोलादिकं संशोध्यावगुण्ठ्यामृतीकृत्य तदुपरि सप्तधा मूलं सञ्जप्य तत्र देवीमावाह्य, तालत्रयेण दिग्बन्धनं विधाय योनिमुद्रां प्रदर्श्य ह्सौं नमः इति संपूज्य शंखमुद्रां प्रदर्श्य, षडङ्गेन सकलीकृत्य मत्स्यमुद्रया पात्रमाच्छाद्य मूलमुच्चरन् पात्रं देवीरूपं विभावयेत् । ततो घंटसमीपे गुरुशक्तिभोगस्वपात्रयोगिनीवीरबलिपाद्यार्घ्याचमनीयमधुपर्कपात्राणि क्रमेण

संस्थापयेत् । ततश्चर्वणयुतकारणेन तत्त्वमुद्रया श्रीपात्राद् बिन्दून्समुद्धृत्य "आनन्दभैरवं तर्पयामि नमः" इति त्रिः सन्तर्प्य, ततः "श्रीमच्छ्री अमुकानन्दनाथश्रीगुरुपादुकां तर्पयामि नमः" इति त्रिः, एवं परमगुरुपरमाचार्यादीन् सन्तर्प्य, श्रीपात्रामृतेन मूलेन श्रीदेवीं सायुधां सवाहनां सपरिवारां तर्पयामि नमः, इति सन्तर्पयेदिति कलशस्थापनम् ॥

ततः पीठपूजां कुर्यात् । ॐ मण्डूकाय नमः, कालाग्निरुद्राय०, मूलप्रकृत्यै, आधारशक्त्यै, कमठाय, अनन्ताय, पृथिव्यै, सुधार्णवाय रत्नद्वीपाय, कल्पवनाय, नन्दनोद्यानाय, मणिमण्डपाय, मणिवेदिकायै, रत्नसिंहासनाय, सूर्यसोमवह्निमण्डलेभ्यो, ह्सौः सदाशिवमहाप्रेतासनाय नमः, इति पीठं संपूज्य, वायुबीजेन वामनासापुटेन स्वहृदयाद् देवीं कुसुमाञ्जलौ संयोज्य, "देवेशि भक्तिसुलभे परिवारसमन्विते । यावत् त्वां पूजयिष्यामि तावद् देवि इहावह ॥" इति पठित्वा, मूलं श्रीवामदेवसहिते श्रीशारिकाभगवति इहागच्छ २ इह संतिष्ठ २ इह संनिधेहि २ संनिरुद्धा भव २ मम सर्वोपचारसहितां पूजां गृह्ण २ इत्यावाहनादिमुद्राः प्रदर्श्य, प्राणप्रतिष्ठां लेलिहानमुद्रया विधाय, दशदिग्बन्धनं कृत्वा अवगुण्ठ्य च धेनुयोनी प्रदर्श्य वरासिचक्राभयमुद्राश्च प्रदर्श्य, श्रीपात्रामृतेन सायुधां सवाहनां सपरिवारां सावरणां श्रीशारिकाभगवतीश्रीपादुकां तर्पयामि नमः इति त्रिः सन्तर्प्य, मूलं श्रीवामदेवसहितशारिकाभगवत्यै पाद्यं नमः, एवमर्घ्यं स्वाहा, आचमनीयं सुधा, मधुपर्कं सुधा मुखे, स्नानीयं नमः, "पादुके परिधायाथ शारिके रत्ननिर्मिते । स्नानमण्डपमायाहि स्नानार्थं शक्रदिग्गतम् ॥" मूलेन स्नात्वा, पुनः "शारिके परिधायाथ पादुके रत्ननिर्मिते । आगच्छ निर्मितं रम्यमलङ्कारस्य मण्डपम् ॥" इति सुस्नाप्य शुद्धदुकूलेनाङ्गं प्रोञ्छ्य, विचित्रपटवस्त्रकुङ्कुमकस्तूरीचन्दनसिन्दूरमुकुटकुण्डलहारादि–नानालङ्कारान् दत्त्वा, मूलेन मध्यमानामाङ्गुष्ठाग्रैर्गन्धो नमः, एवमङ्गुष्ठतर्जनीभ्यां पुष्पाणि वौषट्, "ॐ जगद्ध्वनिमन्त्रमातः स्वाहा" इति घण्टां संपूज्य वामेन पाणिना तां वादयन् मूलेन धूपं दद्यात् । एवं दीपचामरच्छत्रध्वजादर्शनैवेद्यादीन् निवेदयेत् । ततस्तत्त्वमुद्रया देवीं त्रिः सन्तर्प्य कृताञ्जलिः "श्रीशारिकाभगवति आवरणं ते पूजयामि नमः" इत्याज्ञां गृहीत्वावरणपूजामारभेत ।

तत्रादौ चतुर्द्वारपूजा । ओंह्रींश्रींगं गणपतिश्रीपादुकां पूजयामि नमस्तर्पयामि नमः । ३ धं धर्मश्री० । ३ वं वरुणश्री० । ३ कुं कुबेरश्री० । पुष्पाञ्जलिं दत्त्वा योनिमुद्रया प्रणमेदिति चतुर्द्वारप्रथमरेखायां पूर्वादिक्रमेण पूजनम् ।

अथ द्वितीयरेखायां । ओंह्रींश्रीं इन्द्रश्रीपादुकांपू० । ३ अग्निश्री० । ३ यमश्री० । ३ निर्ऋतिश्री० । ३ वरुणश्री० । ३ वायुश्री० । ३ कुबेरश्री० । ३ ईशानश्री० । ३ ब्रह्मश्री० । ३ विष्णुश्री० । पुष्पाञ्जलिं दत्त्वा योनिमुद्रया प्रणमेदिति ।

ततस्तृतीयरेखायामेतेषामायुधानि पूजयेत् । यथा ३ वज्रश्री० । ३ शक्तिश्री० । ३ दण्डश्री० । ३ खड्गश्री० । ३ पाशश्री० । ३ ध्वजश्री० । ३ गदाश्री० । ३ त्रिशूलश्री० । ३ पद्मश्री० । ३ चक्रश्री० । पुष्पाञ्जलिं दत्त्वा योनिमुद्रया प्रणमेदिति प्रथमावरणम् ।

अथ त्रिवृत्तपूजा । तत्रादौ प्रथमरेखायां मू० दिव्यौघपराख्यगुरुपङ्क्तिश्रीपा०, द्वितीयरेखायां मूलं सिद्धौघापराख्यगुरुपङ्क्तिश्रीपा०, तृतीयरेखायां मूलं मानवौघपरापराख्यगुरुपङ्क्तिश्रीपा०, अत्रैव ३ स्वगुरुश्री०, ३ परमगुरुश्री०, ३ परमेष्ठिगुरुश्री०, ३ परमाचार्यगुरुश्री०, इति पुष्पाञ्जलिं दत्त्वा योनिमुद्रया प्रणमेदिति द्वितीयावरणम् ।

ततोऽष्टदलेषु मूलेन पुष्पाञ्जलिं दत्त्वा अष्ट मातृकाः पूजयेत् । यथा—स्वाग्रदलमारभ्य वामावर्तेन पूजनम् । ३ ब्राह्मीश्री० । ३ वैष्णवीश्री० । ३ चण्डिकाश्री० । ३ अपराजिताश्री० । ३ कौमारीश्री० । ३ शाम्भवी० । ३ वाराहीश्री० । ३ नारसिंहिकाश्री० । इति संपूज्य सन्तर्प्य, अष्टदलकेसरेषु दक्षावर्तेनाष्टभैरवान् पूजयेत् । ३ असिताङ्गभैरवश्री० । ३ रुरुभैरवश्री० । ३ चण्डभैरवश्री० । ३ क्रोधेशभैरवश्री० । ३ उन्मत्तभैरवश्री० । ३ कपालिभैरवश्री० । ३ भीषणभैरवश्री० । ३ संहारभैरवश्री० । इति संपूज्य सन्तर्प्य योनिमुद्रया प्रणमेदिति तृतीयावरणम् । (तत्रैव वामावृत्त्या ब्राह्म्यादीनां पूजा कार्या ।)

अथ वसुकोणे मूलेन पुष्पाञ्जलिं दत्त्वा ३ अमाश्री० । ३ कामा-

श्री० । ३ँ चार्वङ्गीश्री० । ३ँ टङ्कधारिणीश्री० । ३ँ ताराश्री० । ३ँ पार्वतीश्री० । ३ँ यक्षिणीश्री० । ३ँ शिवाश्री० । इति संपूज्य सन्तर्प्य योनिमुद्रया प्रणमेदिति चतुर्थावरणम् ।

ततस्त्रिकोणेऽग्रकोणमारभ्य ३ँ कालिकाश्री० । ईशाने ३ँ त्रिपुरसुन्दरीश्री० । आग्नेये ३ँ श्रीदुर्गाश्री० । इति संपूज्य सन्तर्प्य योनिमुद्रया प्रणमेदिति पञ्चमावरणम् ।

ततो बिन्दौ मूलेन पुष्पाञ्जलिं दत्त्वा तत्र यथोक्तरूपां श्रीदेवीं ध्यात्वा, पुष्पाञ्जलिं गृहीत्वा मूलं सप्तधोच्चार्य श्रीमच्छ्रीवामदेवसहित श्रीशारिकाभगवतीश्रीपादुकां पूजयामि नमस्तर्पयामि नमः, इति संपूज्य सन्तर्प्य पूर्ववद् गन्धकुसुमधूपदीपच्छत्रादिभिः संपूजयेत् । (तत्रैव वराभयौ खड्गचक्रे यथोक्तविधिना पूज्यौ ।) ततः कवचसहस्रनामस्तोत्राणि पठेत्, नित्यहोमं च कुर्यात् । ततो यथाशक्ति मूलं जप्त्वा "गुह्यातिगुह्यगोप्त्री त्वं" इत्यादिना तर्पणं कुर्यात् ।

सर्वमङ्गलयमाङ्गल्ये शिवे सर्वार्थसाधिके ।
शरण्ये त्र्यम्बके गौरि नारायणि नमोऽस्तु ते ॥

इति सप्तवारं प्रदक्षिणीकृत्य, सामयिकैः सह मूलेन पात्रवन्दनं कृत्वा, पात्रमुद्धृत्य मस्तकान्तं नीत्वा देव्या प्रसादीकृतं विभाव्य, मूलं आत्मतत्त्वं शोधयामि स्वाहा, मू० विद्यातत्त्वं शोधयामि स्वाहा, मूलं शिवतत्त्वं शोधयामि स्वाहा, मूलं सर्वतत्त्वं शोधयामि स्वाहा, इति चुलकचतुष्टयं पीत्वा शेषं मूलमन्त्रं पठन् पिबेत् । चर्वणं च स्वीकृत्य,

नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः ।
अवस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥

इत्यादि शान्तिस्तोत्रं पठित्वा, ईशाने मण्डलं विधाय तत्र निर्माल्येन "निर्माल्यवासिन्यै नमः" इति संपूज्य सन्तर्प्य, सामान्यार्घ्योदकं गृहीत्वा "इतः पूर्वं प्राणबुद्धिदेहधर्माधिकारतो. जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा पद्भ्यामुदरेण शिश्ना यत्कृतं तत्सर्वं मदीयं श्रीशारिकाभगवतीचरणार्पणमस्तु स्वाहा" इति सन्तर्प्य, सामान्यार्घ्यपात्रं गृहीत्वा ।

साधु वासाधु यत्कर्म यद्यदाचरितं मया ।
तत्सर्वं कृपया देवि गृहाण मम सिद्धये ॥

इत्यपश्चक्रोपरि त्रिः परिभ्राम्य देवीहस्ते जलं निधाय शेषजलं स्ववामहस्ते संस्थाप्य मूलं पठन् सप्तधा स्वात्मानं प्रोक्षयेत् । ततः

"गच्छगच्छ परं स्थानं स्वस्थानं परमेश्वरि ।
यत्र ब्रह्मादयो देवाः न विदुः परमं पदम् ॥"

इति पुष्पाञ्जलिना देवीं क्षमापयित्वा, संहारमुद्रया चक्रात् पुष्पं गृहीत्वाघ्राय

"तिष्ठ तिष्ठ परे स्थाने स्वस्थाने परमेश्वरि ।
यत्र ब्रह्मादयः सर्वे सुरास्तिष्ठन्ति मे हृदि ॥"

इति स्वहृदये देवीमानीय सुखं विहरेदिति ॥

इत्येषा नित्यपूजायाः पद्धतिर्गद्यरूपिणी ।
शारिकासर्वस्वरूपा न देया तत्त्ववादिभिः ॥
शारिकापद्धतिर्गुह्या नित्यार्चनक्रमाङ्किता ।
अदीक्षितान्यशिष्येभ्यो गोपनीया तु देशिकैः ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीशारिकायाः पद्धतिः ॥ २ ॥

अथ

# श्रीशारिकाकवचम्

श्रीभैरव उवाच ।

अधुना 'शृणु देवेशि शारिकाकवचं परम् ।
त्रैलोक्यमोहनं नाम मूलमन्त्रमयं परम् ॥ १ ॥

---

१ देवि वक्ष्यामि ' ख० पाठः ।

[1]यस्य श्रवणमात्रेण सर्वमन्त्रफलं लभेत् ।
सर्वापत्तारणं दिव्यं सर्वसिद्धिप्रदं कलौ ॥ २ ॥
सर्वस्वं मे रहस्यं मे परमं परमाद्भुतम् ।
धारणादस्य देवेशि विष्णुना स जलोद्भवः ॥ ३ ॥
दानवेन्द्रो हतः शीघ्रमन्धकारो यथेन्दुना ।
मयापि त्रिपुराध्यक्षो दानवो जिष्णुना[2] बली ॥ ४ ॥
जम्भो वृत्रासुरो देवि प्रभावादस्य वर्मणः ।
कवचस्यास्य देवेशि ऋषिर्भैरव ईरितः ॥ ५ ॥
त्रिष्टुप् छन्दो देवता च त्रैलोक्यमोहनेश्वरी ।
शारिका शर्म बीजं च मा शक्तिः कीलकं गजः ।
त्रैलोक्यमोहविद्यार्थे विनियोगः प्रकीर्तितः ॥ ६ ॥

अस्य श्रीशारिकाभगवतीकवचस्य, श्रीभैरव ऋषिः, त्रिष्टुप् छन्दः, त्रैलोक्यमोहनेश्वरी शारिकाभगवती देवता, शां बीजं श्रीं शक्तिः फ्रां कीलकं, त्रैलोक्यमोहनकवचपाठे विनियोगः । भैरवऋषये नमः शिरसि । त्रिष्टुप्छन्दसे नमो मुखे । श्रीशारिकादेवतायै नमो हृदि । शां बीजाय नमो नाभौ । श्रीं शक्तये नमो गुह्ये । फ्रां कीलकाय नमः पादयोः । त्रैलोक्यमोहनकवचविनियोगाय नमः सर्वाङ्गेषु । शामिति षड्दीर्घयुक्तबीजेन करषडङ्गन्यासौ कृत्वा ध्यायेत् ।

श्रीशङ्खचक्रमुसलाम्बुजयुग्महस्तां
नागेन्द्रहारवलयां सितकण्ठमाल्याम् ।
सिन्दूरकुङ्कुमसहस्रमरीचिदीप्तिं
श्रीशारिकां त्रिनयनां हृदये स्मरामि ॥

ॐ मे दुर्गा शिरः पायादेकाक्षरविभूषणा ।
ॐ ह्रीं चण्डी ललाटं मे जगदुल्लासरूपिणी ॥ ७ ॥
ॐ ह्रीं श्रीं त्र्यक्षरा पातु भ्रुवौ मे भगमालिनी ।

१ 'अस्य' ख. पाठः । २ 'विष्णुना' क. ख. पाठः ।

ॐ ह्रीं श्रीं हूं च नेत्रेऽव्यात् सर्वमङ्गलमङ्गला ॥ ८ ॥
ॐ ह्रीं श्रीं हूं क्रां अव्यान्मे श्रुती शङ्करवल्लभा ।
ॐ ह्रीं श्रीं हूं क्रां आं पातु नासां नारायणेश्वरी ॥ ९ ॥
ॐ ह्रीं श्रीं हूं क्रां आं शां मे पातु वक्त्रं सरस्वती ।
अंआंइंईं रदान् पातु मातृकाशेखरेश्वरी ॥ १० ॥
उंऊंऋंॠं लृंलॄंएंऐं पायादोष्ठौ भवप्रिया ।
ओंऔंअंअः गलं पातु नीलकण्ठासनेश्वरी ॥ ११ ॥
कंखंगंघंङं मे पातु स्कन्धौ स्कन्दसमर्चिता ।
चंछंजंझंञं मे पायाद् वक्षो वामप्रियाम्बिका ॥ १२ ॥
टंठंडंढंणं मे पायात् पार्श्वौ पर्वतनन्दिनी ।
तंथंदंधंनं मे पातु कुक्षिं कुलाकुलेश्वरी ॥ १३ ॥
पंफंबंभंमं मे पातु नाभिं नारदसेविता ।
यंरंलंवं गुदं पातु गुह्यकेश्वरपूजिता ॥ १४ ॥
शंषंसंहं कटिं पातु देवी कात्यायनी सदा ।
ळंक्षः ऊरू सदा पातु सर्वसारस्वतप्रदा ॥ १५ ॥
ॐ शां जानू शिवा पातु ॐआं जङ्घेऽवतादुमा ।
ॐ क्रां पादौ सदा पातु राजमातङ्गिनी मम ॥ १६ ॥
ॐ हूं पादादिमूर्धान्तं वपुर्मे पातु कुब्जिका ।
ॐ श्रीं मूर्धादिपादान्तं वपुर्मे पातु शारदा ॥ १७ ॥
ॐ ह्रीं सप्ताक्षरी पातु शारिका सकलं वपुः ।
पूर्वे मां पातु ब्रह्माणी वह्नौ मे वैष्णवी सदा ॥ १८ ॥
दक्षिणेऽवतु मां चण्डी नैर्ऋते माऽपराजिता ।
पश्चिमेऽवतु कौमारी वायव्ये शाम्भवी च माम् ॥ १९ ॥
वाराही चोत्तरे पायादीशाने नारसिंहिका ।

प्रभाते मामुमा पातु मध्ये कामाऽवताच्च माम् ॥ २० ॥
चार्वङ्गी मां दिनान्तेऽव्यान्निशादौ टङ्कधारिणी ।
निशीथेऽव्यादुग्रतारा निशान्ते पार्वती च माम् ॥ २१ ॥
सर्वत्र यक्षिणी पातु शिवा मां पातु सर्वदा ।
असिताङ्गः क्षितेः पातु रुरुर्मां पातु पाथसः ॥ २२ ॥
चण्डो मां पातु मरुतः क्रोधोऽव्यान्मां हुताशनात् ।
उन्मत्तः सोमतः पातु कपाली सूर्यतोऽवतु ॥ २३ ॥
भीषणो यज्ञविघ्नात्तु संहारः शून्यमण्डलात् ।
रणे मां कालिका पातु द्यूते त्रिपुरसुन्दरी ॥ २४ ॥
दुर्गावतु विवादे मां श्रीचक्रं सर्वदावतु ।
सर्वत्र सर्वदा देवी पातु मां शारिका परा ॥ २५ ॥
धनं पुत्रं सुतान् दारान् गृहं यद्वस्तु मामकम् ।
तत्तन्मम शिवः पातु वामदेवश्चिदीश्वरः ॥ २६ ॥
इत्येतत् कवचं दिव्यं त्रिषु लोकेषु दुर्लभम् ।
त्रैलोक्यमोहनं नाम शारिकाया रहस्यकम् ॥ २७ ॥
विनामुना न सिद्धिः स्यात् कवचेन्द्रेण पार्वति ।
कोटिलक्षप्रजप्तस्य मन्त्रस्यास्य महेश्वरि ॥ २८ ॥
तस्मात् पठेच्छिवे वर्म मनुगर्भमनुत्तमम्[2] ।
सर्वोत्पातप्रशमनं बलबुद्धिप्रवर्धनम् ॥ २९ ॥
परमानन्ददं लोके परमैश्वर्यकारणम् ।
यः पठेत् पाठयेद्वापि शृणोति श्रावयेदपि ॥ ३० ॥
स एव भैरवाध्यक्षस्त्रैलोक्यविजयी विभुः ।
रवौ भूर्जे लिखेद्वर्म स्वयम्भूकुसुमस्रजा ॥ ३१ ॥
कुसुमेनाष्टगन्धेन[3] स्तन्येन निजरेतसा ।

---

१ 'मुमा' ख. पाठः । २ 'मन्त्रगर्भमनुत्तमम्, ख. पाठः । ३ 'कुङ्कुमेन' ख. पाठः ।

धारयेन्मूर्ध्नि वा बाहौ प्राप्नुयात् परमां गतिम् ॥ ३२ ॥
धनकामी लभेद्वित्तं पुत्रकामी लभेत् प्रजाम् ।
रणे रिपून्नरो हत्वा कल्याणी गृहमाविशेत् ॥ ३३ ॥
धृत्वा वक्ष्यामि देवेशि वाग्मित्वं जायते क्षणात् ।
वन्ध्या च काकवन्ध्या च मृतवत्सा लभेत् सुतान् ॥ ३४ ॥
मार्कण्डेयायुषो देवि साक्षाद्वैश्रवणोपमान् ।
किंकिं न लभते मर्त्यः पठन् कवचमुत्तमम् ॥ ३५ ॥
यः पठेदर्धरात्रे तु श्मशाने मुक्तकुन्तलः ।
पीत्वा शीधुं स देवेशि देवीदर्शनमाप्नुयात् ॥ ३६ ॥
स्तम्भयेद्भास्करं वायुं मोहयेत् त्रिजगद् ध्रुवम् ।
बहु किं कथ्यतां तस्य कवचस्यास्य धारणात् ॥ ३७ ॥
पठनाच्छ्रवणाद् वापि स भवेद् भैरवोपमः ।
इतीदं कवचं देवि त्रैलोक्यवश्यकारणम् ॥ ३८ ॥
त्रैलोक्यमोहनं नाम गोपनीयं सुरेश्वरि ।
यस्य कस्य न दातव्यं विना शिष्येण पार्वति ॥ ३९ ॥
दीक्षिताय कुलीनाय दत्त्वा मोक्षमवाप्नुयात् ।
विना दानं न गृह्णीयान्न दद्याद् दक्षिणां विना ॥ ४० ॥
दत्त्वा गृहीत्वाप्युभयोः सिद्धिहानिर्भवेद् ध्रुवम् ।
अन्यथा यस्तु गृह्णीयाद् दद्याद्वा कवचेश्वरम् ॥ ४१ ॥
पुत्रान् दारान् सुतांश्चैव (तस्य) योगिन्यो भक्षयन्ति हि ।
अज्ञात्वा कवचं देवि पूजयेच्छ्रीशिलां शिवे ॥ ४२ ॥
स भवेच्छिवहा सत्यं सर्वोपद्रवसङ्कुलः ।
धृत्वा यः कवचं देवि पूजयेच्छ्रीशिलां शिवे[1] ॥ ४३ ॥
स एव परमां सिद्धिं लभते नात्र संशयः ।

---

१ 'पूजयेदम्बिकां नरः' ख. पाठः ।

इतीदं कवचं देवि सारं सर्वस्वमुत्तमम् ॥ ४४ ॥
रहस्यं शारिकारत्नं गोपनीयं स्वयोनिवत् ।
सर्वकामप्रदं दिव्यं त्रैलोक्यमोहनाभिधम् ॥ ४५ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीशारिकायाः त्रैलोक्यमोहनकवचम् ॥ ३ ॥

अथ

# श्रीशारिकासहस्रनामकम् ।

श्रीभैरव उवाच ।

या सा देवी पुराख्याता शारिकारूपधारिणी ।
जालन्धरराक्षसघ्नी प्रद्युम्नशिखरे स्थिता ॥ १ ॥
तस्या नामसहस्रं ते मन्त्रगर्भं जयावहम् ।
कथयामि परां विद्यां सहस्राख्याभिधां शिवे ॥ २ ॥
शिलायाः शारिकाख्यायाः परसर्वस्वरूपिणीम् ।
विना नित्यक्रियां देवि विना न्यासं विनार्चनम् ॥ ३ ॥
विना पुरस्क्रियां जाप्यं विना[1] होमं च तर्पणम् ।
विना श्मशानगमनं विना समयपूजनम् ॥ ४ ॥
यया[2] लभेत् फलं सर्वं तां विद्यां शृणु पार्वति ।
या देवी चेतना लोके शिलारूपास्ति शारिका ॥ ५ ॥

१ 'होमार्चनादितर्पणम्' ख. पाठः । २ 'यथा' ख. पाठः ।

सृजत्यवति विश्वं तु संहरिष्यति तामसी ।
सैव संसारिणां देवि परमैश्वर्यदायिनी ॥ ६ ॥
परपदप्रदाप्यन्ते महाविद्यात्मिका शिला ।
तस्या नामसहस्रं ते वर्णयामि रहस्यकम् ॥ ७ ॥
रहस्यं मम सर्वस्वं सकलाचारवल्लभम् ।
यो जपेत् परमां विद्यां पठेदाख्यां[1]सहस्रकम् ॥ ८ ॥
धारयेत् कवचं दिव्यं पठेत् स्तोत्रेश्वरं परम् ।
किं तस्य दुर्लभं लोके नाप्नुयाद् यद्यदीश्वरि ॥ ९ ॥
अस्य नाम्नां सहस्रस्य महादेव ऋषिः स्मृतः ।
छन्दोऽनुष्टुब् देवता च शारिका परिकीर्तिता ॥ १० ॥
शर्म बीजं रमा शक्तिः सिन्धुरः कीलकं स्मृतम् ।
धर्मार्थकाममोक्षार्थे विनियोगः प्रकीर्तितः ॥ ११ ॥
ध्यानमस्याः प्रवक्ष्यामि शृणु पर्वतनन्दिनि ।

अस्य श्रीशारिकाभगवतीसहस्रनामस्तोत्रस्य, श्रीमहादेव ऋषिः, अनुष्टुप् छन्दः, श्रीशारिकाभगवती देवता, शांबीजं श्रींशक्तिः फ्रांकीलकं धर्मार्थकाममोक्षार्थे विनियोगः। ऋष्यादिन्यासं कृत्वा, ह्रांभ्रामित्यादिना कराङ्गन्यासौ ॥ ध्यानम्

बालार्ककोटिसदृशीमिन्दुचूडां कराम्बुजैः ।
वरचक्राभयासींश्च धारयन्तीं हसन्मुखीम् ॥ १ ॥
सिंहारूढां रक्तवस्त्रां रक्ताभरणभूषिताम् ।
वामदेवाङ्कनिलयां हृत्पद्मे शारिकां भजे ॥ २ ॥
बालार्ककोटिद्युतिमिन्दुचूडां
वरासिचक्राभयबाहुमाद्याम् ।
सिंहाधिरूढां शिववामदेह-
लीनां भजे चेतसि शारिकेशीम् ॥ ३ ॥

---

१ 'न्नाम' ख. पाठः ।

ॐह्रींश्रींहूंफ्रांश्रांशांश्रीशारिका श्यामसुन्दरी ।
शिला शारी शुकी शान्ता शान्तमानसगोचरा ॥ १ ॥
शान्तिस्था शान्तिदा शान्तिः श्यामा श्यामपयोधरा ।
देवी शशाङ्कबिम्बाभा शशाङ्ककृतशेखरा ॥ २ ॥
शशाङ्कशोभिलावण्या शशाङ्कमध्यवासिनी ।
शार्दूलवाहा देवेशी शार्दूलस्थितिरुत्तमा ॥ ३ ॥
शार्दूलचर्मवसना शक्तिः शार्दूलवाहना ।
गौरी पद्मावती पीना पीनवक्षोजकुड्मला ॥ ४ ॥
पीताम्बरा रक्तदन्ता दाडिमीकुसुमोपमा ।
स्फुरद्रत्नांशुखचिता रत्नमण्डलविग्रहा ॥ ५ ॥
रक्ताम्बरधरा देवी रत्नमालाविभूषणा ।
रत्नसंमूर्छिताभा च दीप्ता दीप्तशिखा दया ॥ ६ ॥
दयावती कल्पलता कल्पान्तदहनोपमा ।
भैरवी भीमनादा च भयानकमुखी भगा ॥ ७ ॥
कारा कारुण्यरूपा च भगमालाविभूषणा ।
भगेश्वरी भगस्था च कुरुकुल्ला कृशोदरी ॥ ८ ॥
कादम्बरी पटोत्कृष्टा परमा परमेश्वरी ।
सती सरस्वती सत्या सत्यासत्यस्वरूपिणी ॥ ९ ॥
परम्परा पटाकारा पाटला पाटलप्रभा ।
पद्मिनी पद्मवदना पद्मा पद्मकरा शिवा ॥ १० ॥
शिवाश्रया शरच्छान्ता शची रम्भा विभावरी ।
द्युमणिस्तरणा पाठा पीठेशी पीवराकृतिः ॥ ११ ॥

---

१ 'शाति' ख. पाठः । २ 'प्रभा' ख. पाठः । ३ 'वीवा' ख. पाठः ।
४ 'दीप' ख. पाठः । ५ 'कचोत्कृष्टा' ख. पाठः । ६ 'सरस्वती' ख. पाठः ।
७ 'शरत्कान्त' ख. पाठः । । ८ 'प्रस्तरा' ख. पाठः । ९ 'पीवरांसा वराकृति ख. पाठः ।

अचिन्त्या मुसलाधारा मातङ्गी मधुरस्वना ।
वीणागीतप्रिया गाथा गारुडी गरुडध्वजा ॥ १२ ॥
अतीवसुन्दराकारा सुन्दरी सुन्दरालका ।
अलका नाकमध्यस्था नाकिनी नाकिपूजिता ॥ १३ ॥
पातालेश्वरपूज्या च पातालतलचारिणी ।
अनन्तानन्तरूपा च ह्यज्ञाता (१००) ज्ञानवर्धिनी ॥ १४ ॥
अमेया ह्यप्रमेया च ह्यनन्तादित्यरूपिणी ।
द्वादशादित्यसंपूज्या शमी श्यामाकबीजिनी ॥ १५ ॥
विभासा भासुरवर्णा समस्तासुरघातिनी ।
सुधामयी सुधामूर्तिः सुधा सर्वप्रियङ्करी ॥ १६ ॥
सुखदा च सुरेशानी कृशानुवल्लभा हविः ।
स्वाहा स्वाहेशनेत्रा च ह्यग्निवक्राग्नितर्पिता ॥ १७ ॥
सोमसूर्याग्निनेत्रा च भूर्भुवःस्वःस्वरूपिणी ।
भूमिर्भूदेवपूज्या च स्वयम्भूः स्वात्मपूजका ॥ १८ ॥
स्वयम्भूपुष्पमालाढ्या स्वयम्भूपुष्पवल्लभा ।
आनन्दकन्दली कन्दा स्कन्दमाता शिलालया ॥ १९ ॥
चेतना चिद्भवाकारा[1] भवपत्नी भयापहा ।
विघ्नेश्वरी गणेशानी विघ्नविध्वंसिनी निशा ॥ २० ॥
वश्या वशिजनस्तुत्या[2] स्तुतिः श्रुतिधरा श्रुतिः ।
शास्त्रविधानविज्ञा च वेदशास्त्रार्थकोविदा ॥ २१ ॥
वेद्या वेदमयी विद्या विधातृवरदा वधूः ।
वधूरूपा वधूपूज्या वधूपानप्रतर्पिता ॥ २२ ॥
वधूपूजनसन्तुष्टा वधूमालाविभूषणा ।
वामा वामेश्वरी वाम्या कुलाकुलविचारिणी ॥ २३ ॥

१ 'चिद्भवाकारा' ख. पाठः । २ 'वश्यजन' ख. पाठः ।

वितर्कतर्कनिलया प्रलयानलसन्निभा ।
यज्ञेश्वरी यज्ञमुखा याजका यज्ञ[1]पात्रका ॥ २४ ॥
यक्षेश्वरी यक्षधात्री पार्वती पर्वताश्रया ।
पिलम्पिला पदस्थाना पददा नरकान्तका ॥ २५ ॥
नारी नर्मप्रिया श्रीदा श्रीदश्रीदा (२००) शरायुधा ।
कामेश्वरी रतिर्हूतिराहुतिर्हव्यवाहना ॥ २६ ॥
हरेश्वरी हरिवधूर्हाटकाङ्गदमण्डिता ।
हपुषा स्वर्गतिर्वैद्या [2]सुमुखा च महौषधिः ॥ २७ ॥
सर्वरोगहरा माध्वी मधुपानपरायणा ।
मधुस्थिता मधुमयी मधुदानविशारदा ॥ २८ ॥
मधुतृप्ता मधुरूपा मधूककुसुमप्रभा ।
माधवी माधवीवल्ली मधुमत्ता मदालसा ॥ २९ ॥
माराप्रिया मारपूज्या मारदेवप्रियङ्करी ।
मारेशी च मृत्युहरा हरिकान्ता मनोन्मना ॥ ३० ॥
महावैद्यप्रिया वैद्या वैद्याचारा सुरार्चिता ।
[3]सामन्ता पीनवपुषी गुटी गुर्वी गरीयसी ॥ ३१ ॥
कालान्तका कालमुखी [4]कठोरा करुणामयी ।
नीला [5]नाभी च वागीशी दूर्वा नीलसरस्वती ॥ ३२ ॥
अपारा पारगा गम्या गतिः प्रीतिः पयोधरा ।
पयोदसदृशच्छाया पारदाकृतिलालसा ॥ ३३ ॥
सरोजनिलया नीतिः कीर्तिः कीर्तिकरी [6]कथा

---

१ 'यानपात्रगा' ख. पाठः । २ 'स्वमुखा' ख. पाठः । ३ 'सुमन्ता' ख. पाठः ।
४ 'कचोरा' ख. पाठः । ५ 'नाडानीडा इति' ख. पाठः ।
६ 'कपा' ख. पाठः ।

काशी कांम्या कपर्दाशा काशपुष्पोपमा रमा ॥ ३४ ॥
रामा रामप्रिया रामभद्रदेवसमर्चिता ।
रामसंपूजिता रामसिद्धिदा रामराज्यदा ॥ ३५ ॥
रामभद्रार्चिता रेवा देवकी देववत्सला ।
देवपूज्या देववन्द्या देवदानवचर्चिता ॥ ३६ ॥
दूती द्रुतगतिर्दम्भा दामिनी विजया जया ।
अशेषसुरसंपूज्या निःशेषासुरसूदिनी ॥ ३७ ॥
वटिनी वटमूलस्था लास्यहास्यैकवल्लभा ।
अरूपा निर्गुणा सत्या सदासन्तोषवर्धिनी ॥ ३८ ॥
सौम्या यजुर्वहा याम्या ( ३०० ) यमुना यामिनी यमी ।
दाक्ष दया च वरदा दाल्भ्यसेव्या पुरन्दरी ॥ ३९ ॥
पौरन्दरी पुलोमेशी पौलोमी पुलकाङ्कुरा ।
पुरस्था वनभूर्वन्या वानरी वनचारिणी ॥ ४० ॥
समस्तवर्णनिलया समस्तवर्णपूजिता ।
समस्तवर्णवर्णाढ्या समस्तगुरुवल्लभा ॥ ४१ ॥
समस्तमुण्डमालाढ्या मालिनी मधुपस्वना ।
कोशप्रदा कोशवासा चमत्कृतिरलम्बुसा ॥४२ ॥
हासदा सदसद्रूपा सर्ववर्णमयी स्मृतिः ।
सर्वाक्षरमयी विद्या मूलविद्येश्वरीश्वरी ॥ ४३ ॥
अकारा षोडशाकारा कारावन्धविमोचिनी ।
ककारव्यञ्जनाक्रान्ता सर्वमन्त्राक्षरालया ॥ ४४ ॥
अणुरूपाप्यमला च त्रैगुण्याप्यपराजिता ।
अम्बिकाम्बालिका चाम्बा अनन्तगुणमेखला ॥ ४५ ॥
अपर्णा पर्णशाला च साट्टहासा हसन्तिका ।

---

१ 'कामा' ख. पाठः २ 'वत्सला' ख. पाठः ।

अद्रिकन्याप्यट्टहासाप्यजरास्याप्यरुन्धती ॥ ४६ ॥
अब्जाक्षी चाब्जिनी देवी ह्यम्बुजासनपूजिता ।
अब्जहस्ता ह्यब्जपादा चाब्जपूजनतोषिता ॥ ४७ ॥
अकारमातृकादेवी सर्वानन्दकरी कला ।
आनन्दसुन्दरी आद्या आघूर्णारुणलोचना ॥ ४८ ॥
अदिदेवान्तकाऽक्रूरा आदित्यकुलभूषणा ।
आंबीजमण्डना देवी चाकारमातृकावलिः ॥ ४९ ॥
इन्दुस्तुतेन्दुबिम्बास्या इनकोटिसमप्रभा ।
इन्दिरा मन्दुराशाला चेतिहासा कथा स्मृतिः ॥ ५० ॥
इला चेक्षुरसास्वादा इकाराक्षरभूषिता ।
इन्द्रस्तुता चेन्द्रपूज्या इनभद्रा इनेश्वरी ॥ ५१ ॥
इभगतिरिभगीतिरिकाराक्षरमातृका ।
ईश्वरी वैभवप्रख्या चेशानीश्वरवल्लभा ॥ ५२ ॥
ईशा कामकलादेवी ईकाराश्रितमातृका [४००] ।
उग्रप्रभोग्रचित्ता च उग्रवामाङ्कवासिनी ॥ ५३ ॥
उषा वैष्णवपूज्या च उग्रतारोल्मुकानना ।
उमेश्वरीश्वरी श्रेष्ठा उदकस्था ह्युदेश्वरी ॥ ५४ ॥
उदकाच्छोदकदा च उकारोद्भासमातृका ।
ऊष्मा प्यूषा ऊषणा च तथोचितवरप्रदा ॥ ५५ ॥
ऋणहर्त्री ऋकारेशी ऋलृवर्णा लृवर्णभाक् ।
लृकारभ्रुकुटिर्बाला बालादित्यसमप्रभा ॥ ५६ ॥
एणाङ्कमुकुटा चैहा एकाराक्षरबीजिता ।
एणप्रिया एणमध्यवासिनी एणवत्सला ॥ ५७ ॥

---

१ 'मा' ख. पाठः । २ 'द्भव' ख. पाठः ।
३ 'रविप्रभा' उदितादित्यसुप्रभा' ख. पाठः ।

एणाङ्कमध्यसंस्था च ऐकारोद्भासकूटिनी ।
ऊँकारशेखरा देवी औचित्यपदमण्डिता ॥ ५८ ॥
अम्भोजनिलये[2]स्थाना अःस्वरूपा च स्वर्[3]गतिः ।
षोडशस्वररूपा च षोडशस्वरगायिनी ॥ ५९ ॥
षोडशी षोडशाकारा कमला कमलोद्भवा ।
कामेश्वरा कलाभिज्ञा कुमारी कुटिलालका ॥ ६० ॥
कुटिला कुटिलाकारा कुटुम्बसंयुता शिवा ।
कुलाकुलपदेशानी कुलेशी कुब्जिका कला ॥ ६१ ॥
कामा कामप्रिया कीरा कमनीया कपर्दिनी ।
कालिका भद्रकाली च कालकामान्तकारिणी ॥ ६२ ॥
कपालिनी कपालेशी कर्पूरचयचर्चिता ।
कादम्बरी कोमलाङ्गी काश्मीरी कुङ्कुमद्युतिः ॥ ६३ ॥
कुन्ता कूर्चा[4]र्णबीजाढ्या कमनीया कुलाकुला ।
करालास्या करालाक्षी विकरालस्वरूपिणी ॥ ६४ ॥
काम्यालका कामदुघा कामिनी कामपालिनी ।
कन्थाधरा कृपाकर्त्री ककाराक्षरमातृका ॥ ६५ ॥
खड्गहस्ता खर्परेशी खेचरी खगगामिनी ।
खेचरीमुद्रया युक्ता खेचरत्वप्रदायिनी ॥ ६६ ॥
खगासना खलोलाक्षी खेटेशी खलनाशिनी ।
खेटकायुधहस्ता [ ५८० ] च खरांशुद्युतिसन्निभा ॥ ६७ ॥
खान्ता खबीजनिलया खकारोल्लासमातृका ।
वैखरी बीजनिलया खस्था खेचरवल्लभा ॥ ६८ ॥
गुण्या गजास्यजननी गणेशवरदा गया ।

---

१ 'क्षवमातृका' ख. पाठः । २ 'लया स्वस्था' ख. पाठः ।
३ 'चिदात्मिका' ख. पाठः । ४ 'कूर्चाक्षबीजाढ्या' ख. पाठः ।

गोदावरी गदाहस्ता गङ्गाधरवरप्रदा[1] ॥ ६९ ॥
गोधा[2] गोवाहनेशानी गरलाशनवल्लभा[3] ।
गाम्भीर्यभूषणा गङ्गा गकारार्णविभूषणा[4] ॥ ७० ॥
घृणा[5] घोणाकरस्तुत्या घुर्घुरा घोरनादिनी ।
घटस्था घटजसेव्या घनरूपा घुणेश्वरी[6] ॥ ७१ ॥
घनवाहनसेव्या च घकाराक्षरमातृका ।
ङान्ता ङवर्णनिलया ङाणुरूपा ङणालया ॥ ७२ ॥
ङेशा ङेन्ता ङनाजाप्या ङवर्णाक्षरभूषणा ।
चामीकररुचिश्चान्द्री चन्द्रिका चन्द्ररागिणी ॥ ७३ ॥
चला चलश्चला चेला[7] चन्द्रा[8] चन्द्रकरा चली ।
चञ्चुरीकस्वनालापा चमत्कारस्वरूपिणी ॥ ७४ ॥
चटुली चाटुकी चार्वी चम्पा चम्पकसन्निभा ।
चीनांशुकधरा चाद्वी चकारार्णविभूषणा ॥ ७५ ॥
छत्री च्छत्रधरा च्छिन्ना च्छिन्नमस्ता छटच्छविः ।
छायासुतप्रिया च्छाया छवर्णामलमातृका ॥ ७६ ॥
जगदम्बा जगज्ज्योतिर्ज्योतीरूपा जटाधरा ।
जयदा जयकर्त्री च जयस्था जयहासिनी ॥ ७७ ॥
जगत्प्रिया जगत्पूज्या जगत्कर्त्री जरातुरा ।
ज्वरघ्नी जम्भदमनी जगत्प्राणा जयावहा ॥ ७८ ॥
जम्भारिवरदा जैत्री जीवना जीववाक्प्रदा ।
जाग्रती च जगन्निद्रा जगद्योनिर्जलन्धरा ॥ ७९ ॥

---

१ 'गदाधरप्रिया गतिः' ख. पाठः । २ 'गीता' ख. पाठः ।
३ 'विग्रहा' ख. पाठः । ४ 'गायत्री गजवाहना' ख. पाठः । ५ 'घाणा' ख. पाठः ।
६ 'गुणेश्वरी' ख. पाठः । ७ 'चोवा' ख. पाठः । ८ 'चित्रा' ख. पाठः ।

जालन्धरधरा जाया जकाराक्षरमातृका ।
झम्पा झिञ्झेश्वरी झान्ता झकाराक्षरमातृका ॥ ८० ॥
ञाणुरूपा ञिणावासा (६००) ञकारेशी ञणायुधा ।
ञवर्गबीजभूषाढ्या[1] ञकाराक्षरमातृका ॥ ८१ ॥
टङ्कायुधा टकाराढ्या टोटाक्षी टसुकुन्तला[2] ।
टङ्कायुधा टलीरूपा[3] टकाराक्षरमातृका ॥ ८२ ॥
ठक्कुरा ठक्कुरेशानी ठकारत्रितयेश्वरी ।
ठःस्वरूपा ठवर्णाढ्या ठकाराक्षरमातृका ॥ ८३ ॥
डक्का डक्केश्वरी डिम्भा डवर्णाक्षरमातृका ।
ढिणी ढेहा ढिल्लहस्ता ढकाराक्षरमातृका ॥ ८४ ॥
णेशा णान्ता णवर्गान्ता णकाराक्षरभूषणा ।
तुरी तुर्या तुलारूपा त्रिपुरा तामसप्रिया ॥ ८५ ॥
तोतुला तारिणी तारा सप्तविंशतिरूपिणी ।
त्रिपुरा त्रिगुणा ध्येया त्र्यम्बकेशी त्रिलोकधृत् ॥ ८६ ॥
त्रिवर्गेशी त्रयी त्र्यक्षी त्रिपदा वेदरूपिणी ।
त्रिलोकजननी त्राता त्रिपुरेश्वरपूजिता ॥ ८७ ॥
त्रिकोणस्था त्रिकोणेशी कोणत्रयनिवासिनी ।
त्रिकोणपूजनतुष्टा त्रिकोणपूजनाश्रिता ॥ ८८ ॥
त्रिकोणदानसंलग्ना सर्वकोणशुभार्थदा ।
वसुकोणस्थितादेवी वसुकोणार्थवादिनी ॥ ८९ ॥
वसुकोणपूजिता च षट्चक्रक्रमवासिनी ।
नागपत्रस्थिता शारी त्रिवृत्तपूजनार्थदा ॥ ९० ॥
चतुर्द्वाराग्रगा चक्रबाह्यान्तरनिवासिनी ।
तामसी तोमरप्रख्या तुम्बुरुस्वननादिनी ॥ ९१ ॥

---

१ 'ञवर्णा' ख. पाठः । २ 'टम्ब' ख. पाठः । ३ 'टकीरूपा' ख. पाठः ।

तुलाकोटिस्वना तापी तपसां फलवर्धिनी ।
तरलाक्षी तमोहर्त्री तारकासुरघातिनी ॥ ९२ ॥
तरी तरणिरूपा च तकाराक्षरमातृका ।
स्थली स्थविररूपा च स्थूला स्थाली स्थलाब्जिनी ॥ ९३ ॥
स्थावरेशा स्थूलमुखी थकाराक्षरमातृका ।
दूतिका शिवदूती च दण्डायुधधरा द्युतिः ॥ ९४ ॥
दया दीनानुकम्पा च दम्भोलिधरवल्लभा ।
देशानुचारिणी द्रेक्का द्राविडेशी दवीयसी ॥ ९५ ॥
दाक्षायणी द्रुमलता (७००) देवमाताधिदेवता ।
दधिजा दुर्लभा देवी देवता परमाक्षरा ॥ ९६ ॥
दामोदरसुपूज्या च दामोदरवरप्रदा ।
दनुपुत्री विनाशा च दनुपुत्रकुलार्चिता ॥ ९७ ॥
दण्डहस्ता दण्डिपूज्या दमदा च दमस्थिता ।
दशधेनुसुरूपा च दकाराक्षरमातृका ॥ ९८ ॥
धर्म्या धर्मप्रसूर्धन्या धनदा धनवर्धिनी ।
धृतिर्धूर्ता धन्यवधूर्धकाराक्षरमातृका ॥ ९९ ॥
नलिनीनालिका नाप्या नाराचायुधधारिणी ।
नीपोपवनमध्यस्था नागरेशी नरोत्तमा ॥ १०० ॥
नरेश्वरी नृपाराध्या नृपपूज्या नृपार्थदा ।
नृपसेव्या नृपवन्द्या नरनारायणप्रसूः ॥ १०१ ॥
नर्तकी नीरजाक्षी च नवर्णाक्षरभूषणा ।
पद्मेश्वरी पद्ममुखी पत्रयाना परापरा ॥ १०२ ॥
पारावारसुता पाठा परवर्गविमर्दिनी ।
पूः पुरारिवधूः पम्पा पत्नी पत्रीशवाहना ॥ १०३ ॥
पीवरांसा पतिप्राणा पीतलाक्षी पतिव्रता ।

पीठा पीठस्थितापीठा पीतालङ्कारभूषणा ॥ १०४ ॥
पुरूरवस्तुता पात्री पुत्रिका पुत्रदा प्रजा ।
पुष्पोत्तंसा पुष्पवती पुष्पमालाविभूषणा ॥ १०५ ॥
पुष्पमालातिशोभाढ्या पकाराक्षरमातृका ।
फलदा स्फीतवस्त्रा च फेरवारावभीषणा ॥ १०६ ॥
फल्गुनी फल्गुतीर्थस्था फवर्णाकृतमण्डला ।
बलदा बालखिल्या च बाला बलरिपुप्रिया ॥ १०७ ॥
बाल्यावस्था बर्बरेशी बकाराकृतिमातृका ।
भद्रिका भीमपत्नी च भीमा भर्गशिखाऽभया ॥ १०८ ॥
भयघ्नी भीमनादा च भयानकमुखेक्षणा ।
भिल्लीश्वरी भीतिहरा भद्रदा भद्रकारिणी ॥ १०९ ॥
भद्रेश्वरी भद्रधरा भद्राख्या भाग्यवर्धिनी (८००) ।
भगमाला भगावासा भवानी भवतारिणी ॥ ११० ॥
भगयोनिर्भगाकारा भगस्था भगरूपिणी ।
भगलिङ्गामृतप्रीता भकाराक्षरमातृका ॥ १११ ॥
मान्या मानप्रदा मीना मीनकेतनलालसा ।
मदोद्धता मनोन्मान्या मेना मैनाकवत्सला ॥ ११२ ॥
मधुमत्ता मधुपूज्या मधुदा मधुमाधवी ।
मांसाहारा मांसप्रीता मांसभक्ष्या च मांसदा ॥ ११३ ॥
मारार्ता मत्स्यरूपा च मत्स्यघाता महत्तरा ।
मेरुशृङ्गाग्रतुङ्गास्या मोदकाहारपूजिता ॥ ११४ ॥
मातङ्गिनी मधुमत्ता मदमत्ता मदेश्वरी ।
मज्जा मुग्धानना मुग्धा मकाराक्षरभूषणा ॥ ११५ ॥
यशस्विनी यतीशानी यन्त्रकर्त्री यजुःप्रिया ।

मारूपा ' ख. पाठः ।

यज्ञधात्री यज्ञफला यजुर्वेदऋचांफला ॥ ११६ ॥
यशोदा यतिसेव्या च यात्रा यात्रिकवत्सला ।
योगेश्वरी योगगम्या योगेन्द्रजनवत्सला ॥ ११७ ॥
यदुपुत्री यमघ्नी च यकाराक्षरमातृका ।
रत्नेश्वरी रमानाथसेव्या रथ्या रजस्वला ॥ ११८ ॥
राज्यदा राजराजेशी रोगहर्त्री रजोवती ।
रत्नाकरसुता रम्या रात्री रात्रिपतिप्रभा ॥ ११९ ॥
रक्षोघ्नी राक्षसेशानी रक्षोनाथसमर्चिता ।
रतिप्रिया रतिमुखा रकाराकृतिशेखरा । १२० ॥
लम्बोदरी ललज्जिह्वा लास्यतत्परमानसा ।
लूतातन्तुवितानास्था लक्ष्मीर्लज्जा लयालिनी ॥ १२१ ॥
लोकेश्वरी लोकधात्री लाटस्था लक्षणाकृतिः ।
लम्बा लम्बकचोल्लासा लकाराकारवर्धिनी ॥ १२२ ॥
लिङ्गेश्वरी लिङ्गलिङ्गा लिङ्गमाला लसद्द्युतिः ।
लक्ष्मीरूपा रसोल्लासा रामा रेवा रजस्वला ॥ १२३ ॥
लयदा लक्षणा (६००) लोला लकाराक्षरमातृका ।
वाराही वरदात्री च वीरसूर्वीरदायिनी ॥ १२४ ॥
वीरेश्वरी वीरजन्या वीरचर्वणचर्चिता ।
वरायुधा वराका च वामना वामनाकृतिः ॥ १२५ ॥
वधूता वधकावध्या वध्यभूर्वाणिजप्रिया ।
वसन्तलक्ष्मीर्वटुकी वटुका वटुकेश्वरी ॥ १२६ ॥
वटुप्रिया वामनेत्रा वामाचारैकलालसा ।
वार्ता वाम्या वरारोहा वेदमाता वसुन्धरा ॥ १२७ ॥
वयोयाना वयस्या च वकाराक्षरमातृका ।
शम्भुप्रिया शरच्चर्चा शाद्वला शशिवत्सला ॥ १२८ ॥

शीतद्युतिः शीतरसा शोणोष्ठी शीकरप्रदा ।
श्रीवत्सलाञ्छना शर्वा शर्ववामाङ्गवासिनी ॥ १२९ ॥
शशाङ्कामललक्ष्मीश्च शार्दूलतनुरद्रिजा ।
शोषहर्त्री शमीमूला शकाराकृतशेखरा ॥ १३० ॥
षोडशी षोडशीरूपा[1] षढा षोढा षडानना ।
षट्कूटा षड्रसास्वादा षडशीतिमुखाम्बुजा ॥ १३१ ॥
षडास्यजननी षण्ठा षवर्णाक्षरमातृका ।
सारस्वतप्रद्वः सर्वा सर्वगा सर्वतोमुखा ॥ १३२ ॥
समा सीता सतीमाता सागराभयदायिनी ।
समस्तशापशमनी सालभञ्जी सुदक्षिणा ॥ १३३ ॥
सुषुप्तिः सुरसा साध्वी सामगा सामवेदजा ।
सत्यप्रिया सोममुखी सूत्रस्था सूतवल्लभा ॥ १३४ ॥
सनकेशी सुनन्दा च स्ववर्गस्था सनातनी ।
सेतुभूता समस्ताशा सकाराक्षरवल्लभा ॥ १३५ ॥
हालाहलप्रिया हेला हाहारावविभूषणा ।
हाहाहूहूस्वरूपा च हलधात्री हलिप्रिया ॥ १३६ ॥
हरिनेत्रा घोररूपा हविष्याहुतिवल्लभा ।
हंचंळंक्षःस्वरूपा च सर्वमातृकपूजिता ॥ १३७ ॥
ॐऐंसौःह्रींमहाविद्या आंशांफ्रांहूंस्वरूपिणी (१०००) ।
इति श्रीशारिकादेव्या मन्त्रनामसहस्रकम् ॥ १३८ ॥
पुण्यं पुण्यजनस्तुत्यं नुत्यं वैष्णवपूजितम् ।
इदं यः पठते देवि श्रावयेद्यः शृणोति च ॥ १३९ ॥
स एव भगवान् देवः सत्यं सत्यं सुरेश्वरि ।
एककालं द्विकालं वा त्रिकालं पठते नरः ॥ १४० ॥

---

१ 'षोडशोत्तंसा' ख. पाठः ।

वामाचारपरो देवि तस्य पुण्यफलं शृणु ।
मूकत्वं बधिरत्वं च कुष्ठं हन्याच्च श्वित्रिकाम्[1] ॥ १४१ ॥
वातपित्तकफान् गुल्मान् रक्तस्रावं विषूचिकाम् ।
सद्यः शमयते देवि श्रद्धया यः पठेन्निशि ॥ १४२ ॥
अपस्मारं कर्णपीडां शूलं रौद्रं भगन्दरम् ।
मासमात्रं पठेद्यस्तु स रोगैर्मुच्यते ध्रुवम् ॥ १४३ ॥
भौमे शनिदिने वापि चक्रमध्ये पठेद्यदि ।
सद्यस्तस्य महेशानि शारिका वरदा भवेत् ॥ १४४ ॥
चतुष्पथे पठेद्यस्तु त्रिरात्रं रात्रिव्यत्यये[2] ।
दत्त्वा बलिं सुरां मुद्रां[3] मत्स्यं मांसं सभक्तकम् ॥ १४५ ॥
बब्बोलत्वग्रसाकीर्णं शारी प्रादुर्भविष्यति ।
यः पठेद् देवि लोलायां चितायां शवसन्निधौ ॥ १४६ ॥
पायंपायं त्रिवारं तु तस्य पुण्यफलं शृणु ।
ब्रह्महत्यां गुरोर्हत्यां मद्यपानं[4] च गोवधम् ॥ १४७ ॥
महापातकसङ्घातं गुरुतल्पगतोद्भवम् ।
स्तेयं वा भ्रूणहत्यां वा नाशयेन्नात्र संशयः ॥ १४८ ॥
स एव हि रमापुत्रो यशस्वी लोकपूजितः ।
वरदानक्षमो देवि वीरेशो भूतवल्लभः ॥ १४९ ॥
चक्रार्चने पठेद्यस्तु साधकः शक्तिसन्निधौ ।
त्रिवारं श्रद्धया युक्तः स भवेद्भैरवेश्वरः ॥ १५० ॥
किंकिं न लभते देवि साधको वीरसाधकः ।
पुत्रवान् धनवांश्चैव[5] सत्याचारपरः शिवे ॥ १५१ ॥
शक्तिं संपूज्य देवेशि पठेत् स्तोत्रं परामयम्[6] ।

१ 'छत्वं नाशयेत्तथा' ख. पाठः । २ 'वृत्तये' ख. पाठः । ३ 'चौद्रं' ख. पाठः ।
४ 'सुरापानं' ख. पाठः । ५ 'धनसंपन्नः' ख. पाठः । ६ 'वरं शुभम्' ख. पाठः ।

इह लोके सुखं भुक्त्वा परत्र त्रिदिवं व्रजेत् ॥ १५२ ॥
इति नामसहस्रं तु शारिकाया मनोरमम् ।
गुह्यं गुह्यतमं लोके गोपनीयं स्वयोनिवत् ॥ १५३ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीशारिकायाः सहस्रनामस्तोत्रकम् ॥ ४ ॥

—():०:()—

अथ

# श्रीशारिकास्तोत्रम्

श्रीभैरव उवाच ।
शृणु देवि प्रवक्ष्यामि स्तोत्रं मन्त्रात्मकं परम् ।
पञ्चाङ्गभूतं सर्वस्वं मन्त्रकोटिफलप्रदम् ॥ १ ॥

अस्य श्रीशारिकाभगवतीस्तवराजस्य, श्रीमहादेव ऋषिः, त्रिष्टुप्छन्दः, श्रीशारिकाभगवती देवता, शांबीजं, श्रींशक्तिः, फ्रांकीलकं श्रीविद्यासिद्ध्यर्थे स्तवराजपाठे विनियोगः । न्यासं विधाय ध्यायेत् ।

बालार्ककोटिद्युतिमिन्दुचूडां
वरासिचक्राभयबाहुमाद्याम् ।
सिंहाधिरूढां शिववामदेह-
लीनां भजे चेतसि शारिकेशीम् ॥

त्र्यक्षं त्र्यक्षे तव मनुशिरोमौलिमाणिक्यभूतं
ध्यायेच्चित्ते शशिधरकलाबिन्दुबिम्बावतंसम् ।
यो मन्त्रीशो जपति मनसा माननीयो महद्भि-
र्धन्यः पुण्यैः स भवति मरुद्वीज्यमानो मरुत्वान् ॥ १ ॥

पराबीजं तेजोनिधिमधिमनौ यः प्रजपते
जगन्मोहध्वान्तामितपटलसूर्योदयमिदम् ।
स लोकेशो भूत्वा विचरति महामान्त्रिकमणि-
र्धरायां वा नाके फणिपुरि यथेच्छं त्रिभुवने ॥ २ ॥

मार्बीजमानन्दजमिन्दुचूडं
सिद्धो जपेद्यस्तव मन्त्रमध्ये ।
स देवि देवेश्वरविष्टरार्ध-
निविष्ट ईषन्मदिरारुणाक्षः ॥ ३ ॥

कूर्चं चमत्कारलसत्प्रसादं
जपेच्छिवे यः स्मरकेलिलोलः ।
हुंकारमात्रेण स वैरिवर्गं
हत्वा भवेद्भूपतिसार्वभौमः ॥ ४ ॥

गजार्णमाकर्ण्य जपेत् क्षणं यो
मृगेक्षणापीनकुचान्तरस्थः ।
स मेनकाकामरणप्रवीणो
लीलावतीं केलिकलां करोति ॥ ५ ॥

शून्यं बीजं मन्त्रमध्ये जपेद्यो
मूढो जाड्याम्भोधिमग्नोऽरिभग्नः ।
तस्यास्याब्जान्निःसरन्ते सुवाचो
गद्यैः पद्यैर्मद्यसारप्रचाराः ॥ ६ ॥

कल्याणबीजं यदि साधकेन्द्रो
जपेच्छिवे चेतसि वार्धरात्रे ।
स भोगवाल्लभ्यपरो नरेन्द्रो
भोगावतीं प्राप्य भवेद्भगेशः ॥ ७ ॥

श्रीशारिकायै तव मन्त्रमध्ये
यो नाममन्त्रं जपते महेशि ।
तस्याजिभूमौ नृपवर्गलक्ष्मी-
र्वशे भवेत् साधकलोकमौलेः ॥ ८ ॥

अश्मरीबीजमीशानि यो जपेदर्धरात्रके ।
सिंहासना भगवती वरदा दर्शनप्रदा ॥ ९ ॥

बिन्दुत्रिकोणवसुकोणसुवृत्तनाग-
पत्रत्रिवृत्तधरणीगृहमण्डलस्थाम् ।
बालार्कबिम्बसदृशाननबिम्बपद्मां
यो ध्यायतेऽम्ब स भवेद्भुवि सार्वभौमः ॥ १० ॥

यो बिन्दुः स पितामहो हरिरसौ सूर्यः स्वरः कीर्तितो
यो रेफो दुरितौघमर्दनकरो रुद्रः सदा गीयते ।
यः प्राणः स परः स एव भगवान्नादः शिवः सर्वदा
देवी चन्द्रकला कलङ्करहिता माये तु तुभ्यं नमः ॥ ११ ॥

श्रीशारिकास्तवमिमं पठति प्रभाते
यो वार्धरात्रसमयेऽर्चनकर्मकाले ।
इन्द्रः सुरासुरयुतः स्वयमेति तस्य
पूजां विधाय ददते त्रिदिवाधिपत्यम् ॥ १२ ॥

इतीदं देवि पञ्चाङ्गं शारिकाया रहस्यकम् ।
सर्वस्वं परमं गुह्यं त्रैलोक्योद्धरणात्तमम् ॥ १३ ॥
पुण्यं पवित्रमायुष्यं श्रेयस्करं यशस्करम् ।

मकारैः पञ्चभिः पूज्यं साध्यं साधकसत्तमैः ॥ १४ ॥
संरक्ष्यं पुत्रवद् देवि दर्शयेदिष्टमित्रवत् ।
इदं रहस्यमाख्यातं शारिकासारमुत्तमम् ॥ १५ ॥
अभक्ताय न दातव्यं कुचैलाय दुरात्मने ।
निन्दकायान्यशिष्याय स मन्त्री निरयी भवेत् ॥ १६ ॥

श्रीदेव्युवाच ।

भगवन् भवतानेन पञ्चाङ्गकथनेन हि ।
क्रीतास्मि तव दास्यस्मि किमन्यत् कथयामि ते ॥ १७ ॥

श्रीभैरव उवाच ।

पञ्चाङ्गतत्त्वमीशानि शिलासर्वस्वमुत्तमम् ।
गुह्यं गोप्यतमं देवि गोपनीयं मुमुक्षुभिः ॥ १८ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीशारिकास्तोत्रम् ॥ ५ ॥

## समाप्तं चेदं श्रीशारिकापञ्चाङ्गम् ॥

अथ

# श्रीमहाराज्ञीपञ्चाङ्गम् ।

श्रीशैलशिखरासीनं भगवन्तमुमापतिम् ।
चन्द्रार्धमुकुटं देवं सूर्यसोमाग्निलोचनम् ॥ १ ॥
गजचर्मपरीधानं विरूपाक्षं सुराधिपम् ।
गणगन्धर्वयक्षेन्द्र–देवासुरनमस्कृतम् ॥ २ ॥
विहसन्तं जपन्तं च पठन्तं च मुहुर्मुहुः ।
नागाभरणभूषाढ्यं ब्रह्माच्युतनमस्कृतम् ॥ ३ ॥
उत्थाय प्रणता[1] भूत्वा पर्यपृच्छत भैरवी ।

श्रीदेव्युवाच ।

भगवंस्त्वं परो देवः सुरासुरनमस्कृतः ।
गुणी वेदान्ततत्त्वज्ञो गुणातीतश्चिदीश्वरः ॥ ४ ॥
सततं किंजपासक्तस्तत्त्वं सर्वोत्तमं प्रभो[2] ।
अद्याप्यविदितं यन्मे तत्तत्त्वं वक्तुमर्हसि ॥ ५ ॥

श्रीभैरव उवाच ।

या देवी निष्कला श्यामा निराभासा निरञ्जना ।
महाश्रीषोडशीविद्या सा राज्ञीति निगद्यते ॥ ६ ॥
सकला राज्यदा लोके विद्याराज्ञी महेश्वरी ।
देवी पञ्चदशी सैव परब्रह्मकुटुम्बिनी ॥ ७ ॥
नृणां दारिद्र्यनाशाय प्रादुर्भूताद्य भारते ।
यस्याः पञ्चदशीविद्यां गुह्यामविदितां पुरा ॥ ८ ॥

---

१ 'विनता' ख. पाठः । २ 'विभो' ख. पाठः ।

तां जपामि महाविद्यां तत्पञ्चाङ्गं स्मराम्यहम् ।

श्रीदेव्युवाच ।

भगवन् करुणाम्भोधे शरणागतवत्सल ।
या देवी लोकमातेति राज्ञी राज्यप्रदायिनी ॥ ९ ॥
दारिद्र्यहारिणी त्वद्य तत्पञ्चाङ्गं वदस्व मे ।
तत्त्वतो वेदतन्त्राढ्यं यद्यहं प्रेयसी तव ॥ १० ॥

श्रीभैरव उवाच ।

शृणुष्वावहिता भूत्वा पटलं मन्त्रविग्रहम् ।
राज्याः सर्वस्वभूतं मे रहस्यं देवदुर्लभम् ॥ ११ ॥
मन्त्रोद्धारं महादेवि राज्या मद्वदनोदितम् ।
श्रुत्वा गोपय यत्नेन येन सिद्धिः प्रजायते ॥ १२ ॥

तारं माया मानलः कामशक्ती
मध्ये चारुया भगवत्यै च राज्यै ।
मायाबीजं ठद्वयं देवि राज्या
मन्त्रोद्धारो वर्णितो गोपनीयः ॥ १३ ॥

नास्यान्तरायो न क्लेशो न विपर्ययभीः शिवे[२] ।
सर्वसिद्धिप्रदो देवि मन्त्रोऽयं भाग्यवर्धनः ॥ १४ ॥
मन्त्रमुत्कीलयेदादौ ततः सञ्जीवयेन्मनुम् ।
सिद्धं मन्त्रं जपेद् देवि ततः संपुटितं चरेत् ॥ १५ ॥
ततो मन्त्रोऽयमीशानि साक्षात् सिद्धिप्रदो भवेत् ।
यन्त्रोद्धारं प्रवक्ष्यामि सर्वाशापरिपूरकम् ॥ १६ ॥
सर्वसंपत्प्रदं चैव सर्वार्थसाधकं तथा ।
सर्वसिद्धिप्रदं चक्रं सर्वानन्दमयं तथा ॥ १७ ॥
सर्वसंमोहनं चक्रं पीठार्चायां प्रपूजयेत् ।

---

१ 'देव'. ख. पाठः । २ 'क्वचित्' ख. पाठः ।

बिन्दुस्त्र्यश्रं षडस्रं च वृत्ताष्टदलमण्डितम् ॥ १८ ॥
वृत्तत्रयं धरासद्म राज्ञीश्रीचक्रमीरितम् ।
लयाङ्गमस्य देवेशि शृणु वेदागमोद्धृतम् ॥ १९ ॥
यस्य श्रवणमात्रेण पूजायुतफलं लभेत् ।
गणेशो भीमराजश्च कुमारो जाङ्गलेश्वरः ॥ २० ॥
इन्द्राद्या लोकपालाश्च पूजनीयाश्च भूगृहे ।
वृत्तत्रयेऽभ्यर्चनीया गुरुपंक्तित्रयी शिवे ॥ २१ ॥
दिव्यसिद्धौघमर्त्यौघाः पूज्या गन्धाक्षतैः प्रिये ।
वासुकिर्नीलनागश्च तक्षकः पद्मनागकः ॥ २२ ॥
पूर्वादिदिक्षु संपूज्या विदिक्षु शृणु पार्वति ।
कार्कोटकः शङ्खपालः कुलिकः शेष ईश्वरि ॥ २३ ॥
आग्नेयक्रमतः पूज्या ब्राह्म्याद्या मातरस्तथा ।
भैरवास्त्वष्ट संपूज्या वामावर्तेन[1] पार्वति ॥ २४ ॥
ब्राह्मी च वैष्णवी चैव रुद्राणी चापराजिता ।
कौमारी चैव चामुण्डा वाराही नारसिंहिका ॥ २५ ॥
असिताङ्गो रुरुश्चण्डः क्रोधेशोन्मत्तभीषणाः ।
कपालीशश्च संहारः पूजनीया यथाक्रमम् ॥ २६ ॥
श्रीदुर्गा शारिकादेवी वैखरी च शिवा शिवे ।
कालिका त्रिपुरा चैवं[2] वामावृत्त्या षडश्रके ॥ २७ ॥
लक्ष्मीः सरस्वती बाला पूजनीयास्त्रिकोणके ।
बिन्दौ राज्यप्रदा राज्ञी विद्या पञ्चदशाक्षरी ॥ २८ ॥
भूतेश्वरं शिवं देवि खड्गं पद्मं समर्चयेत् ।
कलशं च सुधापात्रं पूजयेद्वटुकं तथा ॥ २९ ॥
योगिनीः क्षेत्रपालांश्च भूतांस्तत्र विनायकम् ।

---

१ 'येन' ग. पाठः । २ 'पूज्या' ख. पाठः ।

रामेश्वरं महेशानि लयाङ्गमिदमीरितम् ॥ ३० ॥
श्रीराज्ञीमूलमन्त्रस्य ऋषिर्ब्रह्मा समीरितः ।
गायत्री छन्द ईशानि राज्ञीदेवी च देवता ॥ ३१ ॥
माया बीजं शरच्छक्तिः कामः कीलकमीश्वरि ।
भोगापवर्गसिद्ध्यर्थे विनियोगः प्रकीर्तिता ॥ ३२ ॥
ध्यानमस्याः प्रवक्ष्यामि सात्त्विकं कामनावहम् ।
सर्वसिद्धिप्रदं देवि मन्त्रकोटिफलप्रदम् ॥ ३३ ॥

उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां
सिंहासनोपरिगतामुरगोपवीताम् ।
खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां
राज्ञीं भजामि विकसद्वदनारविन्दाम् ॥ ३४ ॥

(चतुर्भुजां चन्द्रकलार्धशेखरां
सिंहासनस्थां भुजगोपवीतिनीम् ।
पाशाङ्कुशाम्भोरुहखड्गधारिणीं
राज्ञीं भजे चेतसि राज्यदायिनीम्) ॥ ३५ ॥

अधुना देवि वक्ष्यामि प्रयोगानष्ट तत्त्वतः ।
येषा साधनमात्रेण मन्त्रः कल्पद्रुमो भवेत् ॥ ३६ ॥
स्तम्भनं मोहनं चैव मारणाकर्षणे प्रिये ।
वशीकरं तथोच्चाटं शान्तिकं पौष्टिकं तथा ॥ ३७ ॥
एतेषां साधनं वक्ष्ये प्रयोगाणां महेश्वरि ।
(१) रवौ स्नात्वा जपेन्मूलं श्मशानेऽयुतसंख्यया ॥ ३८ ॥
हुनेच्चितानले सर्पिर्मालिनीकेशसश्चयम् ।
स्तम्भनं जायते वारिचन्द्रवातार्कपाथसाम् ॥ ३९ ॥
(२) चन्द्रे तथा श्मशानस्थः शववेशधरः सुधीः ।

---

१ 'वादि' ख. पाठः ।

जपेन्मन्त्रायुतं सम्यक् कुर्याद् होमं दशांशतः ॥ ४० ॥
घृतव्रानीरशाखाभिर्लवङ्गैर्मोहनं भवेत् ।
(३) भौमे स्नात्वा[1] श्मशाने च चिताग्रे संजपेन्मनुम् ॥ ४१ ॥
हुनेद् दशांशतः सर्पिर्मीनकण्टकगोमयान् ।
शत्रुः कालसमानोऽपि मृत्युमेष्यति पार्वति ॥ ४२ ॥
(४) बुधे श्मशाने देवेशि जपेन्मन्त्रायुतं निशि ।
हुनेदाज्यं दशांशेन सचण्डालकचं प्रिये ॥ ४३ ॥
रम्भा तिलोत्तमा वापि प्रातः प्रादुर्भविष्यति ।
(५) गुरौ जपेन्मनुं देवि श्मशाने मुक्तकुन्तलः ॥ ४४ ॥
अयुतं तद्दशांशेन हुनेदाज्यं सपायसम् ।
सशरं घनसारं च भृत्यवां याति वासवः ॥ ४५ ॥
(६) शुक्रे श्मशानदेशे तु जपेदयुतसंख्यया ।
दिगम्बरो मुक्तकेशो हुनेदाज्यं च सोल्मुकम् ॥ ४६ ॥
सदूर्वाशर्करं हुत्वा रिपुमुच्चाटयिष्यति ।
(७) शनौ श्मशाननिलये जपेद्राज्ञीमनुं सुधीः ॥ ४७ ॥
अयुतं तद्दशांशेन हुनेदाज्यं सशम्बुकम् ।
समेषप्लीहचारं च शमयेदभितो भयम् ॥ ४८ ॥
(८) रवौ श्मशाने[2] संजप्य मूलं चायुतसंख्यया ।
हुनेत् कपोतमांसाज्यमाहिषं पलमद्रिजे ॥ ४९ ॥
पितॄणां देवतानां च पुष्टिदोऽयं प्रयोगकः ।
इत्येष पटलो राज्ञ्याः सर्वागमरहस्यवान् ॥ ५० ॥
अन्यशिष्याय न देयो दुर्जनाय विशेषतः ।
गुरुभक्तिविहीनाय कुचैलाय दुरात्मने ॥ ५१ ॥
अभक्तेभ्योऽपि पुत्रेभ्यो दत्त्वा निरयमाप्नुयात् ।

---

१ 'गत्वा श्मशानं' ख. पाठः । २ 'सर्ववारे तु' ख. पाठः ।

देयं शिष्याय शान्ताय गुरुभक्त्या पार्वति ॥ ५२ ॥
दीक्षिताय कुलीनाय राज्ञीभक्तिरताय च ।
इदं रहस्यं परमं तव भक्त्या मयोदितम् ।
गुह्यं गोप्यतमं लोके गोपनीयं स्वयोनिवत् ॥ ५३ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीमहाराज्ञीपटलम् ॥ १ ॥

अथ

# श्रीमहाराज्ञी-पूजापद्धतिः ।

——*——

श्रीभैरव उवाच ।

अधुना देवि वक्ष्येऽहं पद्धतिं गद्यरूपिणीम् ।[1]
श्रीराज्ञीनित्यपूजायास्तत्त्वतः सौख्यदायिनीम् ॥ १ ॥
प्रातःकृत्यमकृत्वा तु यो देवीं भक्तितोऽर्चयेत् ।
तस्य पूजा तु विफला शौचहीना यथा क्रिया ॥ २ ॥

तत्र श्रीमान्साधको ब्राह्म्ये मुहूर्ते शयनतलात् उत्थाय करचरणादि प्रक्षाल्य निजासने बद्धपद्मासनः समुपविश्य स्वशिरःस्थसहस्राराधोमुखकमलकर्णिकान्तर्गतं निजगुरुं स्वशक्त्या सहितं ध्यात्वा मानसैरुपचारैः संपूज्य दण्डवन्नत्वा, तत्र सशिवां देवीं ध्यात्वा मूलं यथाशक्त्या जप्त्वा जपं गुरवे समर्प्य तदाज्ञां गृहीत्वा बहिरागत्य

---

१ 'अधुना पद्धतिं वक्ष्ये श्रीराज्ञ्यर्चनसंयुताम् ।
गद्यपद्यमयीं गोप्यां सकलागमानिश्रिताम् ॥' ख. पाठः ।

मलादिशोधनं विधाय नद्यादौ गत्वा वर्णोक्तं शौचं कृत्वा, "ओंक्लीं कामदेवाय सर्वजनप्रियाय नमः" इति दन्तान्विशोध्य मलापकर्षणं स्नानं कृत्वा; मृत्त्रयं मूलेन संशोध्य जले श्रीचक्रं योनिचक्रं वा विभाव्य, तत्र "गांगीं गङ्गे च यमुने चैव" इत्यादिनाङ्कुशमुद्रया तीर्थान्यावाह्य, तत्र "बालार्ककोटिसदृशे भूतेश्वरसमन्विते । महापञ्चदशीविद्ये जलेऽस्मिँस्त्वमिहावह ॥" इत्यावाहनादिमुद्राः प्रदर्श्य, मृदमङ्गे विलिप्य मूलमुच्चार्य कुम्भमुद्रया जले त्रिवारं पुनर्मज्जेत् । ततो "ओंह्रांह्रींसः सूर्याय एष तेऽर्घो नमः ॥" इत्यर्घ्यत्रयं दत्त्वा, मूलं यथाशक्त्या जप्त्वा वाससी परिधाप्य, वैदिकीं संध्यां निर्वर्त्य तान्त्रिकीं कुर्यात् । तत्र मूलषडङ्गं विधाय वामहस्ते जलं निधाय पञ्चभूतमन्त्रेण यंरंवंलंहं सप्तधाभिमन्त्र्य, तत्त्वमुद्रयाच्छाद्य मूलमुच्चरंस्तद्गलितोदकबिन्दुभिः सप्तवारं शिरः प्रोक्ष्य, दक्षिणहस्ते धृत्वा इडया देहान्तर्नीत्वा पापं प्रक्षाल्य, तज्जलं पिङ्गलया विरिच्य वामहस्ते तज्जलं सकलुषं वामभागस्थशिलायां फडिति निःक्षिपेत् । इत्यघमर्षणं कृत्वा, प्रणवमायाभ्यां प्राणायामत्रयं कृत्वा, ओंह्रीं आत्मतत्त्वं शोधयामि स्वाहा । ओंह्रीं विद्यातत्त्वं शोधयामि स्वाहा । ओंह्रीं शिवतत्त्वं शोधयामि स्वाहा । इत्याचम्य, षडङ्गन्यासं ओंह्रीं इत्यादिना विधाय गायत्रीं जपेत् । ओं राज्यप्रदायै विद्महे ह्रीं पञ्चदशाक्षर्यै धीमहि श्रीं तन्नो महाराज्ञी प्रचोदयात् ३ । गायत्रीं मूलविद्यां च जप्त्वा, गायत्र्या श्रीमहाराज्ञीभूतेश्वराभ्यामिदमर्घ्यं स्वाहा इत्यर्घ्यत्रयं दत्त्वा, पुनर्जले योनिचक्रं विभाव्य मूलं सप्तधोच्चार्य 'श्रीसाङ्गा सवाहना सायुधा सपरिच्छदा भूतेश्वरसहिता श्रीमहाराज्ञी तृप्यतां' इति सप्तवारं सन्तर्प्य, भूतेश्वरं पृथक् त्रिः सन्तर्प्य, परिवारान् प्रणवमायाभ्यां सकृत् सन्तर्प्य, गुरुपरमगुरुपरमेष्ठिगुरून् पितॄँश्च सन्तर्प्य, पूर्ववत् सूर्यायार्घ्यत्रयं दत्त्वा पुनर्देवदेव्यौ हृदि समानीय, तीर्थं विसृज्य यागगृहमागच्छेदिति संध्याविधिः ॥

तत्र पादौ प्रक्षाल्य ओंह्रींइति द्वारदेवता गणेश-वटुक-क्षेत्रेश-योगिनी-गङ्गा-सरस्वती-देहली-द्वारश्रियोऽभ्यर्च्य, वामस्कन्धेन द्वारशाखे स्पृष्ट्वा मण्डपान्तः प्रविश्य विष्टरशुद्धिं कुर्यात् । ओंआं आसनशोधनमन्त्रस्य, मेरुपृष्ठ ऋषिः, सुतलं छन्दः, कूर्मो देवता, आसनशोधने विनियोगः । प्रीं पृथिव्यै नमः । महि त्वया धृता लोका

दावे त्वं विष्णुना धृता । त्वं च धारय मां लोके पवित्रं कुरु चासनम् ॥ ॐ आं आधारशक्त्यै नमः । कूर्माय नमः । अनन्ताय नमः । अष्टदलपद्माय नमः । सहस्रदलपद्माय नमः । तत्रोपविश्य , अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूता विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ इति तालत्रयं दत्त्वा भौमान् विघ्नानुत्सार्य , नाराचमुद्रां प्रदर्श्य , भूताः प्रेताः पिशाचाश्च राक्षसाश्च सरीसृपाः । अपसर्पन्तु ते सर्वे देव्यस्त्रेण तु पीडिताः ॥ इति वामपार्ष्णिघातत्रयं दत्त्वा गुरुं प्रणमेत् । अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया । चक्षुरुन्मीलितं येन तस्मै श्रीगुरवे नमः ॥ ॐ गुरुभ्यो नमः । ॐ परमगुरुभ्यो नमः । ॐ परापरगुरुभ्यो नमः । परमेष्ठिगुरुभ्यो नमः । इति संपूज्य ।

अस्य श्रीमहाराज्ञीमन्त्रस्य, ब्रह्मा ऋषिः, गायत्रं छन्दः, श्रीभूतेश्वरीमहाराज्ञीदेवता , ह्रींबीजं , सौःशक्तिः , क्लींकीलकं , चतुर्वर्गपुरुषार्थसिद्धये विनियोगः । ब्रह्मऋषये नमः शिरसि, गायत्रीच्छन्दसे नमो मुखे , राज्ञीदेवतायै नमो हृदि , ह्रींबीजाय नमो नाभौ , सौःशक्त्ये नमो गुह्ये , क्लींकीलकाय नमः पादयोः, पूजायां विनियोगाय नमः सर्वाङ्गेषु । ॐह्रामङ्गुष्ठाभ्यां नमः । ॐह्रींतर्जनीभ्यां नमः । ॐह्रूंमध्यमाभ्यां नमः । ॐह्रैंअनामिकाभ्यां नमः । ॐह्रौंकनिष्ठिकाभ्यां नमः । ॐह्रः करतलपृष्ठाभ्यां नमः । इति करन्यासः । एवं षडङ्गन्यासः ।

इत्थं न्यासं विधाय भूतशुद्धिं कुर्यात् । ॐह्रीं इत्याधारात् कुण्डलिनीं प्रदीपकलिकाकारां सुषुम्नामार्गेण ब्रह्मपथान्तर्नीत्वा परमशिवं प्रापय्य तयोः सामरस्यं विधाय , तदुद्भूतानन्दामृतधारया कुलगुरून् सन्तर्प्य , पुनः षट्चक्रं भित्त्वा स्वस्थानमानीय , वामकुक्षौ पापपुरुषमङ्गुष्ठमात्राकारं कृष्णवर्णं रक्तश्मश्रुलं ध्यात्वा प्राणायामयोगेन शोषणादि कुर्यात् । आदौ यमिति वायुबीजेन षोडशवारजप्तेन शोषयेत् । रमित्यग्निबीजेन षोडशवारजप्तेन दाहयेत् । वमिति वरुणबीजेन षोडशवारजप्तेनाप्लावयेत् । लमिति भूबीजेन षोडशधा जप्तेन देहं दृढं विचिन्त्य , हमित्याकाशबीजेन षोडशधा जप्तेन स्वात्मानं दिव्यदेहमुत्पाद्य प्राणप्रतिष्ठां कुर्यात् ।

ॐह्रींआंक्रोंसोहंहंसः मम प्राणा इह प्राणाः ८ मम जीव इह

स्थितः ८ मम वाङ्मनश्चक्षुः श्रोत्रजिह्वाघ्राणप्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा , इति प्राणप्रतिष्ठां विधाय पूर्ववत् प्राणायामं कृत्वा , तत्त्वत्रयेणाचम्य न्यासं कुर्यात् । ओंनमो ब्रह्मरन्ध्रे , ह्रीं शिरसि , श्रीं- नेत्रयोः , रां कर्णयोः , क्लीं नासाग्रे , सौः मुखे , भं कण्ठे , गं भुजयोः , वं वक्षसि , त्यैं कुक्षौ , रां नाभौ , श्यै गुह्ये , ह्रीं जान्वोः , स्वां जङ्घयोः , हां नमः सर्वाङ्गेषु । इति मूलमन्त्रन्यासः ॥

ओंह्रांश्रां हृदयाय नमः । ओंह्रींश्रीं शिरसे स्वाहा । ओंह्रूंश्रूं शिखायै वषट् । ओंह्रैंश्रैं कवचाय हुं० । ओंह्रौंश्रौं नेत्राभ्यां वौषट् । ओंह्रःश्रः अस्त्राय फट् । ओंरां हृदयाय० , अङ्गुष्ठाभ्यां नमः । ओंरीं शिरसे० , तर्जनीभ्यां नमः । ओंरूं शिखायै० , मध्यमाभ्यां नमः । ओंरैं कवचाय० , अनामिकाभ्यां० । ओंरौं नेत्राभ्यां० , कनिष्ठिकाभ्यां० । ओंरः अस्त्रायफट् , करतलपृष्ठाभ्यां नमः ॥ ओंसौःक्लां अङ्गुष्ठाभ्यां नमः । ओंसौःक्लीं तर्जनीभ्यां० । ओंसौःक्लूं मध्यमाभ्यां० , ओंसौःक्लैं अनामिकाभ्यां० । ओंसौःक्लौं कनिष्ठिकाभ्यां० । ओंसौःक्लः करतलपृष्ठाभ्यां नमः । एवं हृदयादि षडङ्गन्यासः ॥

ओंह्रीं जालन्धरपीठाय नमो मूलाधारे । ओंश्रीं उड्डीयानपीठाय नमः स्वाधिष्ठाने । ओंरां कामरूपपीठाय नमः अनाहते । ओंक्लीं मधुपुरी पीठाय नमो मणिपूरे । ओंसौःवाराणसीपीठाय नमो विशुद्धौ । ओंह्रीं अनन्तपीठाय नमः आज्ञायां । ओंस्वाहा शारदापीठाय नमो ब्रह्मरन्ध्रे । इति पीठन्यासः ॥

ओंअकं५आं हृदयाय नमः । ओंह्रींइचं५ई शिरसे स्वाहा । ओंश्रींउटं५ऊ शिखायै वषट् । ओंरांएतं५ऐं कवचाय हुं । ओंक्लींओपं५औं नेत्रत्रयाय वौषट् । ओंसौःअयं१०अः अस्त्राय फट् । एवं करन्यासः ॥ इति शुद्धमातृकान्यासः ॥

ततो मातृकान्यासं च कृत्वा , ओं आत्मतत्त्वाय हृदयाय नमः । ह्रीं विद्यातत्त्वाय शिरसे० । श्रीं शिवतत्त्वाय शिखायै० । रां शक्तितत्त्वाय कवचाय० । क्लीं शिवतत्त्वाय नेत्रेभ्यो० । सौः सर्वतत्त्वाय अस्त्राय फट् । एवं करन्यासः , इति तत्त्वन्यासः ॥ ओंह्रामिति पूर्ववत् षडङ्गं विधाय कामकलारूपं स्वात्मानं विचिन्त्य , हृत्कर्णिकायां श्रीभूतेश्वराङ्कगतां श्रीमहाराज्ञीं विचिन्त्य मानसैरुपचारैः संपूज्य , बहिः श्रीचक्रं बिन्दु- बिम्बोल्लसित-त्रिकोणविराजमान -षडश्रशोभित-वसुदलालङ्कृत -वृत्तत्रयो-

द्भासित-चतुर्द्वारोपशोभितं विलिख्य वा संस्थाप्य योगपीठं परिक-
ल्प्य योगपीठपूजां कुर्यात् । ऊँह्रीं मण्डूकाय नमः । २ कालाग्निरुद्राय० ।
२ मूलप्रकृतये नमः । २ आधारशक्त्यै० । २ वराहाय० । २ कूर्मा-
य० । २ अनन्ताय० । २ पृथिव्यै० । २ सुधाम्बुधये० । मध्ये २ सुव-
र्णद्वीपाय० । २ कल्पवनाय० । मध्ये २ मणिगेहाय० । रत्नवेदिकायै० ।
तन्मध्ये २ चिन्तामणिमण्डपाय० । तत्र २ श्मशानाय० । २ धर्मज्ञान-
वैराग्यैश्वर्येभ्यो० । तद्वामे २ अधर्माज्ञानावैराग्यानैश्वर्येभ्यो० । त-
दुपरि २ रं वह्निमण्डलाय नमः । २ अं अर्कमण्डलाय० । २ सौं सो-
ममण्डलाय० । २ तं तमसे० । २ रं रजसे० । २ सं सत्त्वाय० । मूलं
सहस्रदलकमलाय० । संविन्नालाय० । प्रकृतिमयपत्रेभ्यो० । विकृतिम-
यकेसरेभ्यो० । पञ्चाशद्बीजभूषितकर्णिकायै० । मूलं मातृकामुच्चार्य
श्रीयोगपीठाय नमः । इत्यक्षतपुष्पैरभ्यर्च्य , श्रीयोगपीठोपरि श्रीचक्रं
( संस्थाप्य वा ) विभाव्य , आत्मश्रीचक्रयोर्मध्ये पात्रार्चनं कुर्यात् ।
तत्र स्ववामे वृत्तषट्कोणचतुरश्रं मण्डलं विलिख्य मूलेन षडङ्गेनार्चां
विधाय , " ऊँह्रींश्रींमहाराज्ञीभगवती—सामान्यार्घ्यमण्डलाय नमः " ।
इत्यक्षतैरभ्यर्च्य , " रंवह्निमण्डलाय दशकलात्मने नमः " इत्यक्षतैर-
भ्यर्च्य , तत्राधारं संस्थाप्य , " अं अर्कमण्डलाय द्वादशकलात्मने
नमः " इत्यभ्यर्च्य , विलोममातृकया शङ्खं संपूर्य " तत्र सौंः सोम-
मण्डलाय षोडशकलात्मने नमः " इत्यभ्यर्च्य , तत्र सूर्यमण्डलादङ्कु-
शमुद्रया तीर्थानि , " गङ्गे च यमुने चैव " इत्यादिनावाह्य , शुद्धं
भावयेदिति सामान्यार्घ्यविधिः ॥

सामान्यार्घ्यस्य वामे त्रिकोणषट्कोणवृत्तचतुरश्रं मण्डलं विधाय
षडङ्गेनाभ्यर्च्य , मूलविद्यामुच्चार्य "श्रीराज्ञीकलशमण्डलाय नमः" त-
त्राधारं संस्थाप्य , " रं वह्निमण्डलाय दशकलात्मने नम " इति सं-
पूज्य , तत्राक्षालितकलशं संस्थाप्य , " अं अर्कमण्डलाय द्वादशक-
लात्मने नमः " इति संपूज्य , तत्रानामिकाङ्गुष्ठाभ्याममृतधारापातेन
कलशमापूर्य , तत्र " सौंः सोममण्डलाय षोडशकलात्मने नमः " इति
पुष्पाक्षतैः संपूज्य , " ऊँह्रींश्रींरांरींरूंरैंरौंरः अमृते अमृतोद्भवे अमृ-
तवर्षिणि अमृतं स्रावय २ शुक्रशापं मोचय २ ऊँह्रींश्रींसुरादेव्यै वौ-

षट्" इति त्रिरभिमन्त्र्य मूलं दशधा जप्त्वा, आनन्देश्वराय विद्महे सुरादेव्यै धीमहि तन्नोऽर्धनारीश्वरः प्रचोदयात् ३। इति त्रिरानन्दभैरवगायत्रीं जप्त्वा ह्सक्षमलवरयऊं आनन्दभैरवाय वौषट्, सहक्षमलवरयऊं आनन्दभैरवीसुरादेवीपादुकाभ्यो नमः इति संपूज्य, ॐ ह्रीं सूर्यमण्डलसंभूते वरुणालयसंभवे। अमाबीजमये देवि शुक्रशापाद्विमुच्यताम्॥ ॐह्रीं वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि। तेन सत्येन देवेशि ब्रह्महत्या विहन्यतु। ॐह्रीं एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम्। कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम्॥ ॐ ह्रीं पावमानः परानन्दः पवमानः परोरसः। पवमानं परं ज्ञानं तेन ते पावयाम्यहम्॥ ॐ ह्रीं कृष्णशापविनिर्मुक्ता त्वं मुक्ता ब्रह्मशापतः। विमुक्ता रुद्रशापेन पवित्रा भव सांप्रतम्॥ इति संपूज्य, मूलं त्रिधा जपन् द्रव्योपरि धेनुयोनिमत्स्यमुद्राः प्रदर्श्य, कुम्भं पूर्णमित्युक्त्वा सुधामयं ध्यात्वा तत्त्वमुद्रयाच्छादयेदिति द्रव्यशुद्धिः॥

ॐ ह्रीं कृतावतारो हरिणा कलिना पीडितं जगत्। बलिना निगृहीतं तु कौलिकानां हिताय च॥ भवानीपरितोषार्थं स्वयं मीनोऽभवत् प्रभुः॥ मीनोपरि मूलं त्रिधा जपन् मुद्रात्रयं प्रदर्श्य, ॐ ह्रीं छागलादिगवान्तादिकृतरूपाय वै नमः। बल्यर्थं देवदेव्योश्च पवित्री भव सांप्रतम्॥ इति, ॐ ह्रीं राज्ञीयन्त्रार्चनाकाले यानि यानीह सिद्धये। वस्तूनि सौरभेयानि पवित्राणीह सांप्रतम्॥ मूलं त्रिधा जपन् मुद्रात्रयं प्रदर्श्य, कलशादुत्तरतः पाद्यार्घ्यमधुपर्काचमनीयपात्राणि संस्थाप्य गुरुशक्तिवटुकसाधकपात्राणि च संस्थाप्य सामान्यार्घ्यवत् संपूज्य श्रीचक्रं पूजयेदिति पात्रस्थापनम्॥

तत्र हृदयकमलाद्भूतेश्वराङ्कोपविष्टां श्रीराज्ञीं सुषुम्नामार्गेण बहिरानीय श्रीचक्रबिन्दुपीठोपरि संस्थाप्य, तत्रावाहनादिमुद्राः प्रदर्श्य खड्गपद्मकलशामृतपात्रमुद्राः प्रदर्श्य, मूलेन प्राणप्रतिष्ठामन्त्रेण प्राणान् दत्त्वा, मू० श्रीभूतेश्वरभूतेश्वरीभ्यां पाद्यार्घ्याचमनीयादि परिकल्पयामि नमः। मू० भूतेश्वरभूतेश्वरीभ्यां मधुपर्काचमनीयगन्धाक्षतपुष्पादीन् परिकल्पयामि नमः। मूलेन नैवेद्याचमनीयताम्बूलादि समर्प्य, मूलषडङ्गं विधाय भैरवाज्ञां गृहीत्वा, देवदेव्यौ नुत्वा परिवारदेवीर्विचिन्त्य दण्डवत्प्रणिपत्य चतुरश्रे पूजयेत्।

ऊँह्रींसर्वाशापरिपूरकचक्राय नमः। इति पुष्पाञ्जलिं दत्त्वा, ऊँह्रीं-गांगणेश्वरश्रीपादुकां पूजयामि नमः तर्पयामि नमः। २ भैंभीमराजश्रीपादुकां पूजयामि नमस्तर्पयामि नमः। ऊँ २ ह्रौंकुमारश्रीपादुकां पू०। ऊँ २ जुंजाङ्गलेश्वरश्रीपादुकां० इति। तत्रैव दिग्विदिक्षुः। ऊँ २ इन्द्रश्री०। ऊँ २ अग्निश्री०। ऊँ २ धर्मराजश्री०। ऊँ २ निर्ऋतिश्री०। ऊँ २ वरुणश्री०। ऊँ २ वायुश्री०। ऊँ २ कुबेरश्री०। ऊँ २ ईशानश्री०। ऊर्ध्वे ऊँ २ ब्रह्मश्री०। अधः ऊँ २ अनन्तश्री०। इति गन्धाक्षतैर्वामावर्तेन संपूजयेदिति। पुनस्तत्रैव—ऊँ २ वज्रश्री०। ऊँ २ शक्तिश्री०। ऊँ २ दण्डश्री०। ऊँ २ खड्गश्री०। २ पाशश्री०। ऊँ २ ध्वजश्री०। ऊँ २ गदाश्री०। ऊँ २ त्रिशूल०। २ पद्मश्री०। ऊँ २ चक्रश्री०। इति पुष्पाक्षतैरर्चयेदिति प्रथमावरणम्॥

ततो वृत्तत्रये ऊँह्रींसर्वसंपत्प्रदचक्राय नमः इति पुष्पाञ्जलिं दत्त्वा, ऊँह्रींगुरुश्रीपादुकां०। ऊँ २ परमगुरुश्री०। ऊँ २ परापरगुरुश्री०। ऊँ २ परमेष्ठिगुरुश्री०। इति गन्धाक्षतैरभ्यर्चयेदिति द्वितीयावरणम्॥

ततो वसुदले। ऊँह्रींसर्वार्थसाधकचक्राय नमः इति पुष्पाञ्जलिं दत्त्वा, ऊँह्रींवासुकिश्रीपादुकां०। ऊँ २ नीलनागश्री०। ऊँ २ तक्षकश्री०। ऊँ २ पद्मनागश्री०, इति पूर्वादिदिक्षु, ऊँ २ कार्कोटकश्री०। ऊँ २ शङ्खपालश्री०। ऊँ २ कुलिकश्री०। ऊँ २ शेषनागश्री०। इति विदिक्षु गन्धाक्षतैरभ्यर्चयेदिति। तत्रैव ऊँह्रींअसिताङ्गभैरवयुतब्राह्मीश्री०। ऊँ २ रुरुभैरवयुतवैष्णवीश्री०। ऊँ २ चण्डभैरवयुतरुद्राणीश्री०। ऊँ २ क्रोधभैरवयुतापराजिताश्री०। ऊँ २ उन्मत्तभैरवयुतकौमारीश्री०। ऊँ २ भीषणभैरवयुतचामुण्डाश्री०। ऊँ २ कपालिभैरवयुतवाराहीश्री०। ऊँ २ संहारभैरवयुतनारसिंहिकाश्री०। इति वसुदले वामावर्तेन गन्धाक्षतपुष्पैरभ्यर्चयेदिति तृतीयावरणम्॥

ततः षट्कोणे। ऊँह्रींसर्वसिद्धिप्रदाय श्रीचक्राय नमः इति पुष्पाञ्जलिं दत्त्वा, वामावर्तेन। ऊँह्रीं दुर्गाश्री०। ऊँ २ शारिकाश्री०। ऊँ २ वैखरीश्री०। ऊँ २ शिवाश्री०। ऊँ २ कालिकाश्री०। ऊँ २ त्रिपुराश्री०। इति गन्धाक्षतैरभ्यर्चयेदिति चतुर्थावरणम्॥

ततस्त्रिकोणे ईशानाग्नेयाग्रतो । ओंह्रींसर्वसंमोहनचक्राय नमः इति पुष्पाञ्जलिं दत्त्वा, ओंह्रीं लक्ष्मीश्री० । २ सरस्वतीश्री० । २ बालाश्री० । इति गन्धपुष्पाक्षतैरभ्यर्चयेदिति पञ्चमावरणम् ॥

ततो बिन्दौ । ओंह्रींसर्वानन्दमयचक्राय नमः इति पुष्पाञ्जलिं दत्त्वा मूलविद्यां सप्तवारमुच्चार्य ओंह्रीं श्रीभूतेश्वरभूतेश्वरीश्रीपादुकां० । मूलं श्रीमहाराज्ञीश्री० । २ श्रीराज्यप्रदाश्री० । २ पञ्चदशाक्षरीश्री० । २ भूतेश्वरश्री० । २ खड्गश्री० । २ पद्मश्री० । २ कलशश्री० । २ सुधापात्रश्री० । इति गन्धपुष्पाक्षतैः पूजयेदिति षष्ठावरणम् ॥

भैरवचक्रे मूलं भूतेश्वरभूतेश्वरीभ्यां गन्धाक्षतपुष्पधूपदीपाचमनीयनैवेद्यताम्बूलच्छत्रचामरारात्रिकादीन् निवेद्य, नैवेद्यं च "अमृतोपस्तरणमसि स्वाहा" इति। बलिमुत्सृजेत्, ओंह्रींदेवीपुत्रवटुकनाथ कपिलजटाभारभास्वर त्रिनेत्र ज्वालामुख इमं बलिं पूजां गृह्ण२ मम वाञ्छितां सिद्धिं देहि २, इति दक्षिणे । ओं यांयींयूं योगिनीगणेभ्यो नमः स्वाहा इत्युत्तरे । ओंह्रींक्षांक्षीं ओंह्रींश्रींक्षेत्रपालाय रामेश्वराय वौषट् इति पश्चिमे । ओंगांग्लांगणपतये नमः इति पूर्वे । ओंसौः सर्वविघ्नकृद्भ्यो भूतेभ्यः स्वाहा, इति बलिमुत्सृज्य निर्ऋतिदिशि संस्थाप्य, पूर्ववन्मन्त्रसंकल्पं विधाय मूलषडङ्गं कृत्वा देवीं ध्यात्वा मालामभ्यर्च्य दक्षिणहस्ते धृत्वा यथाशक्त्या मूलविद्यां जपेत् । ततो "गुह्यातिगुह्यगोप्त्री त्वं" इत्यादिना जपं देव्या हस्ते समर्प्य तेजोरूपं जपफलं गृहीत्वा, देवदेव्योरग्रतः कवच - सहस्रनाम - स्तवपाठं विधाय तदपि समर्प्य, प्रातःप्रभृतिसायान्तं सायादिप्रातरन्ततः । यत्करोमि जगन्मातस्तदस्तु तव पूजनम् ॥ इति पुष्पाञ्जलिं दत्त्वा योनिमुद्रया प्रणम्य, संहारमुद्रया देवदेव्यौ पुष्पेण नासाग्रमानीय हृत्कमलकर्णिकायां प्रापयित्वा, देवीरूपोऽहं सोऽहमिति विचिन्त्य स्वशक्त्या सह सुखं विहरेत् । पात्रार्पणं कृत्वा च राज्ञीकृतविग्रहो भूत्वानन्दकृतं स्वात्मानं विभावयेदिति नित्यपूजाविधिः ॥

इत्येषा नित्यपूजायाः पद्धतिर्गद्यरूपिणी ।
राज्ञीसर्वस्वरूपा हि न देया तत्त्ववादिभिः ॥
श्रीराज्ञ्याः पद्धतिर्गुह्या नित्यार्चनक्रमाङ्किता ।

गुह्यातिगुह्यतत्त्वाढ्या गोपनीया मुमुक्षुभिः ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीमहाराज्ञी—नित्यपूजापद्धतिः ॥२॥

अथ

# श्रीमहाराज्ञीकवचम् ।

श्रीभैरव उवाच ।

शृणु देवि प्रवक्ष्यामि राज्ञीकवचमुत्तमम् ।
त्रैलोक्यविजयं नाम दिव्यं भोगापवर्गदम् ॥ १ ॥
मूलमन्त्रमयं मुख्यमष्टसिद्धिप्रदायकम् ।
सर्वैश्वर्यप्रदं लोके सर्वागमविनिश्चितम् ॥ २ ॥
पठनाद् धारणाद् देवि महापातकनाशनम् ।
महोत्पातप्रशमनं मूलविद्यामनोहरम् ॥ ३ ॥
विरूपाक्षः शिवो देवि विष्णुर्नारायणो बली ।
ब्रह्मा पितामहो लोके जिष्णुर्गीर्वाणनायकः ॥ ४ ॥
महोनिधिस्तथा सूर्यस्तारकाधिपतिः शशी ।
रत्नाकरश्च जलधिः शेषश्चानन्ततां गतः ॥ ५ ॥
श्रीराज्ञ्याः कवचस्यास्य पठनाद् धारणात् सदा ।
बहुनोक्तेन देवेशि कवचस्यास्य धारणात् ॥ ६ ॥
मर्त्योऽप्यमरतां याति राज्ञीपदमवाप्नुयात् ।

ऋषिरस्य महादेवि ब्रह्मा च्छन्दः समीरितम् ॥ ७ ॥
गायत्री देवता राज्ञी माया बीजमुदाहृतम् ।
शरच्छक्तिः कीलकं च कामराजः सुरेश्वरि ॥ ८ ॥
भोगापवर्गसिद्ध्यर्थे विनियोग इति स्मृतः ।

अस्य श्रीमहाराज्ञीत्रैलोक्यविजयकवचस्य, श्रीब्रह्मा ऋषिः, गायत्री छन्दः, श्रीमहाराज्ञी देवता, ह्रीं बीजं, सौः शक्तिः, क्लीं कीलकं, भोगापवर्गसिद्ध्यर्थे विनियोगः । ब्रह्मऋषये नमः शिरसि । गायत्रीछन्दसे नमो मुखे । महाराज्ञीदेवतायै नमो हृदि । ह्रीं बीजाय नमो नाभौ । सौः शक्तये नमो गुह्ये । क्लीं कीलकाय नमः पादयोः । विनियोगाय नमः सर्वाङ्गेषु । ॐ ह्रामित्यादिषड्दीर्घयुक्तमायाबीजेन कराङ्गन्यासं कृत्वा ध्यायेत् ।

उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां
सिंहासनोपरिगतामुरगोपवीताम् ।
खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां
राज्ञीं भजामि विकसद्वदनारविन्दाम् ॥ १ ॥
चतुर्भुजां चन्द्रकलार्धशेखरां
सिंहासनस्थां भुजगोपवीतिनीम् ।
पाशाङ्कुशाम्भोरुहखड्गधारिणीं
राज्ञीं भजे चेतसि राज्यदायिनीम् ॥ २ ॥

ॐ लक्ष्मीर्मे शिरः पातु ह्रीं ललाटं सरस्वती ।
श्रीं बाला पातु मां नेत्रे त्र्यश्रं पातु श्रुती मम ॥ ९ ॥
रां दुर्गा पातु मे नासां क्लीं मुखं पातु शारिका ।
सौः कण्ठं वैखरी पातु भं भुजौ पातु मे शिवा ॥ १० ॥
गं हस्तौ पातु मे काली वं वक्षस्त्रिपुरावतु ।
षडश्रं पातु मे मध्यं वृत्तं पार्श्वौ ममावतु ॥ ११ ॥
त्वैं पृष्ठं पातु मे ब्राह्मी रां नाभिं पातु वैष्णवी ।

ऐं गुदं पातु रुद्राणी ह्रीं कटिं मेऽपराजिता ॥ १२ ॥
स्वां कौमारी पातु जानू हां जङ्घेऽवतु चण्डिका ।
स्वाहा गुल्फौ च वाराही ॐ पादौ नारसिंहिका ॥ १३ ॥
विस्मारितं च यत् स्थानं यत् स्थानं नामवर्जितम् ।
तत् सर्वं पातु मे राज्ञी मूलविद्यामयी परा ॥ १४ ॥
वासुकिः पूर्वतः पातु नीलनागोऽनलेऽवतात् ।
तक्षको दक्षिणे पातु नैर्ऋते पद्मनागकः ॥ १५ ॥
कार्कोटकः पश्चिमेऽव्याच्छङ्खपालस्तु वायुगे[1] ।
कुलिकश्चोत्तरे पातु शेष ईशानमण्डले ॥ १६ ॥
ब्राह्मी ब्राह्ममुहूर्तेऽव्याद् दिनादौ वैष्णवी मम ।
रुद्राणी पातु मध्याह्ने सायं पात्वपराजिता ॥ १७ ॥
निशादौ पातु कौमारी निशीथे चण्डिकावतु ।
निशान्ते पातु वाराही सर्वदा नारसिंहिका ॥ १८ ॥
असिताङ्गः क्षितेः पातु पयसो रुरुभैरवः[2] ।
चण्डो मां पवनात् पातु क्रोधेशः पातु मानलात् ॥ १९ ॥
उन्मत्तः सोमतः पातु भीषणः सूर्यतोऽवतु ।
याजकाच्च कपालीशो व्योम्नः संहारकोऽवतात् ॥ २० ॥
सदा समन्ततः पातु वपुर्वसुदलं मम ।
गुरवः पान्तु सर्वत्र दिगीशाः पान्तु सर्वतः ॥ २१ ॥
वृत्तत्रयं पातु नित्यं धरागेहं सदावतु ।
श्रीचक्रं पातु भीतिभ्यो योगिन्यः पान्तु सर्वदा[3] ॥ २२ ॥
ऊर्ध्वं चाधः सदा[4] पातु देवो रामेश्वरः शिवः ।
सर्वत्र सर्वदा सत्यं वपुर्भूतेश्वरोऽवतात् ॥ २३ ॥

---

१ 'वायव्यां शङ्खपालकः' ख. पाठः । २ 'रुरुर्मां पातु पाथसः' ख. पाठः ।
३ 'सर्वतः' ख. पाठः । ४ 'तथा' ख. पाठः ।

पादादिमूर्धपर्यन्तं वपुः सर्वत्र मेऽवतु ।
शिरसः पादपर्यन्तं राज्ञी पञ्चदशाक्षरी ॥ २४ ॥
इतीदं कवचं राज्ञ्या मन्त्रगर्भं जयावहम् ।
त्रैलोक्यविजयं नाम दारिद्र्यभयनाशनम् ॥ २५ ॥
सर्वरोगहरं साक्षात् सिद्धिदं पापनाशनम् ।
महाभयहरं देवि मूलविद्यामयं परम् ॥ २६ ॥
परमार्थप्रदं नित्यं भोगमोक्षैककारणम् ।
यः पठेत् कवचं देवि रणे राजभये क्षणात् ॥ २७ ॥
संग्रामेषु रिपूञ्जित्वा विजयी गृहमेष्यति ।
पठनात् कवचस्यास्य राजकोपः प्रशाम्यति ॥ २८ ॥
द्यूते धनं लभेद् द्यूती श्मशाने सिद्धिमाप्नुयात् ।
त्रिवारं यः पठेद्रात्रौ रेतःस्रावे महेश्वरि ॥ २९ ॥
तस्य राज्ञी महाविद्या स्वप्नेऽभीष्टप्रदा भवेत् ।
स्वयम्भूकुसुमैः[1] शुद्धै रेतसा चोभयाङ्कितैः ॥ ३० ॥
रसैर्भूर्जे लिखेद्वर्म रवौ प्रातर्महेश्वरि ।
चीनतन्तुभिरव्यक्तं लाक्षया वेष्टितं तथा ॥ ३१ ॥
सुवर्णगुटिकान्तःस्थं पूजयेद्यन्त्रराजवत्[2] ।
गुटिकैषा महाविद्या[3] राज्ञी मूर्तिरिवापरा ॥ ३२ ॥
मूलविद्यामयी देवि सर्वाभीष्टफलप्रदा ।
शिरःस्था धनदा देवि कण्ठस्था वाक्प्रदायिनी ॥ ३३ ॥
वक्षःस्था पुत्रदा देवि कटिस्था भोगदायिनी ।
पृष्ठस्था बलदा नित्यं कुक्षिस्था रोगनाशिनी ॥ ३४ ॥
सर्वार्थसाधिनी लोके यथाभीष्टफलप्रदा ।
गुटिकेयं शुभा राज्ञ्या न देया यस्य कस्यचित् ॥ ३५ ॥

---

१ 'स्वयं' ख. पाठः । २ 'पूजितं' ख. पाठः । ३ 'दिव्या' ख. पाठः ।

इदं कवचमीशानि मूलविद्यामयं ध्रुवम् ।
सारस्वतप्रदं लक्ष्मीपुत्रपौत्रविवर्धनम् ॥ ३६ ॥
आयुष्करं पुष्टिकरं श्रीकरं च यशस्करम् ।
चतुष्षष्ट्यादितन्त्राणां सारमादाय वर्णितम् ॥ ३७ ॥
श्मशाने यः पठेत् सायं महाचीनक्रमेश्वरः[1] ।
स साधको महादेवि राज्ञीपुत्रो भविष्यति ॥ ३८ ॥
इतीदं मम सर्वस्वं त्रैलोक्यविजयाभिधम् ।
कवचं मन्त्रगर्भं तु गोपनीयं स्वयोनिवत् ॥ ३९ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीमहाराज्ञ्यास्त्रैलोक्यविजयं नाम कवचम् ॥ ३ ॥

अथ

# महाराज्ञीसहस्रनामकम् ।

श्रीभैरव उवाच ।

भगवन् वेदतत्त्वज्ञ मन्त्रतन्त्रविचक्षण ।
शरण्य सर्वलोकेश शरणागतवत्सल ॥ १ ॥
कथं श्रियमवाप्नोति लोके दारिद्र्यदुःखभाक् ।
मान्त्रिको भैरवेशान तन्मे गदितुमर्हसि ॥ २ ॥

१ 'श्वरीम्' ख. पाठः । २ 'वीशान' ख. पाठः ।

श्रीभैरव उवाच ।

या देवी निष्कला राज्ञी भगवत्यमलेश्वरी ।
सा सृजत्यवति व्यक्तं संहरिष्यति तामसी ॥ ३ ॥
तस्या नामसहस्रं ते वक्ष्ये स्नेहेन पार्वति ।
अवाच्यं दुर्लभं लोके दुःखदारिद्र्यनाशनम् ॥ ४ ॥
परमार्थप्रदं नित्यं परमैश्वर्यकारणम् ।
सर्वागमरहस्याढ्यं सकलार्थप्रदीपनम् ॥ ५ ॥
समस्तशोकशमनं महापातकनाशनम् ।
सर्वमन्त्रमयं दिव्यं राज्ञीनामसहस्रकम् ॥ ६ ॥

अस्य श्रीमहाराज्ञीनामसहस्रस्य, ब्रह्मा ऋषिः, गायत्रं छन्दः, श्रीभूतेश्वरीमहाराज्ञी देवता, ह्रीं बीजं, सौः शक्तिः, क्लीं कीलकं, महाराज्ञीसहस्रनामपाठे विनियोगः । ब्रह्मऋषये नमः शिरसि । गायत्रीच्छन्दसे नमो मुखे । श्रीभूतेश्वरीमहाराज्ञीदेवतायै नमो हृदि । ह्रींबीजाय नमो नाभौ । सौःशक्तये नमो गुह्ये । क्लींकीलकाय नमः पादयोः । विनियोगाय नमः सर्वाङ्गेषु । ओंह्रामित्यादिना करषडङ्गन्यासं विधाय ध्यानं कुर्यात् ।

या द्वादशार्कपरिमण्डितमूर्तिरेका
सिंहासनस्थितिमतीमुरगैर्वृतां च ।
देवीमनक्षगतिमीश्वरतां प्रपन्नां
तां नौमि भर्गवपुषीं परमार्थराज्ञीम् ॥ १ ॥
चतुर्भुजां चन्द्रकलार्धशेखरां
सिंहासनस्थां भुजगोपवीतिनीम् ।
पाशाङ्कुशाम्भोरुहखड्गधारिणीं
राज्ञीं भजे चेतसि राज्यदायिनीम् ॥ २ ॥

ओंह्रींश्रींरांमहाराज्ञी क्लींसौःपञ्चदशाक्षरी ।
ह्रींस्वाहात्र्यक्षरीविद्या पराभगवती विभा ॥ १ ॥

भास्वती भद्रिका भीमा भर्गरूपा महस्विनी ।
माननीया मनीषा च मनोजा च मनोजवा ॥ २ ॥
मानदा मन्त्रविद्या च महाविद्या षडक्षरी । *
षट्कूटा च त्रिकूटा च त्रयी वेदत्रयी शिवा ॥ ३ ॥
शिवाकारा विरूपाक्षी शशिखण्डावतंसिनी ।
महालक्ष्मीर्महोरस्का महौजस्का महोदया ॥ ४ ॥
मातङ्गी मोदकाहारा मदिरारुणलोचना ।
साध्वी शीलवती शाला सुधाकलशधारिणी ॥ ५ ॥
खड्गिनी पद्मिनी पद्मा पद्मकिञ्जल्करञ्जिता ।
हृत्पद्मवासिनी हृद्या पानपात्रधरा धरा ॥ ६ ॥
धराधरेन्द्रतनया दक्षिणा दक्षजा दया ।
दयावती महामेधा मोदिनी बोधिनी गदा ॥ ७ ॥
गदाधरार्चिता गोधा गङ्गा गोधावरी गया ।
महाप्रभावसहिता महोरगविभूषणा ॥ ८ ॥
महामुनिकृतातिथ्या माध्वी मानवती मघा ।
बाला सरस्वती लक्ष्मीर्दुर्गा दुर्गतिनाशिनी ॥ ९ ॥
शारी शरीरमध्यस्था वैखरी खेचरेश्वरी ।
शिवदा शिववक्षःस्था कालिका त्रिपुरापुरी ॥ १० ॥
पुरारिकुक्षिमध्यस्था मुरारिहृदयेश्वरी ।
बलारिराज्यदा चण्डी चामुण्डा मुण्डधारिणी ॥ ११ ॥
मुण्डमालाञ्चिता मुद्रा क्षोभणा कर्षणक्षमा ।
ब्राह्मी नारायणीदेवी कौमारी चापराजिता ॥ १२ ॥
रुद्राणी च शचीन्द्राणी वाराही वीरसुन्दरी ।

* अत्र रेखाङ्कितमेकमेव नाम सर्वत्र ज्ञेयम् ।

नारसिंही भैरवेशी भैरवाकारभीषणा ॥ १३ ॥
नागालङ्कारशोभाढ्या नागयज्ञोपवीतिनी ।
नागकङ्कणकेयूरा (१००) नागहारा सुरेश्वरी ॥ १४ ॥
सुरारिघातिनी पूता पूतना डाकिनीक्रिया ।
क्रियावती कुरी कृत्या डाकिनी लाकिनी लया ॥ १५ ॥
लीलावती रसाकीर्णा नागकन्यामनोहरा ।
हारकङ्कणशोभाढ्या सदानन्दा शुभङ्करी ॥ १६ ॥
प्रहासिनी मधुमती सरसी स्मरमोहिनी ।
महोग्रवपुषी वार्ता वामाचारप्रिया सिरा ॥ १७ ॥
सुधामयी वेणुकरा [1]वैरिघ्नीवीरसुन्दरी ।
वारिमध्यस्थिता वामा वामनेत्रा शशिप्रभा ॥ १८ ॥
शर्मदा शङ्करी सीता रवीन्दुशिखिलोचना ।
मदिरा वारुणी वीणागीतिज्ञा मदिरावती ॥ १९ ॥
वटस्था वारुणीशक्ति[2]र्वटजा वटवासिनी ।
वटुकी वीरसूवन्द्या स्तम्भिनी मोहिनी च मुवं[3] ॥ २० ॥
मुद्राङ्कुशहस्ता च वराभयकरा कुटी ।
पाटीरद्रुमवल्ली च वटिका वटुकेश्वरी ॥ २१ ॥
इष्टदा कृषिभूः कीरी रेवतीरमणप्रिया ।
रोहिणी रेवती रम्या रमणा रोमहर्षिणी ॥ २२ ॥
रसोल्लासा रसासारा सारिणी तारिणी तडित् ।
तरीतरित्रहस्ता च तोतुला तरणिप्रभा ॥ २३ ॥
रत्नाकरप्रिया रम्भा रत्नालङ्कारशोभिता ।
रुक्माङ्गदा गदाहस्ता गदाधरवरप्रदा ॥ २४ ॥
षड्सा द्विरसा माला मालाभरणभूषिता ।

१ 'वैरिहा' ख. पाठः । २ 'सूक्तिः' ख. पाठः । ३ 'चमू' ख. पाठः ।

मालती मल्लिकामोदा मोदकाहारवल्लभा ॥ २५ ॥
वल्लभी मथुरा माया काशी काञ्ची ललन्तिका ।
हसन्तिका हसन्ती च भ्रमन्ती च वसन्तिका ॥ २६ ॥
क्षेमा क्षेमङ्करी क्षामा क्षौमवस्त्रा (२००) क्षणेश्वरी ।
क्षणदा क्षेमदा सीरा सीरपाणिसमर्चिता ॥ २७ ॥
क्रीता क्रीतातपा क्रूरा कमनीया कुलेश्वरी ।
कूर्चबीजा कुठाराढ्या कूर्मिणी कूर्मसुन्दरी ॥ २८ ॥
कारुण्या चैव काश्मीरी दूती द्वारवती ध्रुवा ।
ध्रुवस्तुता ध्रुवगतिः पीठेशी बगलामुखी ॥ २९ ॥
सुमुखी शोभनानीतिः[1] रत्नज्वालामुखी नतिः ।
अलकोज्जयिनी भोग्या भङ्गी भोगावती बला ॥ ३० ॥
धर्मराजपुरी पूता पूर्णसत्त्वाऽमरावती ।
अयोध्या योधनीया च युगमाता च यक्षिणी ॥ ३१ ॥
यज्ञेश्वरी योगगम्या योगिध्येया यशस्विनी ।
यशोवती च चार्वङ्गी चारुहासा चलाचला ॥ ३२ ॥
हरीश्वरी हरेर्माया मायिनी वायुवेगिनी ।
अम्बालिकाऽम्बा भर्गेशी भृगुकूटा महामतिः ॥ ३३ ॥
[2]कोशेश्वरी च कमला कीर्तिदा कीर्तिवर्धिनी ।
कठोरवाक्कुहूमूर्तिः चन्द्रबिम्बसमानना ॥ ३४ ॥
चन्द्रकुङ्कुमलिप्ताङ्गी कनकाचलवासिनी ।
मलयाचलसानुस्था हिमाद्रितनयातनुः ॥ ३५ ॥
हिमाद्रिकुक्षिदेशस्था कुब्जिका कोसलेश्वरी ।
कारैकनिगडा गूढा गूढगुल्फातिगोपिता ॥ ३६ ॥
तनुजा तनुरूपा च बाणचापधरा नुतिः ।

१ 'ज्योतिः' ख. पाठः । २ 'लोकेश्वरी' ख. पाठः ।

धुरीणा धूम्रवाराही धूम्रकेशाऽरुणानना ॥ ३७ ॥
अरुणेशी रतिः स्वातिर्गरिष्ठा च गरीयसी ।
महानसी महाकारा सुरासुरभयङ्करी ॥ ३८ ॥
अणुरूपा महज्ज्योतिरनिरुद्धा[1]सरस्वती ।
श्यामा श्याममुखी शान्ता श्रान्तसन्तापहारिणी ॥ ३९ ॥
गौर्गण्या गोमयी गुह्या गोमती गुरुवागर्या[2] ।
गीतसन्तोषसंसक्ता ( ३०० ) ग्राहिणी ग्रहिणी ग्रहा ॥ ४० ॥
गणप्रिया गजगतिर्गान्धारी गन्धमोदिनी ।
गन्धमादनसानुस्था सह्याचलकृतालया ॥ ४१ ॥
गजाननप्रिया गव्या[3] ग्राहिका ग्राहवाहना ।
गुहप्रसूर्गुहावासा ग्रहमालाविभूषणा ॥ ४२ ॥
कौबेरी कुहका भ्रान्तिस्तर्कविद्या प्रियङ्करी ।
पीताम्बरा पटाकारा पताका सृष्टिजा सुधा ॥ ४३ ॥
दाक्षायणी दक्षसुता दक्षयज्ञविनाशिनी ।
ताराचक्रस्थिता तारा तुरी तुर्या तुटिस्तुला ॥ ४४ ॥
सन्ध्यात्रयी सन्धिजरा सन्ध्यातारुण्यलालिता ।
ललिता लोहिता लम्पा चम्पा कम्पाकुला सृणिः ॥ ४५ ॥
स्मृतिः सत्यवती स्वस्था समाना मानवर्धिनी ।
महोमयी मनस्तुष्टिः कामधेनुः सनातनी ॥ ४६ ॥
सूक्ष्मरूपा सूक्ष्ममुखा स्थूलरूपा कलावती ।
तलातलाश्रया सिन्धुस्त्र्यम्बिका लम्पिका जया ॥ ४७ ॥
सौदामिनी सुधादेवी सनकार्षिसमर्चिता ।
मन्दाकिनी च यमुना विपाशा नर्मदानदी ॥ ४८ ॥

---

१ 'द्धा' ख. पाठः। २ 'गुरुवागगया' ख. पाठः। ३ 'गण्याग्रासिका' ख. पाठः।

गण्डक्यैरावती सिप्रा वितस्ता च सरस्वती ।
रेवा चैरावती[1] चेक्षुमती सागरवासिनी ॥ ४९ ॥
देवकी देवमाता च देवेशी देवसुन्दरी ।
दैत्यघ्नी दमनी दात्री दितिर्दितिजसुन्दरी ॥ ५० ॥
विद्याधरी च विद्येशी विद्याधरजसुन्दरी ।
मेनका चित्रलेखा च चित्रिणी च तिलोत्तमा ॥ ५१ ॥
उर्वशी मोहिनी रम्भा चाप्सरोगणसुन्दरी ।
यक्षिणी यक्षलोकेशी नरवाहनपूजिता ॥ ५२ ॥
यक्षेन्द्रतनया योग्या यक्षनायकसुन्दरी ।
(गन्धवती चिता गन्धा सुगन्धा गीततत्परा ॥ ५३ ॥
गन्धर्वतनया नम्रा (४००) गीतिर्गन्धर्वसुन्दरी[2] ।)
मन्दोदरी करालाक्षी मेघनादवरप्रदा ॥ ५४ ॥
मेघवाहनसन्तुष्टा मेघमूर्तिश्च राक्षसी ।
रक्षोहन्त्री केकसी च रक्षोनायकसुन्दरी ॥ ५५ ॥
किंनरी कम्बुकण्ठी च कलकण्ठस्वना सुधा ।
किंमुखी हयवक्त्रा च केला किन्नरसुन्दरी ॥ ५६ ॥
पिशाची राजमातङ्गी उच्छिष्टपदसंस्थिता ।
महापिशाचिनी चान्द्री पिशाचकुलसुन्दरी ॥ ५७ ॥
गुह्येश्वरी गुह्यरूपा गुर्वी गुह्यकसुन्दरी ।
सिद्धिप्रदा सिद्धवधूः सिद्धेशी सिद्धसुन्दरी ॥ ५८ ॥
भूतेश्वरी भूतालया भूतधात्री भयापहा ।
भूतभीतिहरी भव्या भूतजा भूतसुन्दरी ॥ ५९ ॥
पृथ्वी पार्थिवलोकेशी पृथा विष्णुसमर्चिता ।

---

१ 'च देविका' ग. पाठः । २ 'बन्धान्तर्गतं क. ग. घ. पुस्तकेष्वधिकम् ।

वसुन्धरा वसुनता पृथिवी भूमिसुन्दरी ॥ ६० ॥
अम्भोधितनयाऽलुप्ता जलजाक्षी जलेश्वरी ।
अमूर्तिरम्ममयी मारी जलस्था जलसुन्दरी ॥ ६१ ॥
तेजस्विनी महोधात्री तैजसी सूर्यबिम्बगा ।
सूर्यकान्तिः सूर्यतेजास्तेजोरूपैकसुन्दरी ॥ ६२ ॥
वायुवाहा वायुमुखी वायुलोकैकसुन्दरी ।
गगनस्था खेचरेशी शून्यरूपा निराकृतिः ॥ ६३ ॥
निराभासा भासमाना द्युतिराकाशसुन्दरी ।
क्षितिमूर्तिधराऽनन्ता क्षितिभृल्लोकसुन्दरी ॥ ६४ ॥
अब्धियाना रत्नशोभा वरुणेशी वरायुधा ।
पाशहस्ता पोषणा च वरुणेश्वरसुन्दरी ॥ ६५ ॥
अनलैकरुचिज्योतिः पञ्चानिलगतिस्थितिः ।
प्राणापानसमानेच्छा चोदानव्यानरूपिणी ॥ ६६ ॥
पञ्चवातगतिर्नाडीरूपिणी वातसुन्दरी ।
अग्निरूपा वह्निशिखा वडवानलसन्निभा ॥ ३७ ॥
हेतिर्हविर्हुतज्योतिरग्निजा वह्निसुन्दरी ।
सोमेश्वरी सोमकला सोमपानपरायणा ॥ ६८ ॥
सौम्यानना सौम्यरूपा सोमस्था सोमसुदन्री ।
सूर्यप्रभा सूर्यमुखी सूर्यजा सूर्यसुन्दरी ॥ ६९ ॥
याज्ञिकी यज्ञभागेच्छा यजमानवरप्रदा ।
याजकी यज्ञविद्या च यजमानैकसुन्दरी ( ५०० ) ॥ ७० ॥
आकाशगामिनी वन्द्या शब्दजाकाशसुन्दरी ।
मीनप्रिया मीननेत्रा मीनाशा[1] मीनसुन्दरी ॥ ७१ ॥

[1] 'मीनास्या' ख. पाठः ।

कूर्मपृष्ठगता कूर्मी कूर्मजा कूर्मरूपिणी ।
वाराही वीरसूर्वर्ध्या वरारोहा मृगेक्षणा ॥ ७२ ॥
वराहमूर्तिर्वाचाला दंष्ट्रा वराहसुन्दरी ।
नरसिंहाकृतिर्देवी दुष्टदैत्यनिषूदिनी ॥ ७३ ॥
प्रद्युम्नवरदा नारी नरसिंहैकसुन्दरी ।
वामजा वामनाकारा नारायणपरायणा ॥ ७४ ॥
बलिदानवदर्पघ्नी वाम्या वामनसुन्दरी ।
रामप्रिया रामकीर्तिः क्षत्रवंशक्षयङ्करी ॥ ७५ ॥
[2]दनुपुत्री राजकन्या रामा परशुधारिणी ।
भार्गवी भार्गवेष्टा च जामदग्न्यवरप्रदा ॥ ७६ ॥
कुठारधारिणी रात्रिर्जामदग्न्यैकसुन्दरी ।
सीतालक्ष्मणसेव्या च रक्षःकुलविनाशिनी ॥ ७७ ॥
रामप्रिया च शत्रुघ्नी शत्रुघ्नभरतेष्टदा ।
लावण्यामृतधाराढ्या लवणासुरघातिनी ॥ ७८ ॥
लोहितास्या प्रसन्नास्या स्वागमा रामसुन्दरी ।
कृष्णकेशा कृष्णमुखी यादवान्तकरी लया ॥ ७९ ॥
यादोगणार्चिता योज्या राधाश्रीकृष्णसुन्दरी ।
बुद्धप्रसूर्बुद्धदेवी जिनमार्गपरायणा ॥ ८० ॥
जितक्रोधा जितालस्या जिनसेव्या जितेन्द्रिया ।
जिनवंशधरोग्रा च नीलान्ता बुद्धसुन्दरी ॥ ८१ ॥
काली कोलाहलप्रीता प्रेतवाहा सुरेश्वरी ।
कल्किप्रिया कम्बुधरा कालिकाल्किसुन्दरी ॥ ८२ ॥
विष्णुमाया ब्रह्ममाया शाम्भवी शववाहना ।

१ 'रामकला' ख. पाठः । २ 'भृगुपुत्री' ख पाठः ।

इन्द्रावरजवक्त्रःस्था स्थाणुपत्नी पलालिनी ॥ ८३ ॥
जृम्भिणी जृम्भहर्त्री च जृम्भमाणकचालका[1] ।
कुलाकुलपदेशानी पददानफलप्रदा ॥ ८४ ॥
कुलवागीश्वरी कुल्या कुलजा कुलसुन्दरी ।
पुरन्दरेष्टा[2] तारुण्यालया पुण्यजनेश्वरी ॥ ८५ ॥
पुण्योत्साहा पापहर्त्री पाकशासनसुन्दरी ।
सूर्यकोटिप्रतीकाशा सूर्यतेजोमयी मषी ॥ ८६ ॥
लेखिनी भ्राजिता रज्जुरूपिणी सूर्यसुन्दरी (६००) ।
चन्द्रिका च सुधाधारा ज्योत्स्ना शीतांशुसुन्दरी ॥ ८७ ॥
लोलाक्षी च शताक्षी च सहस्राक्षी सहस्रपात् ।
सहस्रशीर्षा चेन्द्राक्षी सहस्रभुजवल्लिका ॥ ८८ ॥
कोटिरत्नांशुशोभा च शुभ्रवस्त्रा शतानना[3] ।
शतानन्दा श्रुतिधरा पिङ्गला चोग्रनादिनी ॥ ८९ ॥
सुषुम्ना हारकेयूरनूपुरारावसङ्कुला ।
घोरनादा घोरमुखी चोन्मुखी चोल्मुकायुधा ॥ ९० ॥
गोपिता गूर्जरी गाथा गायत्री वेदवल्लभा ।
वल्लकीस्वननादा च नादविद्या नदीतटी ॥ ९१ ॥
बिन्दुरूपा चक्रयोनिर्बिन्दुनादस्वरूपिणी ।
चक्रेश्वरी भैरवेशी महाभैरववल्लभा ॥ ९२ ॥
कालभैरवभार्या च कल्पान्तरङ्गनर्तकी ।
प्रलयानलधूम्राभा योनिमध्यकृतालया ॥ ९३ ॥
भूचरी खेचरीमुद्रा नवमुद्राविलासिनी ।
वियोगिनी श्मशानस्था श्मशानार्चनतोषिता ॥ ९४ ॥

---

१ 'कचाकुला' ख. पाठः । २ 'पुरन्दरेष्टदा पुण्या' ख. पाठः । ३ 'शुभानना' ख. पाठः

भास्वराङ्गी भर्गशिखा भर्गवामाङ्गवासिनी ।
भद्रकाली विश्वकाली श्रीकाली मेघकालिका ॥ ९५ ॥
नीरकाली कालरात्रिः काली कामेशकालिका ।
इन्द्रकाली पूर्वकाली पश्चिमाम्नायकालिका ॥ ९६ ॥
श्मशानकालिका भद्रकाली श्रीकृष्णकालिका ।
क्रींकारोत्तरकाली श्रींहुंह्रींदक्षिणकालिका ॥ ९७ ॥
सुन्दरी त्रिपुरेशानी त्रिकूटा त्रिपुरार्चिता ।
त्रिनेत्रा त्रिपुराध्यक्षा त्रिपुटा पुटभैरवी ॥ ९८ ॥
त्रिलोकजननी त्रेता महात्रिपुरसुन्दरी ।
कामेश्वरी कामकला कालकामशसुन्दरी ॥ ९९ ॥
त्र्यक्षरी त्र्यक्षरीदेवी भावना भुवनेश्वरी ।
एकाक्षरी चतुष्कूटा त्रिकूटेशी लयेश्वरी ॥ १०० ॥
चतुर्वर्णा च वर्णेशी वर्णाढ्या चतुरक्षरी ।
पञ्चाक्षरी च पञ्चवक्त्रा पट्कूटा च पडक्षरी ॥ १०१ ॥
सप्ताक्षरी नवानेत्री परमाष्टाक्षरेश्वरी ।
नवमी पञ्चमी षष्ठी नागेशी च नवाक्षरी ॥ १०२ ॥
दशाक्षरी दशास्येशी देविकैकादशाक्षरी ।
द्वादशादित्यसङ्काशा ( ७०० ) द्वादशी द्वादशाक्षरी ॥ १०३ ॥
त्रयोदशी वेदगर्भा वाद्या त्रयोदशाक्षरी ।
चतुर्दशाक्षरी विद्या विद्यापञ्चदशाक्षरी ॥ १०४ ॥
षोडशी सर्वविद्येशी महाश्रीषोडशाक्षरी ।
महाश्रीषोडशीविद्या चिन्तामणिमनुप्रिया ॥ १०५ ॥
द्वाविंशत्यक्षरी श्यामा महाकालकुटुम्बिनी ।
वज्रतारा कालतारा नारी तारोग्रतारिणी ॥ १०६ ॥
कामतारा शब्दतारा स्पर्शतारा रसाश्रया ।

रूपतारा गन्धतारा महानीलसरस्वती ॥ १०७ ॥
कालज्वाला वह्निज्वाला ब्रह्मज्वाला जटाकुला ।
विष्णुज्वाला जिष्णुशिखा भद्रज्वाला करालिनी ॥ १०८ ॥
विकरालमुखीदेवी कराली भूतिभूषणा ।
चिताशयासना चिन्ता चितामण्डलमध्यगा ॥ १०९ ॥
भूतभैरवसेव्या च भूतभैरवपालिनी ।
बन्धकी बद्धसंमुद्रा भवबन्धविनाशिनी ॥ ११० ॥
भवानी देवदेवेशी दीक्षा दीक्षितपूजिता ।
साधकेशी सिद्धिदात्री साधकानन्दवर्धिनी ॥ १११ ॥
साधकाश्रयभूता च साधकेष्टफलप्रदा ।
रजोवती राजसी च रजकी च रजस्वला ॥ ११२ ॥
पुष्पप्रिया पुष्पवती स्वयम्भूपुष्पमालिका ।
स्वयम्भूपुष्पगन्धाढ्या पुलस्त्यसुतघातिनी ॥ ११३ ॥
पात्रहस्ता सुता पौत्री पीतास्या पीतभूषणा ।
पिङ्गानना पिङ्गकेशी पिङ्गला पिङ्गलेश्वरी ॥ ११४ ॥
मङ्गला मङ्गलेशानी सर्वमङ्गलमङ्गला ।
पुरूरवेश्वरी पाशधरा चापधराऽधुरा ॥ ११५ ॥
पुण्यधात्री पुण्यमयी पुण्यलोकनिवासिनी ।
होतृसेव्या हकारस्था सकारस्था सुखावती ॥ ११६ ॥
सखी शोभावती सत्या सत्याचारपरायणा ।
सतीशानकलेशानी वामदेवकलाश्रिता ॥ ११७ ॥
सद्योजातकलादेवी शिवाऽघोरकलाकृतिः ।
शर्वरी क्षीरसदृशी क्षीरनीरविवेकिनी (८००) ॥ ११८ ॥
वितर्कनिलया नित्या नित्यक्लिन्ना पराम्बिका ।
पुरारिदयिता दीर्घा दीर्घनासाऽल्पभाषिणी ॥ ११९ ॥

काशिका कौशिकी कोश्या कोशदा रूपवर्धिनी ।
तुष्टिः पुष्टिः प्रजाप्रीता प्राजिका[1] पूजकप्रिया ॥ १२० ॥
प्रजावती गर्भवती गर्भपोषणपोषिता[2] ।
शुक्लवासाः शुक्लरूपा शुचिवासा जयावहा ॥ १२१ ॥
जानकी जन्यजनका जनतोषणतत्परा ।
वादप्रिया वाद्यरता वादिता वादसुन्दरी ॥ १२२ ॥
वाक्स्तम्भिनी कीरवाणी धीराधीरा धुरन्धरा ।
स्तनन्धयी सामिधेनी निरानन्दा निरालया ॥ १२३ ॥
समस्तसुखदा सारा वारांनिधिवरप्रदा ।
वालुकी वीरपानेष्टा वसुधात्री वसुप्रिया ॥ १२४ ॥
शुक्रनान्दा शुक्ररसा शुक्रपूज्या शुकप्रिया ।
शुकी च शुकहस्ता च समस्तनरकान्तका ॥ १२५ ॥
समस्ततत्त्वनिलया भगरूपा भगेश्वरी ।
भगबिम्बा भगाह्वया भगलिङ्गस्वरूपिणी ॥ १२६ ॥
भगलिङ्गेश्वरी श्रीदा भगलिङ्गामृतस्रवा ।
क्षीराशना क्षीररुचिराज्यपानपरायणा ॥ १२७ ॥
मधुपानपरा प्रौढा पीवरांसा परंपरा ।
पिलम्पिला पटोलेशा पाटलारुणलोचना ॥ १२८ ॥
क्षीराम्बुधिप्रिया क्षीबा सरला सरलायुधा ।
संग्रामा सुनया स्रस्ता संसृतिः सनकेश्वरी ॥ १२९ ॥
कन्या कनकरेखा च कान्यकुब्जनिवासिनी ।
काञ्चनाभतनुः काष्ठा कुष्ठरोगविनाशिनी ॥ १३० ॥
कठोरमूर्धजा कुन्ती कुन्तायुधधरा धृतिः ।

---

१ 'पूजिका' ख. पाठः । २ 'पोषिका' ख. पाठः ।

चर्माम्बरा क्रूरनखा चकोराक्षी चतुर्भुजा ॥ १३१ ॥
चतुर्वेदप्रिया चाद्या चतुर्वर्गफलप्रदा ।
ब्रह्माण्डचारिणी स्फूर्तिर्ब्रह्माणी ब्रह्मसंमता ॥ १३२ ॥
सत्कारकारिणी सूतिः सूतिका लतिकालता । (६००)
कल्पवल्ली कृशाङ्गी च कल्पपादपवासिनी ॥ १३३ ॥
कल्पपाशा[1] महाविद्या विद्याराज्ञी सुखाश्रया ।
भूतिराज्ञी विश्वराज्ञी लोकराज्ञी शिवाश्रया ॥ १३४ ॥
ब्रह्मराज्ञी विष्णुराज्ञी रुद्रराज्ञी[2] जटाश्रया ।
नागराज्ञी वंशराज्ञी वीरराज्ञी रजःप्रिया ॥ १३५ ॥
सत्त्वराज्ञी तमोराज्ञी गुणराज्ञी चलाचला ।
वसुराज्ञी सत्यराज्ञी तपोराज्ञी जपप्रिया[3] ॥ १३६ ॥
मन्त्रराज्ञी वेदराज्ञी तन्त्रराज्ञी श्रुतिप्रिया ।
वेदराज्ञी[4] मन्त्रिराज्ञी दैत्यराज्ञी दयाकरा ॥ १३७ ॥
कालराज्ञी प्रजाराज्ञी तेजोराज्ञी हराश्रया ।
पृथ्वीराज्ञी पयोराज्ञी वायुराज्ञी मदालसा ॥ १३८ ॥
सुधाराज्ञी सुराराज्ञी भीमराज्ञी भयोज्झिता ।
तथ्यराज्ञी जयाराज्ञी महाराज्ञी कुलाकृतिः[5] ॥ १३९ ॥
वामराज्ञी चीनराज्ञी[6] हरिराज्ञी हलीश्वरी ।
पराराज्ञी यक्षराज्ञी भूतराज्ञी शिवासना[7] ॥ १४० ॥
वटुराज्ञी प्रेतराज्ञी शेषराज्ञी शमप्रदा ।
आकाशराज्ञी राजेशी राजराज्ञी रतिप्रिया ॥ १४१ ॥

---

१ 'कल्पशाखा' ख. पाठः । २ 'भद्र' ख. पाठः । ३ 'रजःप्रिया' ख. पाठः ।
४ 'देवराज्ञी मर्त्यराज्ञी' ख. पाठः । ५ 'शिलाकृतिः' ख. पाठः ।
६ 'चन' ख. पाठः । ७ 'शवासना' ख. पाठः ।

पातालराज्ञी भूराज्ञी प्रेतराज्ञी विषापहा ।
सिद्धराज्ञी विभाराज्ञी तेजोराज्ञी विभामयी ॥ १४२ ॥
भास्वद्राज्ञी चन्द्रराज्ञी ताराराज्ञी खवासिनी ।
ग्रहराज्ञी लताराज्ञी वृक्षराज्ञी मतिप्रदा ॥ १४३ ॥
धीरराज्ञी मनोराज्ञी मनुराज्ञी च काश्यपी ।
मुनिराज्ञी रत्नराज्ञी युगराज्ञी मणिप्रभा ॥ १४४ ॥
सिन्धुराज्ञी नदीराज्ञी नदराज्ञी दरीस्थिता ।
बिन्दुराज्ञी नादराज्ञी आत्मराज्ञी च सद्गतिः ॥ १४५ ॥
पुत्रराज्ञी ध्यानराज्ञी लयराज्ञी सदीश्वरी[1] ।
ईशानराज्ञी राजेशी स्वाहाराज्ञी महत्तरा ॥ १४६ ॥
वह्निराज्ञी योगिराज्ञी[2] यज्ञराज्ञी चिदाकृतिः ।
जगद्राज्ञी तत्त्वराज्ञी वाग्राज्ञी विश्वरूपिणी ॥ १४७ ॥
पञ्चदशाक्षरीराज्ञी ॐह्रींभूतेश्वरेश्वरी । (१०००)
इतीदं मन्त्रसर्वस्वं राज्ञीनामसहस्रकम् ॥ १४८ ॥
पञ्चदशाक्षरीतत्त्वं मन्त्रसारं मनुप्रियम् ।
सर्वतत्त्वमयं पुण्यं महापातकनाशनम् ॥ १४९ ॥
सर्वसिद्धिप्रदं लोके सर्वरोगनिवर्हणम् ।
सर्वोत्पातप्रशमनं ग्रहशान्तिकरं परम् ॥ १५० ॥
सर्वदेवप्रियं प्राज्यं[3] सर्वशत्रुभयापहम् ।
सर्वदुःखौघशमनं सर्वशोक[4]विनाशनम् ॥ १५१ ॥
पठेद्वा पाठयेन्नाम्नां सहस्रं शक्तिसंनिधौ ।
दूरादेव पलायन्ते विपदः शत्रुभीतयः ॥ ४५२ ॥
राक्षसा भूतवेतालाः पन्नगा हरिणद्विषः ।

---

१ 'सदेश्वरी' ख. पाठः । २ 'योगराज्ञी' ख. पाठः । ३ 'पूज्यं' ख. पाठः ।
४ 'लोभ' ख. पाठः ।

पठनाद्विद्रवन्त्याशु महाकालादिव प्रजाः ॥ १५३ ॥
श्रवणात्पातकं नश्येच्छ्रावयेद्यः स[1] भाग्यवान् ।
(नानाविधानि भोगानि संभुज्य पृथिवीतले ॥ १५४ ॥)
गमिष्यति परां भूमिं त्वरितं नात्र संशयः ।
अश्वमेधसहस्रस्य वाजिपेयस्य कोटयः ।
गङ्गास्नानसहस्रस्य चान्द्रायणायुतस्य च ॥ १५५ ॥
तप्तकृच्छ्रैकलक्षस्य राजसूयस्य कोटयः ।
सहस्रनामपाठस्य कलां नार्घन्ति षोडशीम् ॥ १५६ ॥
सर्वसिद्धीश्वरं साध्यं राज्ञीनामसहस्रकम् ।
मन्त्रगर्भं पठेद्यस्तु राज्यकामो महेश्वरि ॥ १५७ ॥
वर्षमेकं शतावर्तं महाचीनक्रमाकुलः ।
शक्तिपूजापरो रात्रौ स लभेद्राज्यमीश्वरि ॥ १५८ ॥
पुत्रकामी पठेत सायं चिताभस्मानुलेपनः ।
दिगम्बरो मुक्तकेशः शतावर्तं महेश्वरि ॥ १५९ ॥
श्मशाने तु लभेत पुत्रं साक्षाद्वैश्रवणोपमम् ।
परदारार्चनरतो भगबिम्बं स्मरन् सुधीः ॥ १६० ॥
पठेन्नामसहस्रं तु वसुकामी लभेद् धनम् ।
रवौ वारत्रयं देवि पठेन्नामसहस्रकम् ॥ १६१ ॥
मृदुविष्टरनिर्विष्टः क्षीरपानपरायणः ।
स्वप्ने सिंहासनां राज्ञीं वरदां भुवि पश्यति ॥ १६२ ॥
क्षीरचर्वणसन्तृप्तो वीरपानरसाकुलः ।
यः पठेत् परया भक्त्या राज्ञीनामसहस्रकम् ॥ १६३ ॥
स सद्यो मुच्यते घोरान्महापातकजाद्भयात् ।
यः पठेत् साधको भक्त्या शक्तिवक्षःकृतासनः ॥ १६४ ॥

---

१ 'समाहितः' ख. पाठः ।

शुक्रोत्तरणकाले तु तस्य हस्तेऽष्टसिद्धयः ।
यः पठेन्निशि चक्राग्रे परस्त्रीध्यानतत्परः ॥ १६५ ॥
सुरासवरसानन्दी स लभेत् संयुगे जयम् ।
इदं नामसहस्रं तु सर्वमन्त्रमयं शिवे ॥ १६६ ॥
भूर्जत्वचि लिखेद्रात्रौ चक्रार्चनसमागमे ।
अष्टगन्धेन पूतेन वेष्टयेत् स्वर्णपत्रके ॥ १६७ ॥
धारयेत् कण्ठदेशे तु सर्वसिद्धिः प्रजायते ।
यो धारयेन्महारत्नं सर्वदेवातिदुर्लभाम् ॥ १६८ ॥
रणे राजकुले द्यूते चौररोगाद्युपद्रवे ।
स प्राप्नोति जयं सद्यः साधको वीरनायकः ॥ १६९ ॥
श्रीचक्रं पूजयेद्यस्तु धारयेद्वर्म मस्तके ।
पठेन्नामसहस्रं तु स्तोत्रं मन्त्रात्मकं तथा ॥ १७० ॥
किं किं न लभते कामं देवानामपि दुर्लभम् ।
सुरापानं ततः संविच्चर्वणं मीनमांसकम् ॥ १७१ ॥
नवकन्यासमायोगो मुद्रा वीणारवः प्रिये ।
सत्सङ्गो गुरुसांनिध्यं राज्ञीश्रीचक्रमग्रतः ॥ १७२ ॥
यस्य देवि स एव स्याद्योगी ब्रह्मविदीश्वरः ।
इदं रहस्यं परमं भक्त्या तव मयोदितम् ॥ १७३ ॥
अप्रकाश्यमदातव्यं न देयं यस्य कस्यचित् ।
अन्यशिष्याय दुष्टाय दुर्जनाय दुरात्मने ॥ १७४ ॥
गुरुभक्तिविहीनाय सुरास्त्रीनिन्दकाय च ।
नास्तिकाय कुशीलाय न देयं तत्त्वदर्शिभिः ॥ १७५ ॥
देयं शिष्याय शान्ताय भक्तायाद्वैतवादिने ।
दीक्षिताय कुलीनाय राज्ञीभक्तिरताय च ॥ १७६ ॥

---

१ 'परस्त्री' ख. पाठः ।

दत्त्वा भोगापवर्गत्वं लभेत् साधकसत्तमः ।
इति नामसहस्रं तु राज्ञ्याः शिवमुखोदितम् ।
अत्यन्तदुर्लभं गोप्यं गोपनीयं स्वयोनिवत् ॥ १७७ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीमहाराज्ञीसहस्रनामकम् ॥ ४ ॥

अथ

## श्रीमहाराज्ञीस्तोत्रम् ।

श्रीभैरव उवाच ।

अधुना कथयिष्यामि स्तोत्रराजं परात्मकम् ।
मूलमन्त्रमयं दिव्यं तत्त्वभूतं मनोहरम् ॥ १ ॥
राज्ञीप्रियं पापहर लक्षपूजाफलप्रदम् ।
जपलक्षसमं स्तोत्रं ध्यानकोटिसमं प्रिये ॥ २ ॥
राज्ञीस्तोत्रस्य देवेशि ब्रह्मा ऋषिरुदाहृतः ।
गायत्रं छन्द इत्युक्तं श्रीराज्ञी देवतेरिता ॥ ३ ॥
माया बीजं परा शक्तिः कामः कीलकमीश्वरि ।
भोगापवर्गसिद्ध्यर्थे विनियोगः प्रकीर्तितः ॥ ४ ॥

अस्य श्रीमहाराज्ञीस्तवराजमन्त्रस्य ब्रह्मा ऋषिः गायत्रं छन्दः श्रीभूतेश्वरीमहाराज्ञी देवता ह्रींबीजं सौः शक्तिः क्लीं कीलकं भोगापवर्गसिद्धये विनियोगः । ब्रह्मऋषये नमः शिरसि, गायत्रं छन्दसे नमो मुखे, श्रीराज्ञीभूतेश्वरीदेवतायै नमो हृदि, ह्रींबीजाय नमो नाभौ, सौः शक्तये नमो गुह्ये, क्लींकीलकाय नमः पादयोः, विनियोगाय नमः

सर्वाङ्गेषु । ध्यानम्—

उद्यद्दिवाकरसहस्ररुचिं त्रिनेत्रां
 सिंहासनोपरि गताम्मुरगोपवीताम् ।
खड्गाम्बुजाढ्यकलशामृतपात्रहस्तां
 राज्ञीं भजामि विकसद्वदनारबिन्दाम् ॥ १ ॥
तारमिन्दुकलिकावतंसितं
 वेदसागरमणिं मनोहरम् ।
यो जपेदुषसि रत्नमालया
 राज्यमाशु लभते स साधकः ॥ २ ॥
भूतिमिन्दुनवबिन्दु (म्ब) मण्डितां
 नादबिन्दुललितां जपेत्तु यः ।
वारमेकमुरुवारणस्थितो[1]
 जेष्यति स्मयमयानरीन् रणे ॥ ३ ॥
रमां जपेद्यो भुवनेशि मन्त्री
 त्वन्मन्त्रमध्ये मदनोपतप्तः ।
रम्भां समालिङ्ग्य विमानचारी
 लीलां भजेन्नन्दनवाटिकायाम् ॥ ४ ॥
वह्निबीजमणिमादिसिद्धिदं
 बिन्दुबिम्बशशिखण्डमण्डितम् ।
यो जपेन्निशि धनाभिलाषवान्
 स क्षणाद्भवति वित्तदोपमः ॥ ५ ॥
कामराजममराभिवन्दितो
 यो जपेन्निभुवनेऽक्षमालया ।

---

१ 'वारमेकसुरवारणस्थितो' क. पाठः ।

तस्य यान्ति वशतां सुराङ्गनाः
किं पुनर्जगति भूभृदङ्गनाः ॥ ६ ॥
शक्तिं भक्त्या यो जपेच्छक्तिपूजा-
काले कालीपादपद्मार्पितान्तः ।
नक्तं तस्य स्मेरवक्त्रा घृताची
वेश्या वश्या स्वर्गता वा शची च ॥ ७ ॥
भगवत्यै तथा राज्ञ्यै नाममन्त्रमिति स्मरेत् ।
यो देवि तस्य वश्याः स्युर्भैरवस्याष्टसिद्धयः ॥ ८ ॥
मायार्णमन्ते यदि साधकेन्द्रो
जपेन्महेशानि शवालयस्थः ।
तत्रैव देवीं परमार्थराज्ञीं
पश्येत् स सद्यो वरसिद्धिदात्रीम् ॥ ९ ॥
ठद्वयं यदि जपेन्निशात्यये
चीरभुक् सुतटिनीतटास्थितः ।
जिष्णुविष्णुकमलासनेश्वरा
यान्ति देवि वशतां तदा क्षणात् ॥ १० ॥
भूगेहवृत्तत्रयनागपत्र-
षडश्रयोन्यश्रकबिन्दुबिम्बे ।
निषेदुषीं राजकुलाधिदेवीं
राज्ञीं भजे राजकुलावतंसाम् ॥ ११ ॥
देवि श्रीभूतधात्रि प्रवरगुणमये निष्कले निर्गुणे मे[२]
माये मातः शरण्ये गिरिवरतनये चिन्मये तत्त्वरूपे ।
दुर्गे चण्डि प्रमत्ते त्रिपुरविजयिनि स्मेरवक्त्रे वरेण्ये
कारुण्याढ्ये प्रशस्ते सुरदितिजनुते राज्ञि त्वं वै प्रसीद ॥ १२ ॥

---

१ 'स्व' ख. ग. पाठः । २ 'ऽमे' ग. पाठः ।

इति स्तोत्रं मन्त्रस्फुरणकरुणानन्दनिलयं
पठेद्भक्त्या प्रातस्तव गिरिसुते यो निरलसम् ।
भवेत् सद्यो भूमौ नृपमुकुटनीराजितपदो
मृतो मुक्तिं मर्त्यस्तव भवनमाप्नोति वरदे ॥ १३ ॥
इति राज्ञ्याः परं तत्त्वं पञ्चाङ्गमखिलं शिवे ।
सर्वस्वं च रहस्यं मे सर्वसारस्वतप्रदम् ॥ १४ ॥
आनन्दवर्धनं गुह्यं परमैश्वर्यकारणम् ।
भोगापवर्गदं पुण्यं दारिद्र्यभयनाशनम् ॥ १५ ॥
राज्यप्रदं भक्तिकरं सर्वशत्रुनिबर्हणम् ।
पञ्चाङ्गमखिलं देव्या न वक्तव्यं दुरात्मने ।
तव भक्त्या मयाख्यातं गोपनीयं प्रयत्नतः ॥ १६ ॥

श्रीदेव्युवाच ।

भगवन् करुणाम्भोधे क्रीतास्मि भवताधुना ।
दास्यस्मि तव भक्तास्मि कृतार्थास्मि जगत्प्रभो ॥ १७ ॥
पञ्चाङ्गकथनेनास्या राज्ञ्या देव्या महेश्वर ।
भवत्प्रसादाद् देव्यस्मि किमन्यत् कथयामि ते ॥ १८ ॥

श्रीभैरव उवाच ।

इदं रहस्यं पञ्चाङ्गं राज्ञीदेव्या मयेरितम् ।
कौलानां सिद्धिदं वामाद्गोपनीयं स्वयोनिवत् ॥ १९ ॥

इति श्रीरुद्रयामले तन्त्रे दशविद्यारहस्ये
श्रीमहाराज्ञीस्तोत्रम् ॥ ५ ॥

## समाप्तमिदं श्रीमहाराज्ञीपञ्चाङ्गम् ।

अथ

# बालात्रिपुरापञ्चाङ्गम्

## बालापटलम् ।

कैलासशिखरासीनं भगवन्तमुमांपतिम् ।
चन्द्रार्धमुकुटं देवं सोमसूर्याग्निलोचनम् ॥ १ ॥
गजचर्मपरीधानं विरूपाक्षं सुरार्चितम् ।
गणगन्धर्वयक्षेन्द्र-देवासुरनमस्कृतम् ॥ २ ॥
विहसन्तं जपन्तं च पठन्तं च मुहुर्मुहुः ।
उत्थाय प्रणता भूत्वा चेदं पृच्छति भैरवी ॥ ३ ॥

श्रीभैरवी ।

भगवन् करुणाम्भोधे सर्वागमविशारद ।
त्वत्प्रसादान्मया सर्वाः श्रुता विद्याः सुरेश्वर ॥ ४ ॥
इदानीं श्रोतुमिच्छामि बालां त्रिपुरसुन्दरीम् ।
देयास्ति यदि मे देव वद विद्यां महेश्वर ॥ ५ ॥

श्रीभैरवः ।

शृणु देवि प्रवक्ष्यामि पञ्चाङ्गं साधकेष्टदम् ।
पटलं पद्धतिं वर्म तथा नाम्नां सहस्रकम् ॥ ६ ॥
स्तवराजं महादेवि शृणुष्वैकाग्रमानसा ।
श्रीबाला परमेशानी भुक्तिमुक्तिप्रदायिनी ॥ ७ ॥

---

'दयास्ति' ग. 'देयास्मि' ख. पाठः ।

राज्यं देयं शिरो देयं गृहं लक्ष्मीयुतं तथा
सर्वं देयं महादेवि न देयमिदमुत्तमम् ॥ ८ ॥
अस्या विद्यायाः सदृशी विद्या नान्या कलौ युगे ।
श्रीबालात्रिपुराविद्या शीघ्रं सिद्धिप्रदा स्मृता ॥ ९ ॥
देया शिष्याय शान्ताय गुरुभक्तिरताय च ।
नाभक्ताय प्रदातव्या विद्येयं परमेश्वरि ॥ १० ॥
मन्त्रोद्धारं तथा यन्त्रं प्रस्तारं ध्यानमेव च ।
प्रयोगान् संप्रवक्ष्यामि देवदेव्या महेश्वरि ॥ ११ ॥
प्रथमं शृणु देवेशि मन्त्रोद्धारं फलप्रदम् ।
गोपनीयं प्रयत्नेन येन सिद्धिः प्रजायते ॥ १२ ॥
वाग्भवं कामराजश्च शक्तिमध्येऽभिधं न्यसेत् ।
नमोऽन्ते देवि बालाया मन्त्रोऽयं चाष्टवर्णकः ॥ १३ ॥
नापि विघ्नो न वाशौचो न वारनियमस्तथा ।
स्वयं सिद्धो महादेवि मन्त्रराजः कलौ युगे ॥ १४ ॥
दक्षिणामूर्तिपङ्क्त्यौ च मुनिश्छन्दः क्रमात् स्मृतम् ।
देवता त्रिपुरा बाला आद्यन्ते बीजशक्तिके ॥ १५ ॥
क्लीं कीलकं समादिष्टं धर्मकामार्थमुक्तये ।
शिरसि वदने देवि हृदये गुह्यदेशके ॥ १६ ॥
पादयोर्नाभिकमले सर्वाङ्गे च तथा न्यसेत् ।
ऋष्यादिकं महादेवि कुर्यान्न्यासविकल्पनाम् ॥ १७ ॥
करन्यासं षडङ्गं च बीजैः कुर्यान्महेश्वरि ।
अस्या ध्यानं प्रवक्ष्यामि साधकानां हितप्रदम् ॥ १८ ॥

रक्ताम्बरां चन्द्रकलावतंसां
समुद्यदादित्यनिभां त्रिनेत्राम् ।

विद्याक्षमालाभयदानहस्तां
ध्यायामि बालामरुणाम्बुजस्थाम् ॥ १९ ॥
इति ध्यात्वा महादेवीं जपेन्मन्त्रं सुसिद्धिदम् ।
लक्षत्रयं पुरश्चर्याविधौ साधकसत्तमः ॥ २० ॥
अथ वक्ष्यामि देवेशि यन्त्रोद्धारं सुदुर्लभम् ।
साधकस्य महादेव्या भुक्तिमुक्तिफलप्रदम् ॥ २१ ॥
बिन्दुत्रिकोणवसु[1]कोणकनागपत्र-
वृत्तत्रयाश्रितमहीसदनत्रयं च ।
बालादिचक्रमिदमार्तिहरं गिरीशे
ब्रह्मेन्द्रविष्णुनमितं गदितं मया ते ॥ २२ ॥
एवं विलिखिते यन्त्रे पीठशक्तीः प्रपूजयेत् ।
इच्छाज्ञानक्रियाश्चैव कामिनी कामदायिनी ॥ २३ ॥
रती रतिप्रियानन्दा मनोन्मन्यपि वा[2]न्तिमा ।
पीठशक्तीरिमा इष्ट्वा पीठं तन्मनुना दिशेत् ॥ २४ ॥
व्योमपर्वततार्तीयं सदाशिवमहापदम् ।
पीठपद्मासनायान्ते नमोन्तः पीठमन्त्रकः ॥ २५ ॥
षोडशार्णस्ततो मूर्तौ क्लिप्तायां मूलमन्त्रतः ।
आवाह्य पूजयेद् देवीमुपचारैः पृथग्विधैः ॥ २६ ॥
देवीमिष्ट्वा मध्ययोनौ त्रिकोणे मतिपूर्वकः ।
वामकोणे रतिं दक्षे प्रीतिमग्रे मनोभवाम् ॥ २७ ॥
योन्यां तु वह्निकोणादावङ्गानि परिपूजयेत् ।
मध्ययोन्यां बहिः पूर्वदिक्षु[3] चाग्रे स्मरानपि ॥ २८ ॥
बाणदेवीस्तद्वदेव शक्तीरष्टासु योनिषु ।
सुभगाख्या भगा पश्चात्तृतीया भगसर्पिणी ॥ २९ ॥

१ 'रस' ख. पाठः : । २ 'चान्तिमा' ग. पाठः । ३ 'दिशि' ग. पाठः ।

भग्नमाला तथानङ्गाद्यानङ्गकुसुमा परा ।
अनङ्गमेखलानङ्गमदनेत्यष्टशक्तयः ॥ ३० ॥
पद्मकेसरगा ब्राह्मीमुखाः पत्रेषु भैरवाः ।
दलाग्रेऽप्यष्ट पीठानि कामरूपाख्यमादिमम् ॥ ३१ ॥
मलयं कौलगिर्याख्यं चौहाराख्यं कुलान्तकम् ।
जालन्धरं तथौड्याणं देवकूटमथाष्टमम् ॥ ३२ ॥
भूगृहे च धरादिक्षु हेरुकं त्रिपुरान्तकम् ।
वेतालमग्निजिह्वं च कालान्तककपालिनौ ॥ ३३ ॥
एकपादं भीमरूपं मलयं हाटकेश्वरम् ।
शक्राद्यानायुधैः सर्वैः स्वस्वदिक्षु सचर्मयेत् ॥ ३४ ॥
तद्बहिर्दिक्षु वटुकं योगिनीः क्षेत्रपालकम्[1] ।
गणेशं विदिशासु वै वसून् सूर्यं शिवं तथा ॥ ३५ ॥
(सर्वभूतान् समभ्यर्च्य पूजयेदायुधांस्तथा) ।
बालां मध्ये विभाव्यादौ कामेश्वराङ्कमध्यगाम् ॥ ३६ ॥
मकारैः पञ्चभिः कौलः कौलाचारपरायणः ।
संपूजयेन्महादेवि साधको मन्त्रसाधकः ॥ ३७ ॥
बिन्दौ गन्धाक्षतैः पुष्पैर्धूपदीपादितर्पणैः ।
लयाङ्गमिदमाख्यातं प्रयोगाञ् शृणु पार्वति ॥ ३८ ॥
यान् विधाय मनुः शीघ्रं सिद्धिभाग् भवति ध्रुवम् ।
स्तम्भनं मोहनं चैव मारणाकर्षणे तथा ॥ ३९ ॥
वशीकारं तथोच्चाटं शान्तिकं पौष्टिकं तथा ।
एतत्साधनमाचक्षे सारभूतं मनोः प्रिये ॥ ४० ॥
अदेयं देव्यभक्ताय गोप्यं गुह्यतमं पशोः ।
(१) प्रतिपद्दिवसे देवि स्नात्वा कृत्वाह्निकीं क्रियाम् ॥ ४१ ॥

१ 'नायकं' ख. पाठः ।

मध्याह्ने निर्जनं गत्वा यथावदयुतावधि ।
होमो दशांशतः कार्यो घृतपायसबर्हकैः ॥ ४२ ॥
संतर्प्य देवताः सद्यः स्तम्भनं जायते ध्रुवम् ।
राजसूर्येन्दुवातानां दस्युवादिमुखेषु च ॥ ४३ ॥

(२) दर्शे सायं श्मशाने तु जपेदुलूकविष्टरः ।
अयुतं तद्दशांशेन होमं सर्पिस्सुरान्वितैः ॥ ४४ ॥
कर्णकेसरपद्माद्यैर्मोहनं जगतां भवेत् ।

(३) भूताख्ये वासरे देवि गत्वा प्रेतालयं निशि ॥ ४५ ॥
चिताग्रे संजपेद्विद्यां वीरेन्द्रः षोडशाक्षरीम् ।
अयुतं च हुनेन्मन्त्री चिताग्नौ घृतगुग्गुलम् ॥ ४६ ॥
चण्डालकेशसहितं म्रियते रिपुरुत्कटः ।

(४) अष्टम्यां शुक्लपक्षे तु जपेद्रहसि साधकः ॥ ४७ ॥
अयुतं मूलविद्याया ध्यात्वा कान्तां मनोगताम् ।
होमो दशांशतः सर्पिर्लाक्षापुष्पवतीरजः ॥ ४८ ॥
करीरपूलगोधूमैः स्त्रीणामाकर्षणं भवेत् ।

(५) नवम्यां साधकः स्नात्वा कृत्वा कर्माह्निकं प्रिये ॥ ४९ ॥
अयुतं घृतमत्स्यण्ड–पद्ममुक्कणरोमभिः ।
होमो विधेयो वरिशै(?)र्वासवो दासतां व्रजेत् ॥ ५० ॥

(६) चतुर्थ्यां कृष्णपक्षे तु जपेच्चन्द्रोदये शिवे ।
नदीतीरे मनुं वीरोऽयुतं शीर्षासनस्थितः ॥ ५१ ॥
दशांशेन हुनेत्तत्र घृतनीलोत्पलत्वचः ।
लवङ्गमरिचाम्लादीन् रिपोरुच्चाटनं भवेत् ॥ ५२ ॥

(७) पञ्चम्यां निशि देवेशि जपेदयुतसंख्यया ।
हुनेद् दशांशतः सर्पिर्मत्स्यमत्स्यण्डखर्परान् ॥ ५३ ॥

---

१ 'नागकेसर' घ. ङ. पाठः 'कनकेसर' ग. पाठः ।

महामय–महाभीति-महोपद्रवशान्तये ।

(८) महाष्टम्यां नरः स्नात्वा पीठे श्रेष्ठे दशाधिकाम् ॥ ५४ ॥

वीरो दशाङ्कसाहस्रीं हुनेत्तत्र दशांशतः ।

घृतखर्जूरमृद्वीका-नागवल्लीदलस्रजः ॥ ५५ ॥

छागमांसं सरक्तं च महापुष्टिः प्रजायते ।

इदं रहस्यमाख्यातं सर्वतत्त्वनिरूपणम् ॥ ५६ ॥

सर्वस्वं मम देवेशि रहस्यं गोपयेत् कलौ ।

सूर्यादिवारेषु जपैर्दशसाहस्रसंख्यकैः ॥ ५७ ॥

सर्वसिद्धिमवाप्नोति नात्र कार्या विचारणा ।

इत्येष पटलो दिव्यः स्नेहात् तव प्रकाशितः ।

गोप्याद् गोप्यो गोप्यतरो गोपनीयः स्वयोनिवत् ॥ ५८ ॥

इति श्रीरुद्रयामले तन्त्रे भैरवभैरवीसंवादे
श्रीबालात्रिपुरसुन्दरीपटलः ॥ १ ॥

अथ

## श्रीबालायाः पद्धतिः ।

अधुना कथयिष्यामि पद्धतिं गद्यरूपिणीम् ।

श्रीबालात्रिपुरेश्वर्यास्तत्त्वतः सौख्यदायिनीम् ॥ १ ॥

प्रातः कृत्यमकृत्वा तु यो देवीं भक्तितोऽर्चयेत् ।
तस्य पूजा तु विफला शौचहीना यथा क्रिया ॥ २ ॥

श्रीमान् साधको ब्राह्मे मुहूर्ते शयनतलादुत्थाय करचरणमुखादि प्रक्षाल्य, बद्धपद्मासनः समुपविश्य स्वशिरःस्थसहस्राराधोमुखकमलकर्णिकान्तर्गतं निजगुरुं स्वशक्त्या सहितं ध्यात्वा, मानसोपचारैः संपूज्य दण्डवन्नत्वा, गुरूक्तविधिना प्रातःकृत्यमजपाजपं च विधाय, स्वकार्यानुष्ठानाय भूमिं प्रार्थ्य श्वासानुसारेण तस्यां पादावुपन्यस्य, गृहाद्बहिर्निःसृत्य, नैर्ऋत्यां याम्यां वा दिशि मलमूत्रोत्सर्ग — शौचाचमन — दन्तधावनादिकं विधाय नद्यादौ गत्वा वैदिकं निर्वर्त्य तान्त्रिकमारभेत । तत्रादौ मूलयुक्ततत्त्वत्रयेणाचम्य, ह्रींस्वाहा इत्यनेन वाचम्य, मूलं स्मरन् मलापकर्षणस्नानं विधाय, पुनराचम्य अद्येत्यादिमासाद्युत्कीर्तनं विधाय, श्रीकुलदेवताप्रीतये तान्त्रिकविधिना स्नानमहं करिष्ये इति संकल्प्य, जले त्रिकोणचक्रं विभाव्य सूर्यमण्डलात् "गङ्गे च यमुने चैव" इत्यादिनाङ्कुशमुद्रया तीर्थमावाह्य, पुरःकल्पिततीर्थे संयोज्याचम्य स्वात्मानं प्रोक्ष्य, मूलेन मृदा स्नपनं विधाय, मूलं पठन्नावाहितां स्वदेवतां त्रिरभिषिच्य, श्रवणादिसप्तच्छिद्राणि निरुध्य त्रिर्निमज्ज्योन्मज्जेदिति स्नानविधिः ॥

अथ संध्या । तत्र पूर्ववदाचम्य स्वमूलप्राणायामर्ष्यादिकरषडङ्गं विधाय पूर्ववत्तीर्थमावाह्य, वामहस्ते तज्जलं निधाय दक्षहस्तेनाच्छाद्य यंरंवंलंहं इति पाञ्चभौतिकमन्त्रैः सप्तवारमभिमन्त्र्य, मूलविद्यया त्रिरभिमन्त्र्य, तज्जलबिन्दुभिर्वामाङ्गुष्ठानामिकाभ्यां मूलविद्यया स्वशिरस्त्रिः प्रोक्ष्यावशिष्टजलं वामहस्ते निधाय, त्रिरभिमन्त्र्य मूलमुच्चरंस्तत्त्वमुद्रया मूर्ध्नि सप्तधा मूलेन च त्रिधाभ्युक्ष्य, शेषं जलं दक्षहस्ते समादाय तेजोरूपं ध्यात्वा, इडया देहान्तःपापं प्रक्षाल्य, कृष्णवर्णं तज्जलं पापरूपं पिङ्गलया विरिच्य वामे कल्पितवज्रशिलायां फडिति निःक्षिपेत् । ततोऽर्घ्यं विधाय, 'ॐह्रांह्रींसः श्रीमार्तण्डभैरवाय प्रकाशशक्तिसहिताय इदमर्घ्यं परिकल्पयामि स्वाहा' इति त्रिरर्घ्यं कुलसूर्याय दत्त्वा, हृत्पद्मात् सूर्यमण्डले मूलदेवीं नीत्वा तत्र विधिवद्ध्यात्वा, ऐं वागीश्वर्यै विद्महे क्लीं कामेश्वर्यै धीमहि सौः तन्नः शक्तिः प्रचोदयात्, इत्यनया मूलगायत्र्या चतसृषु संध्यासु सूर्यमण्ड-

ले मूलदेव्यै अर्घ्यं दत्त्वा यथाशक्ति जपेत् । ततश्चतसृषु संध्यासु क्रमशो मूलाधार—हृत्कमल--भ्रूमध्य—ब्रह्मरन्ध्रेभ्यो देवीतेजः समाकृष्य इडया विरेच्य, कल्पितवह्निसूर्यचन्द्रतारामण्डलेषु निक्षिप्य, तत्र बालयौवनप्रौढचिद्रूपां देवीं ध्यात्वा, ततः ऐं त्रिपुरादेव्यै विद्महे वागीश्वर्यै धीमहि तन्नो मुक्तिः प्रचोदयात्, इति प्रातः । क्लीं त्रिपुरादेव्यै विद्महे कामेश्वर्यै धीमहि तन्नः क्लिन्ना प्रचोदयात्, इति मध्याह्ने । सौः त्रिपुरादेव्यै विद्महे शक्तीश्वर्यै धीमहि तन्नोऽमृते प्रचोदयात्, इति सायं । ऐं वागीश्वर्यै विद्महे क्लीं कामेश्वर्यै धीमहि सौः तन्नः शक्तिः प्रचोदयात्, इति अर्धरात्रे । इति स्वस्वगायत्र्यार्घ्यं दत्त्वा यथाशक्ति स्वस्वगायत्रीं च जप्त्वा, पुनर्मूलगायत्रीं च जप्त्वा स्वस्वबीजाक्षरं सर्वं मूलं च जप्त्वा, प्राणायामादिना जपं समर्प्य मण्डलेभ्यो देवीतेजः स्वस्थाने देवीं च हृद्यानीय ध्यायेदिति संध्याविधिः ॥

ततस्तर्पणम् । तत्र पूर्ववदाचम्य प्राणायामादि कृत्वा तीर्थमावाह्य, मूलेन जलं सप्तधामृतमुद्रयामृतीकृत्य तत्र जले यन्त्रं ध्यात्वा, तत्र देवीं हृदयात् सपरिवारामानीय षडङ्गयोगेन सकलीकृत्य कुण्डलिन्याः प्रयोगेणामृतेनाभिषिच्य विधिवत् प्रपूज्य, ऐशान्यां ४ श्रीकौलानन्दनाथभैरवस्तृप्यताम् इति त्रिः संतर्प्य, वह्नौ ४ परमगुरुं, नैर्ऋत्यां ४ परमाचार्यं, वायव्ये ४ परमेष्ठिगुरुं, त्रिः सकृद्वा संतर्प्य, दिव्यौघसिद्धौघमानवौघानपि गुरून् संतर्प्य जले यन्त्रं विभाव्य, मूलं कामेश्वरसहिता बालात्रिपुरा वागीश्वरी तृप्यतामिति त्रिः संतर्प्य परिवारानपि संतर्प्य, प्राणायामादि विधाय देवीं स्वहृदि विसृजेत् तीर्थं च स्वस्थाने विसृजेदिति तर्पणम् ॥

ततो यागगेहमागत्य जलादिना द्वारदेवताः पूजयेत् । ॐ धात्रे नमः, ॐ विधात्रे नमः, दक्षे । गंगङ्गायै नमः, यं यमुनायै नमः, वामे । द्वारश्रियै नमः वास्तुपुरुषाय नमः ऊर्ध्वे । देहल्यै नमः इत्यधः संपूज्य, स्वासनमास्तीर्य 'ह्रीं आधारशक्तिकमलासनाय नमः' इति संपूज्य वीराद्यासनेनोपविश्य, "पृथिव त्वया धृता लोकाः" इत्यादिना पृथिवीं प्रार्थ्य, मण्डूकाय नमः, कालाग्निरुद्राय० । ह्रीं आधारशक्तिकमलासनाय० । ह्रीं पीठासनाय० । इत्यासनं संपूज्य, तदुपरि समुपविश्य, संविदं यथामन्त्रं स्वीकुर्यात् । तद्विधिर्यथा—

संविदे ब्रह्मसंभूते ब्रह्मपुत्रि सदानघे । ब्राह्मणानां च तृप्त्यर्थं पवित्रा भव सर्वदा ॥ ऊँ ब्राह्मण्यै नमः स्वाहा । ऊँ सिद्धमूल्यक्षये[1] देवि हीनबोधप्रबोधिनि । राजप्रजावशङ्करि[2] शत्रुपक्षनिसूदिनि ॥ ऐं क्षत्रियायै नमः स्वाहा । अज्ञानेन्धनदीप्ताग्ने ज्ञानाग्निब्रह्मरूपिणि । आनन्दस्याहुतिं प्रीतिं[3] सम्यग्ज्ञानं प्रयच्छ मे ॥ ह्रीं वैश्यायै नमः स्वाहा । नमस्यामि नमस्यामि योगमार्गप्रदर्शिनि । त्रैलोक्यविजये मातः समाधिविजया[4] भव ॥ क्लीं शूद्रायै नमः स्वाहा । इत्यभिमन्त्र्य, "ऊँअमृते अमृतोद्भवे अमृतवर्षिणि अमृतमाकर्षय २ सिद्धिं देहिदेहि त्रिपुरसुन्दरी-पदं मे वशमानय २ स्वाहा" इति तदुपरि सप्तधा मूलं च जप्त्वा, धेनुयोनिमुद्रयामृतीकृत्य आवाहनादिमुद्राः संदर्श्य, छोटिकाभिर्दिग्बन्धनं विधाय, सप्तधा त्रिधा वा श्रीगुरुं देवतां च संतर्प्य, "ऐं वदवद वाग्वादिनि मम जिह्वाग्रे स्थिरीभव सर्वसत्त्ववशङ्करि स्वाहा" इत्यनेन मुखे जुहुयात् । ततः आनन्दमयो भूत्वा।

"अपसर्पन्तु ते भूता ये भूता भुवि संस्थिताः । ये भूत विघ्नकर्तारस्ते नश्यन्तु शिवाज्ञया ॥ पाषण्डकारिणो ये च भूता भूम्यन्तरिक्षगाः । दिवि लोके स्थिता ये च ते नश्यन्तु शिवाज्ञया ॥ इति तर्जनीमध्यमाभ्यामूर्ध्वोर्ध्वं तालत्रयदानेन वामपार्ष्णिघातत्रयेण दिव्यदृष्ट्या च त्रिविधविघ्नानुत्सार्य, छोटिकाभिर्दशदिग्बन्धनं कृत्वा चतुर्दिक्षु वह्निप्राकारं संचिन्त्य प्राणायामं कुर्यात् । तत्र प्रणवं षोडशवारमुच्चरन् दक्षाङ्गुष्ठेन दक्षनासापुटं निरुध्य वामेन पवनं पूरयेत् । ततस्तमेव चतुष्षष्टिवारमुच्चरन् दक्षानामाकनिष्ठिकाभ्यां वामं च पुटं निरुध्य द्वाभ्यां पवनं कुम्भयेत् । ततस्तमेव द्वात्रिंशद्वारमुच्चरन् वामं पुटं तथैव निरुध्य दक्षेण पवनं रेचयेदित्येकः प्राणायामः । एष एव विपर्ययेण द्वितीयः, प्रथमवत् तृतीयः । इति प्राणायामत्रयेण निरस्तसकलकलुषं स्वदेहं देवताराधनयोग्यं विभाव्य भूतशुद्धिं कुर्यात् ।

अथ मूलाधाराद्धंस इति मन्त्रेण कुण्डलिनीं पृथिव्या सह स्वाधिष्ठानमानीय, तत्र जले पृथिवीं लीनां विभाव्य तस्माज्जलेन सह

---

१ 'सिद्धिमूलकरे' क. ख. ग. पाठः । २ 'राजपुत्र' ग. 'राजपूजा' क. ख. पाठः ।
३ 'मत्वा' क. पाठः । ४ 'फलदा' क. ख. ग. पाठः ।

मणिपूरकं समानीय, तत्र वह्नौ जलं लीनं विभाव्य तस्माद्वह्निना सहानाहतं समानीय, तत्र वायौ वह्निं लीनं विचिन्त्य तस्माद्वायुना सह विशुद्धं समानीय, तत्रस्थाकाशे वायुं लीनं विचिन्त्य तस्मादाकाशेन सहाज्ञाचक्रं समानीय, तत्र मनस्याकाशं लीनं विचिन्त्य, मनो नादे लीनं विभाव्य, ध्वनौ ध्वनिं समर्प्य, सहस्रदलकमलकर्णिकास्थचन्द्रमण्डलमध्यगतत्रिकोणान्तर्गततेजोमयबिन्दुरूपपरमशिवे देवतां समर्प्य, प्राणायामविधिना यमिति वायुबीजं धूम्रवर्णं षोडशवारं जपन् शारीरं पापपुरुषं, "वामकुक्षिस्थितं पापपुरुषं कज्जलप्रभम्। ब्रह्महत्याशिरस्कं च स्वर्णस्तेयभुजद्वयम् ॥ सुरापानहृदा युक्तं गुरुतल्पकटिद्वयम् । तत्संसर्गिपदद्वन्द्वमङ्गप्रत्यङ्गपातकम् ॥ उपपातकरोमाणं रक्तश्मश्रुविलोचनम् । खड्गचर्मधरं क्रुद्धं पापं कुक्षौ विचिन्तयेत् ॥" इत्थं संशोष्य, रमिति वह्निबीजं रक्तवर्णं चतुष्षष्टिवारं जपंस्तमेव संदह्य, वमित्यमृतबीजं शुक्लवर्णं सहस्रारे विचिन्त्य द्वात्रिंशद्वारं जपंस्तदुद्भवामृतवृष्ट्या निष्पापं शरीरमुत्पाद्य, ललाटस्थ-लमिति पृथ्वीबीजेन पीतवर्णेन सुदृढीकृत्य, ह्रीमिति मूलस्थेन बीजेन सैश्वर्यं विधाय, सोऽहमिति मन्त्रेण कुण्डलिनीममृतलोलीभूतां पञ्चभूतानि जीवात्मानं च ब्रह्ममार्गेण स्वस्वस्थाने नियोजयेत् । ततो देवीरूपमात्मानं विचिन्त्य हृदि हस्तं निधाय प्राणप्रतिष्ठां कुर्यात् ।

'ॐआंह्रींक्रोंहंसः श्रीबालात्रिपुरायाः प्राणा इह प्राणाः १३ँ जीव इह स्थितः १३ँ सर्वेन्द्रियाणि इह स्थितानि १३ँ वाङ्मनश्चक्षुःश्रोत्रघ्राणा इहागत्य सुखं चिरं तिष्ठन्तु स्वाहा' इति प्राणप्रतिष्ठां विधाय, स्वमूलऋष्यादिचिन्तनं विदधीत । यथा—

अस्य श्रीबालात्रिपुरामन्त्रस्य दक्षिणामूर्तिर्ऋषिः पङ्क्तिश्छन्दः श्रीबालात्रिपुरा देवता ऐं बीजं सौः शक्तिः क्लीं कीलकं पूजादौ विनियोगः इति कृताञ्जलिः स्मृत्वा यथाविधि न्यसेत् । दक्षिणामूर्तिऋषये नमः शिरसि, पङ्क्तिच्छन्दसे नमो मुखे, श्रीबालात्रिपुरादेवतायै नमो हृदि, ऐं बीजाय नमो गुह्ये, सौः शक्तये नमः पादयोः, क्लीं कीलकाय नमो नाभौ, विनियोगाय नमः सर्वाङ्गेषु । ऐं नमो नाभ्यादिपादान्तं, क्लीं नमः कण्ठादिनाभ्यन्तं, सौः नमो मूर्धादिकण्ठान्तम् ॥ ऐं नमो वामपाणितले क्लीं नमो दक्षे, सौः नमः उभयोः ॥

द्रां क्षोभणबाणाय नमः अङ्गुष्ठयोः, द्रीं द्रावणबाणाय नमः तर्जन्योः, क्लीं आकर्षणबाणाय नमो मध्यमयोः, ब्लूं वशीकरणबाणाय नमः अनामिकयोः, इति बाणन्यासः ॥

सौः कामाय नमः अङ्गुष्ठयोः, क्लीं मन्मथाय नमः तर्जन्योः, ऐं कन्दर्पाय नमो मध्यमयोः, ब्लूं मकरध्वजाय नमः अनामिकयोः, स्त्रीं मनकेतवे नमः कनिष्ठिकयोः, इति कामकरन्यासः ॥

अथ स्वमूलकरन्यासः । ऐं अङ्गुष्ठाभ्यां नमः, क्लीं तर्जनीभ्यां, सौः मध्यमाभ्यां, ऐं अनामिकाभ्यां, क्लीं कनिष्ठिकाभ्यां, सौः करतलपृष्ठाभ्यां नमः । एवं हृदयादिन्यासः । ततोऽन्तर्मातृकान्यासं बहिर्मातृकान्यासं च कृत्वा मातृकाविद्यान्यासं कुर्यात् । यथा—ऐं नमः मणिबन्धे, क्लीं नमः तले, सौः अग्रे, इति दक्षकरे । एवं वामकरे । ऐं नमः कक्षे, क्लीं कुर्परे, सौः पाणौ, इति दक्षे । एवं वामेऽपि । ऐं नमः अधः कक्षे, क्लीं जानुनि, सौः पादाग्रे इति दक्षे । एवं वामे । ऐं नमो लिङ्गे, क्लीं हृदि, सौः नादान्ते, इति विद्यान्यासः ॥

अथ नवयोनिन्यासः । ऐं नमो दक्षकर्णे, क्लीं वामे, सौः चिबुके, ऐं दक्षशङ्खे, क्लीं वामे, सौः मुखे, ऐं दक्षनेत्रे, क्लीं वामे, सौः नासायां, ऐं दक्षबाहौ, क्लीं वामे, सौः कुक्षौ, ऐं दक्षजानुनि, क्लीं वामे, सौः नाभौ, ऐं दक्षपादे, क्लीं वामे, सौः गुह्ये, ऐं दक्षपार्श्वे, क्लीं वामे, सौः हृदि, ऐं दक्षस्तने, क्लीं वामे, सौः कण्ठे, इति नवयोनिन्यासः ॥

अथ रत्यादिन्यासः । मूलाधारे ऐं रत्यै नमः, हृदि क्लीं प्रीत्यै०, भ्रूमध्ये सौः मनोभवायै० । पुनरप्येषु स्थानेष्वेता विन्यसेत् । सौः अमृतेश्यै नमः, क्लीं योगेश्यै नमः, ऐं विश्वयोन्यै नमः । ततः पुनरपि षडङ्गन्यासः संप्रदायेन । ऐं हृदयाय नमः, क्लीं शिरसे० । सौः शिखायै०, ऐं कवचाय०, क्लीं नेत्राभ्यां०, सौः अस्त्राय फट्, इति न्यासैर्देहं संनह्य, "मूलाधारे मूलविद्यां विद्युत्कोटिसमप्रभाम् ॥ सूर्यकोटिप्रतीकाशां चन्द्रकोटिसुशीतलाम् ॥ बिसतन्तुस्वरूपां तां बिन्दुत्रिवलयां प्रिये । ऊर्ध्वशक्तिनिपातेन सहजेन वरानने ॥ मूलशक्तिदृढत्वेन मध्यशक्तिप्रबोधतः । परमानन्दसंदोहसानन्दं चिन्तयेत् परम् ॥" इत्यन्तर्यजनं कृत्वा पीठपूजां न्यासेन

स्वदेहे कुर्यात् ।

मूलाधारे आधारशक्त्ये नमः, प्रकृत्यै नमः, स्वाधिष्ठाने कमठाय०, मणिपूरे शेषाय०, अनाहते पृथिव्यै०, तत्रैव सुधाम्बुधये०, मणिद्वीपाय०, चिन्तामणिगृहाय०, रत्नवेदिकायै०, मणिपीठाय०, दिक्षु नानामुनिगणेभ्यो०, नानादेवेभ्यो०, धर्माय नमः दक्षांसे । ज्ञानाय० वामांसे । वैराग्याय० वामोरौ । ऐश्वर्याय० दक्षोरौ । अधर्माय० दक्षकुक्षौ । अज्ञानाय० दक्षपृष्ठे । अवैराग्याय नमः वामपृष्ठे । अनैश्वर्याय० वामकुक्षौ । शेषाय० । पद्माय० । प्रकृतिमयपत्रेभ्यो० । विकृतिमयकेसरेभ्यो० । पञ्चाशद्वर्णभूषितकर्णिकायै० । सूर्यमण्डलाय० । सोममण्डलाय० । वह्निमण्डलाय० । सं सत्त्वाय० । रं रजसे० । तं तमसे० । आं आत्मने० । अं अन्तरात्मने० । पं परमात्मने० । ह्रीं ज्ञानात्मने० । पत्रेषु वामायै० । ज्येष्ठायै० । रौद्र्यै० । अम्बिकायै० । इच्छायै० । ज्ञानायै० । क्रियायै० । कुब्जिकायै० । चित्रायै० । विषघ्निकायै० । दूत्यै० । आनन्दायै० । मध्ये मनोन्मन्यै० । ऐं परायै० । अपरायै० । परापरायै० । ह्सौः सदाशिवमहाप्रेतपद्मासनाय नमः । परमशिवपर्यङ्काय नमः, इति पीठं न्यस्य तत्रैव हृदये श्रीबालां ध्यायेत् ।

मूलादिब्रह्मरन्ध्रान्तं बिसतन्तुतनीयसीम् ।
भ्रमद्भ्रमरनीलाभ-धम्मिल्लामलपुष्पिणीम् ॥ १ ॥
ब्रह्मरन्ध्रस्फुरद्भिन्न-मुखरेखाविराजिताम् ।
मुखरेखालग्नरत्नतिलकां मुकुटोज्ज्वलाम् ॥ २ ॥
विशुद्धमुक्तावज्राढ्य-चन्द्ररेखाकिरीटिनीम् ।
भ्रमद्भ्रमरनीलाभ-नयनत्रयराजिताम् ॥ ३ ॥
सूर्यभास्वन्महारत्नकुण्डलालङ्कृतां पराम् ।
शुक्राकारस्फुरन्मुक्ता-हारभूषणभूषिताम् ॥ ४ ॥
ग्रैवेयाङ्गदपत्रालि-स्फुरत्कान्तिजितामृताम् ।
गङ्गातरङ्गकर्पूर-शुभ्राम्बरविराजिताम् ॥ ५ ॥
श्रीखण्डवल्ली-सदृशबाहुवल्लीविराजिताम् ।
कङ्कणादिलसद्भूषा-मणिबन्धलसत्प्रभाम् ॥ ६ ॥

रक्तोत्पलदलाकार-पादपल्लवशोभिताम् ।
नक्षत्रमात्रासङ्काश-मुक्तामञ्जीरमण्डिताम् ॥ ७ ॥
वामेन पाणिनैकेन पुस्तकं चापरेण तु ।
अभयं च प्रयच्छन्तीं साधकानां वरानने ॥ ८ ॥
अक्षमालां च वरदं दक्षपाणिद्वयेन तु ।
दधतीं चिन्तयेद् देवीं वश्यसौभाग्य...क्प्रदाम् ।
क्षीरकुन्देन्दुधवलां प्रसन्नां संस्मरेत् प्रिये ॥ ९ ॥

इति श्रीबालात्रिपुरां ध्यात्वा मानसोपचारैराराध्य मनसा यथाशक्ति जपहोमादिकं च कृत्वा, "धर्माधर्महविर्दीप्ते स्वात्माग्नौ मनसा स्रुवा । सुषुम्नावर्त्मना नित्यमक्षवृत्तीर्जुहोम्यहं स्वाहा ॥" कामकलां विचिन्त्य तदुपरि श्रीबालां यथोक्तां ध्यायन्, स्ववामभागे षट्कोणान्तर्गतत्रिकोणद्वयबिन्दुबाह्यवृत्तचतुरश्रं कृत्वा स्वदक्षे त्रिकोणं वृत्तबिम्बं मण्डलं भूमौ विरच्य तत्राधारशक्तिं संपूज्य, तत्राधारं निःक्षिप्य, तदुपर्यस्त्रमन्त्रेण शोधितं हृन्मन्त्रेण पूरितं पात्रं शंखादिकं वा संस्थाप्य तत्र 'गङ्गे च यमुने चैव' इत्यादिना तीर्थमावाह्य गन्धादीन् प्रणवेन निःक्षिप्य, वह्निसूर्यसोमकलाभिः संपूज्य धेनुमुद्रां प्रदर्श्य स्वमन्त्रेण च संपूजयेदिति विधिविहितसामान्यार्घ्योदकेन स्ववामे कृतमण्डलमभ्युक्ष्य, तत्र 'आधारशक्तिभ्यो नमः' इत्यादि पीठपूजाक्रमेण संपूज्य, नमः इत्याधारं प्रक्षाल्य मण्डलोपरि संस्थाप्य, "रं वह्निमण्डलाय दशकलात्मने नमः" इति प्रपूज्य, फडिति कलशं प्रक्षाल्य, कारणेन प्रपूर्य रक्तवस्त्रमाल्यादिना संभूष्य देवीबुद्ध्या संस्थाप्य, "अं अर्कमण्डलाय द्वादशकलात्मने नमः" इति कलशे संपूज्य, ॐ चन्द्रमण्डलाय षोडशकलात्मने नमः" इति द्रव्ये संपूज्य, फडिति संरक्ष्य हूमित्यवगुण्ठ्य मूलेन संवीक्ष्य, नमः इत्यभ्युक्ष्य मूलेन गन्धमाघ्राय, कुम्भे पुष्पं दत्त्वा शापमोचनं कुर्यात्।

एकमेव परं ब्रह्म स्थूलसूक्ष्ममयं ध्रुवम् । कचोद्भवां ब्रह्महत्यां तेन ते नाशयाम्यहम् ॥ सूर्यमण्डलसंभूते वरुणालयसंभवे। अमाबीजमयि देवि शुक्रशापाद्विमुच्यताम् ॥ वेदानां प्रणवो बीजं ब्रह्मानन्दमयं यदि । तेन सत्येन देवेशि ब्रह्महत्या व्यपोहतु ॥ पवमानः प-

रानन्दः पवमानः परो रसः । पवमानं परं ज्ञानं तेन ते पावयाम्यहम् ॥ कृष्णशापविनिर्मुक्ता त्वं मुक्ता ब्रह्मशापतः । विमुक्ता रुद्रशापेन पवित्रा भव सांप्रतम् ॥

इति त्रिः पठित्वा, ततः ओं वांवींवूंवैंवौंवः ब्रह्मशापमोचितायै सुरादेव्यै नमः इत्यपि त्रिः । ह्रींश्रींक्रांक्रींक्रूंक्रैंक्रौंक्रः सुराकृष्णशापं मोचय २ अमृतं स्रावय २ स्वाहा इति त्रिः । हंसः शुचिषद्वसुरन्तरिक्षसद्धोता वेदिषदतिथिर्दुरोणसत् । नृषद्वरसदृतसद्व्योमसदब्जा गोजा ऋतजा अद्रिजा ऋतं ॥ इत्यपि त्रिः पठित्वा, आनन्दभैरवं सुरादेवीं च तत्र ध्यात्वा, 'हसक्षमलवरयऊं आनन्दभैरवाय वौषट्, सहक्षमलवरयऊं सुरादेव्यै वौषट्' इति देवदेव्यौ त्रिः संपूज्य द्रव्यमध्ये दक्षिणावर्तेन त्रिः पंक्त्या अं १६ कं १६ थं १६ इति शक्तिचक्रं विलिख्य तन्मध्ये हंक्षं च, तत्समावेशाद् द्रव्यमध्येऽमृतं विचिन्त्य, धेनुमुद्रयामृतीकृत्य वमिति सुधाबीजं मूलमप्यष्टधा घटं धृत्वा पठित्वा, आत्मश्रीचक्रयोर्मध्ये त्रिकोणषट्कोणवृत्तचतुरस्रं विलिख्य, चतुरश्रे पूर्णगिरिपीठाय नमः, उड्डीयानपीठाय०, कामरूपपीठाय०, जालन्धरपीठाय०, इति संपूज्य, षट्कोणे षडङ्गं संपूज्य, त्रिखण्डेन त्रिकोणाग्रदक्षोत्तरं संपूज्य, मध्ये आधारशक्तीः संपूज्य त्रिकोणगर्भे यन्त्रिकां संस्थाप्य, नमः इति सामान्यार्घ्यजलेनाभ्युदय, यं धूम्रार्चिषे नमः । रं ऊष्मायै० । लं ज्वलिन्यै० । वं ज्वालिन्यै० । शं विस्फुलिङ्गिन्यै० । षं सुश्रियै० । सं स्वरूपायै० । हं कपिलायै० । ळं हव्यवाहायै० । क्षं कव्यवाहायै० । मध्ये रं वह्निमण्डलाय दशकलात्मने नमः इति संपूज्य, षट्कोणे षडङ्गं संपूज्य, मध्ये मूलेन देवीं संपूज्य, पात्रं फडिति प्रक्षाल्य, यन्त्रिकोपरि संस्थापयेत् । तत्र कंभं तपिन्यै० नमः । खं बं तापिन्यै०, गं फं धूम्रायै० । घं पं मरीच्यै० । ङं नं ज्वलिन्यै० । चं धं रुच्यै० । छं दं सुषुम्नायै० । जं थं भोगदायै० । झं तं विश्वायै० । ञं णं बोधिन्यै० । टं ढं धारिण्यै० । ठं डं क्षमायै नमः । अं अर्कमण्डलाय द्वादशकलात्मने नमः इति संपूज्य, त्रिकोणवृत्तषट्कोणं पात्रं विलिख्य समस्तव्यस्तमन्त्रेण संपूज्य, वरुणबीजं मूलं विलोममातृकां च पठन्, अमृतेन त्रिकोणं प्रपूर्य जलेन च भागमेकं प्रपूर्य, तत्र सुगन्धादि निःक्षिप्य, अं अमृतायै नमः । आं मानदायै० । इं पूषायै० । ईं तुष्ट्यै० । उं पुष्ट्यै० । ऊं

रत्यै० । ॠं धृत्यै० । ॠं शशिन्यै० । लृं चण्डिकायै० । लॄं कान्त्यै० । एं ज्योत्स्नायै० । ऐं श्रियै० । ओं प्रीत्यै० । औं अङ्गदायै० अं पूर्णायै० । अः पूर्णामृतायै नमः । ओं सोममण्डलाय षोडशकलात्मने नमः इति संपूज्य, पूर्ववन्मन्त्रं द्रव्ये विलिख्य त्रिकोणत्रिरेखायां अं आं इत्यादि क्षः इत्यन्तं मातृकां त्रिर्विलिख्य, मूलखण्डत्रयेण त्रिकोणं संपूज्य षट्कोणे षडङ्गं च, गङ्गेत्यादिना तीर्थमावाह्य, आनन्दभैरवभैरव्यौ स्वमन्त्रेण संपूज्य, पूर्वादितः ग्लूं गगनरत्नेभ्यो नमः । स्लूं स्वर्गरत्नेभ्यो० । म्लूं मर्त्यरत्नेभ्यो०। प्लूं पातालरत्नेभ्यो० । मध्ये न्लूं नागरत्नेभ्यो० । इति संपूज्य, मांसादि संशोध्य हूमित्यवगुण्ठ्य अमृतीकृत्य, तालत्रयेण दिशः संबद्ध्य, तदुपरि सप्तधा मूलं संपूज्य तत्र देवीमावाह्य, तालत्रयेण दिग्बन्धनं विधाय अवगुण्ठ्यामृतीकृत्य, योनिमुद्रां प्रदर्श्य, ह्सौः नमः इति संपूज्य, शंखमुद्रां प्रदर्श्य षडङ्गेन सकलीकृत्य मत्स्यमुद्रया पात्रमाच्छाद्य मूलं दशधा जप्त्वा पात्रं देवीरूपं विभावयेदिति । ततो देव्याज्ञामादाय घटसमीपे गुरुपात्रं ततः शक्तिपात्रं भोगपात्रं स्वपात्रं योगिनीपात्रं वीरपात्रं बलिपाद्यार्घ्याचमनीयपात्राणि संस्थाप्य, चर्वणयुतकारणेन तत्त्वमुद्रया श्रीपात्राद् बिन्दून् समुद्धृत्य, आनन्दभैरवं तर्पयामि नमः इति तन्मन्त्रेण त्रिः सन्तर्प्य, ततः श्रीगुरु श्रीमच्छ्रीअमुकानन्दनाथश्रीपादुकां पूजयामि तर्पयामि नमः इति त्रिः सन्तर्प्य, श्रीपात्रामृतेन मूलदेवीं सायुधां सवाहनां सपरिवारां तर्पयामि नमः इति सन्तर्पयेदिति कलशपूजाविधिः ॥

अथ श्रीचक्रोपरि पीठपूजां पूर्ववद्विधाय श्रीबालां ध्यात्वा वायुबीजेन वामनासापुटेन देवीं स्वहृदयात् कुसुमाञ्जलावानीय श्रीचक्रे संस्थाप्य, "देवेशि भक्तिसुलभे परिवारसमन्विते । यावत्त्वां पूजयिष्यामि तावद् देवि इहावह ॥" इति पठित्वा, मूलं श्रीकामेश्वरशिवसहिते बालात्रिपुरे इहागच्छ २ इह तिष्ठ २ इह संनिधेहि २ इह संनिरुद्धा भव २ मम सर्वोपचारसहितां पूजां गृहाण २ इत्यावाहनादिमुद्राः प्रदर्श्य, प्राणप्रतिष्ठां श्रीचक्रे लेलिहानमुद्रया विधाय दशदिग्बन्धं कृत्वावगुण्ठ्य सकलीकृत्य परमीकृत्य, धेनुयोनिमुद्रे प्रदर्श्य वराभयपुस्तकाक्षमालाज्ञानाङ्कुशपाशचापबाणकपालकमलादिमुद्राः प्रद-

र्श्य, श्रीपात्रामृतेन सायुधां सवाहनां सपरिवारां सावरणां श्रीकामेश्वरभैरवसाहितां श्रीबालात्रिपुरां तर्पयामि नमः इति त्रिः सन्तर्प्य, पुनरपि मूलेन श्रीबालात्रिपुराश्रीपादुकां तर्पयामि नमः इति त्रिः सन्तर्प्य, मूलमुच्चार्य, एतत्पाद्यं श्रीकामेश्वरसहितश्रीबालात्रिपुरायै नमः पादयोः पाद्यं। एवमर्घ्यं स्वाहा शिरसि। आचमनीयं मधुपर्कं च सुधा मुखे। स्नानीयं नमः सर्वाङ्गे, इति सुस्नाप्य, शुद्धदुकूलेनाङ्गं प्रोञ्छ्य, विचित्रपटवस्त्रं कुङ्कुमकस्तूरीचन्दनसिन्दूरमुकुटकुण्डलहारादिनानालङ्कारान् दत्त्वा पुनराचमनीयं दद्यात्। ततो मध्यमानामाङ्गुष्ठैः गन्धो नमः इति गन्धं, अङ्गुष्ठतर्जनीभ्यां पुष्पाणि वौषट् इति पुष्पैः संपूज्य, धूपपात्रं फडिति संपूज्य पुरतः स्थापयित्वा वामतर्जन्या संस्पृशन् श्रीपात्रामृतेन धूपं निवेदयामि इति निवेद्य, जगद्ध्वनिमन्त्रमातः स्वाहा इति घण्टां संपूज्य वामेन पाणिना तां वादयन्, मध्यानामाङ्गुष्ठैर्धूपं धृत्वा गायत्रीं मूलमन्त्रं च पठन् "वनस्पतिरसो दिव्यो गन्धाढ्यो गन्ध उत्तमः। आघ्रेयः सर्वदेवानां धूपोऽयं प्रतिगृह्यताम्॥" इति त्रिधोत्तोल्य देवीं धूपयेत्। ततो दीपं संमुखे संस्थाप्य पूर्ववत् प्रोक्षणपूजने कृत्वा वाममध्यमया दीपपात्रं स्पृशन् दीपं निवेदयामि इति निवेद्य पूर्ववद् घण्टां वादयन्, मध्यानामामध्ये दीपपात्रमङ्गुष्ठेन धृत्वा दर्शयन्, गायत्रीं मूलं च पठन् "सुप्रकाशो महादीपः सर्वत्र तिमिरापहः। सबाह्याभ्यन्तरं ज्योतिर्दीपोऽयं प्रतिगृह्यताम्॥" इति दीपयेत्। ततः सुवर्णादिपात्रे कुङ्कुमेन वसुपत्रं चन्द्ररूपं चरुं कृत्वा मध्ये दीपमेकमष्टपत्रेषु दीपाष्टकं संस्थाप्य 'श्रीं सौः ग्लूंस्लूंम्लूंप्लूंन्लूंसौःश्रीं रत्नेश्वर्यै नमः, इत्यभ्यर्च्य मूलेन चाभ्यर्च्य, स्थालकं मस्तकान्तमुद्धृत्य नववारं मूलं० "समस्तचक्रचक्रेशीयुते देवि नवात्मिके। आरात्रिकमिदं देवि गृहाण मम सिद्धये॥ इति चक्रमुद्रया नीराजयेत्।

ततो नानानैवेद्यं सुवर्णादिपात्रे निःक्षिप्य ह्रूमित्यवगुण्ठ्य धेनुमुद्रयामृतीकृत्य, मूलं सप्तधा जप्त्वा वामाङ्गुष्ठेन नैवेद्यपात्रं स्पृशन् मूलान्ते "हेमपात्रगतं दिव्यं परमान्नं सुसंस्कृतम्। पञ्चधा षड्रसोपेतं गृहाण परमेश्वरि॥" नैवेद्यं निवेदयामीति दक्षानामाङ्गुष्ठाभ्यामुत्सृजेत्। ततः पुनराचमनीयं दत्त्वा मूलान्ते कर्पूरादियुक्तताम्बूलं निवेदयामीति

पूर्ववद् दद्यात् । सर्वेषामर्घ्यपात्रजलेनोत्सर्गः कार्यः । ततस्तत्त्वमुद्रया देवीं त्रिः सन्तर्प्य पूर्वोक्ताः मुद्राः प्रदर्श्य, योनिं हृदि, क्षोभिणीं मुखे, द्राविणीं भ्रूमध्ये, आकर्षिणीं ललाटे, वशिनीं ब्रह्मरन्ध्रे, आह्लादिनीं पञ्चमुद्रामयीं प्रदर्श्य, कृताञ्जलिः श्रीबालात्रिपुरे आवरणानि ते पूजयामीत्याज्ञां गृहीत्वावरणपूजामारभेत ।

तत्रादौ प्राग्योनिमध्ययोन्योरन्तराले गुरुपात्रे (त्रेण) अमुकानन्दनाथश्रीपादुकां पूजयामि नमस्तर्पयामि नमः । एवं परमगुरुश्रीपादुकां पू० । परमाचार्यश्री० । परमेष्ठिगुरुश्री० । दिव्यौघगुरुश्री० । सिद्धौघगुरुश्री० । मानवौघगुरुश्री० । पुनः स्वगुरुश्री० । इति पूजयेत्तर्पयेच्च ॥

आग्नेये हृदयश्रीपा० । ईशाने शिरःश्रीपा० । नैर्ऋते शिखाश्रीपा० । वायव्ये कवचश्रीपा० । मध्ये नेत्रश्रीपा० । दिक्षु चतुर्षो अस्त्रश्री० । इति पूजयेत्तर्पयेच्च ॥

ततस्त्रिकोणे आग्नेये ऐं रं रतिश्रीपा० । ईशाने क्लीं प्रीं प्रीतिश्रीपा० । अग्रकोणे सौः मं मनोभवाश्रीपा० । इति पूजयेत्तर्पयेच्च ॥

तत्रस्त्रिकोणस्यैवोत्तरे । द्रां क्षोभणबाणश्री० । द्रीं द्रावणबाणश्री० । क्लीं आकर्षणबाणश्री० । ब्लूं वशीकरणबाणश्री० । तदग्रे सः उन्मादनबाणश्री० । इति संपूज्य सन्तर्प्य, तथैव तदुत्तरे । सौः कामश्री० । क्लीं मन्मथश्री० । तद्दक्षे ऐं कन्दर्पश्री० । ब्लूं मकरध्वजश्री० । अग्रे स्त्रीं मीनकेतुश्री० । इति पूजयेत्तर्पयेच्च ॥

ततोऽष्टयोनिषु पूर्वादितः । अनङ्गकुसुमाश्री० । अनङ्गमेखलाश्री० । अनङ्गमदनाश्री० । अनङ्गमदनातुराश्री० । सुभगाश्री० । भगाश्री० । भगसर्पिणीश्री० । भगमालाश्री० । इति पूजयेत्तर्पयेच्च ॥

ततोऽष्टपत्रेषु पूर्वादितः । अं असिताङ्गभैरवश्री० । आं ब्राह्मीश्री० । इं रुरुभैरवश्री० । ईं माहेश्वरीश्री० । उं चण्डभैरवश्री० । ऊं कौमारीश्री० । ऋं क्रोधभैरवश्री० । ॠं वैष्णवीश्री० । लृं उन्मत्तभैरवश्री० । ॡं वाराहीश्री० । एं कपालिभैरवश्री० । ऐं माहेन्द्रीश्री० । ओं भीषणभैरवश्री० । औं चामुण्डाश्री० । अं संहारभैरवश्री० । अः नारसिंहीश्रीपा० । इति पूजयेत्तर्पयेच्च ॥

ततो ग्रन्थिस्थानेषु पश्चिमादितः । कामरूपपीठश्री० । मलयगिरिपीठश्री० । कौलगिरिपीठश्री० । कुलान्तकपीठश्री० । चौहारपीठश्री० ।

जालन्धरपीठश्री० । उड्डीयानश्री० । देवकूटश्री० । इति पूजयेत्तर्पयेच्च ॥

ततो वृत्तमण्डले पश्चिमादित ऊर्ध्वमधश्च । हेरुकभैरवश्री० । वेतालभैरवश्री० । त्रिपुरान्तकभैरवश्री० । अग्निजिह्वभैरवश्री० । कालान्तकभैरवश्री० । कपालिभैरवश्री० । एकपादभैरवश्री० । भीमरूपभैरवश्री० । मलयभैरवश्री० । हाकटेश्वरभैरवश्री० । इति पूजयेत्तर्पयेच्च ॥

ततश्चतुरस्रे पूर्वादितः । इन्द्रश्री० । अग्निश्री० । यमश्री० । निर्ऋतिश्री० । वरुणश्री० । वायुश्री । कुबेरश्री० । ईशानश्री० । इन्द्रेशानयोर्मध्ये ब्रह्मश्री० । वरुणराक्षसयोर्मध्ये विष्णुश्री० । इति पूजयेत्तर्पयेच्च ॥

ततस्तत्समीपे । वज्रश्री० । शक्तिश्री० । दण्डश्री० । खड्गश्री० । पाशश्री० । ध्वजश्री० । गदाश्री० । त्रिशूलश्रीपादुकां पूजयामि त० ॥ ततश्चतुरश्रे पश्चिमे । वां वटुकाय नमो वटुकश्री० । उत्तरे यां योगिनीभ्यो नमो योगिनीश्री० । पूर्वे क्षां क्षेत्रपालाय नमः क्षेत्रपालश्री० । दक्षे गां गणपतये नमो गणपतिश्री० । इति पूजयेत्तर्पयेच्च । ततो वायव्ये अष्टवसुभ्यो नमः, ईशाने द्वादशादित्येभ्यो नमः, आग्नेये एकादशरुद्रेभ्यो नमः, नैर्ऋते सर्वेभ्यो भूतेभ्यो नमः, इति पूजयेत्तर्पयेच्च । ततो देवीसमीपे दक्षहस्ते अक्षमालाश्री० । वरश्री० । तद्वामे पुस्तकश्री० । अभयश्री०, इति पूजयेत्तर्पयेच्च । पुनर्बिन्दौ मूलदेवीं पूर्ववत् संपूज्य सन्तर्प्य पुष्पाञ्जलित्रयेण संपूज्य नित्यहोममाचरेत् ।

तद्यथा अग्नौ चक्रं विभाव्य विलिख्य जले वा, प्राणाय स्वाहा, अपानाय स्वाहा, व्यानाय स्वाहा, उदानाय स्वाहा, समानाय स्वाहा, इति हुत्वा षडङ्गाहुतीः कुर्यात् । ततो मूलेन स्वदेव्यै हुत्वा, स्वहृदि विसृज्य ईशाने मण्डलं कृत्वा, वां वटुकाय नमः एह्येहि देवीपुत्रवटुकनाथ कपिलजटाभारभास्वर त्रिनेत्र ज्वालामुख सर्वान् विघ्नान् नाशय २ सर्वोपचारसहितं बलिं गृह्ण २ स्वाहा ॥ आग्नेये । यां योगिनीभ्यो नमः । "ऊर्ध्वं ब्रह्माण्डतो वा दिवि गगनतले भूतले निष्कले वा पाताले वा तले वा सलिलपवनयोर्यत्र कुत्र स्थिता वा । ऊर्ध्वं पीठोपपीठादिषु च कृतपदा धूपदीपादिकेन प्रीता देव्यः सदा नः शुभबलिविधिना पान्तु वीरेन्द्रवर्ग्याः ॥

यां योगिनीभ्यो फट् स्वाहा, इति योगिनीबलिः ॥ नैर्ऋते क्षांक्षींक्षूं क्षैंक्षौंक्षः क्षेत्रपाल आलेबलिसहितं बलिं गृह्ण २ स्वाहा, इति क्षेत्रपालबलिः ॥ वायव्ये गांगींगूं गणपतये वरवरद सर्वजनं मे वशमानय बलिं गृह्ण २ स्वाहा, इति गणपतिबलिः ॥ इत्थं बलिं विरचय्य च्छागादिबलिमप्यागमोक्तविधिना दत्त्वा गुरुदेव्यौ ध्यायन् यथाशक्ति जपं विधाय, पुनरपि प्राणायामर्ष्यादिकराङ्गन्यासानन्तरं "गुह्यातीति" तर्पणेन तेजोरूपं जपफलं देवीवामहस्ते समर्प्य, कवचसहस्रनामस्तवपाठं पठित्वा साष्टाङ्गं प्रणिपत्य प्रदक्षिणीकृत्य सामयिकैः सह पूर्वोक्तरूपेण पात्रवन्दनं विधाय "नन्दन्तु साधकाः सर्वे विनश्यन्तु विदूषकाः । अवस्था शाम्भवी मेऽस्तु प्रसन्नोऽस्तु गुरुः सदा ॥ इत्यादि पूर्वोक्तं शान्तिस्तोत्रं पठित्वा, ईशाने "निर्माल्यवासिन्यै नमः" इति निर्माल्यं त्यजेत् । ततः 'इतः पूर्वं जाग्रत्स्वप्नसुषुप्त्यवस्थासु मनसा वाचा कर्मणा पद्भ्यामुदरेण शिश्ना प्राणदेहधर्माधिकारतो यदुक्तं यत्कृतं तत्सर्वं मदीयं श्रीबालात्रिपुरार्पणमस्तु । ताम्रादिपात्रेऽर्घ्यं धृत्वा "ओंह्रांह्रींसः सूर्य एष तेऽर्घः स्वाहा" इत्यर्घ्यं सूर्याय दत्त्वा, अच्छिद्रमवधारयेत् । नैवेद्यादि बान्धवैः साकं भुक्त्वा स्वात्मानं कामकलारूपं भावयन् सुखं विहरेत् ॥

श्रीबालात्रिपुरादेव्यास्त्रैलोक्यपतिना कृता ।
पद्धतिः पूर्णतां प्राप्ता निजभक्तदयालुना ॥

इति श्रीरुद्रयामले तन्त्रे भैरवभैरवीसंवादे
श्रीबालात्रिपुरापद्धतिः ॥ २ ॥

अथ

# श्रीबालात्रिपुरसुन्दरीकवचम् ।

श्रीभैरवी ।

देवदेव महादेव भक्तानां प्रीतिवर्धन ।
सूचितं यन्मया (त्वया) देव्याः कवचं कथयस्व मे ॥ १ ॥

श्रीभैरवः ।

शृणु देवि प्रवक्ष्यामि कवचं देवदुर्लभम् ।
अप्रकाश्यं परं गुह्यं साधकाभीष्टसिद्धिदम् ॥ २ ॥
कवचस्य ऋषिर्देवि दक्षिणामूर्तिरव्ययः ।
पङ्क्तिश्छन्दः समुद्दिष्टो देवी त्रिपुरसुन्दरी ॥
धर्मार्थकाममोक्षार्थे विनियोगस्तु साधने ॥ ३ ॥

अस्य श्रीबालात्रिपुरसुन्दरीकवचस्य श्रीदक्षिणामूर्तिर्ऋषिः पङ्क्तिश्छन्दः श्रीबालासुन्दरी देवता ऐं बीजं सौः शक्तिः क्लीं कीलकं चतुर्वर्गसाधने विनियोगः । दक्षिणामूर्तिऋषये नमः शिरसि , पङ्क्तिच्छन्दसे नमो मुखे , बालासुन्दरीदेवतायै नमो हृदि , ऐंबीजाय नमो गुह्ये , सौःशक्तये नमो नाभौ , क्लींबीजाय नमः पादयोः , विनियोगाय नमः सर्वाङ्गेषु । ऐं अङ्गुष्ठाभ्यां नमः । क्लीं तर्जनीभ्यां नमः । सौः मध्यमाभ्यां नमः । ऐं अनामिकाभ्यां नमः । क्लीं कनिष्ठिकाभ्यां० । सौः करतलपृष्ठाभ्यां० । एवं हृदयादिन्यासः । ध्यानम् -

मुक्ताशेखरकुण्डलाङ्गदमणिग्रैवेयहारोर्मिका-
विद्योतद्वलयादिकङ्कणकटिसूत्रां स्फुरन्नूपुराम् ।
माणिक्योदरबन्धकम्बुकबरीमिन्दोः कलां बिभ्रतीं
पाशं चाङ्कुशपुस्तकाक्षवलय दक्षोर्ध्वबाह्वादितः ॥ ४ ॥

ऐं वाग्भवं पातु शीर्षं क्लीं कामस्तु तथा हृदि ।
सौःशक्तिबीजं च पातु नाभौ गुह्ये च पादयोः ॥ ५ ॥
ऐंक्लींसौः वदने पातु बाला मां सर्वसिद्धये ।
हसकलह्रीं सौः पातु भैरवी कण्ठदेशतः ॥ ६ ॥
सुन्दरी नाभिदेशेऽव्याच्छीर्षिका सकला सदा ।
भ्रूनासयोरन्तराले महात्रिपुरसुन्दरी ॥ ७ ॥
ललाटे सुभगा पातु भगा मां कण्ठदेशतः ।
भगोदेवी तु हृदये उदरे भगसर्पिणी ॥ ८ ॥
भगमाला नाभिदेशे लिङ्गे पातु मनोभवा ।
गुह्ये पातु महादेवी राजराजेश्वरी शिवा ॥ ९ ॥
चैतन्यरूपिणी पातु पादयोर्जगदम्बिका ।
नारायणी सर्वरात्रे सर्वकार्ये शुभङ्करी ॥ १० ॥
ब्रह्माणी पातु मां पूर्वे दक्षिणे वैष्णवी तथा ।
पश्चिमे पातु वाराही उत्तरे तु महेश्वरी ॥ ११ ॥
आग्नेय्यां पातु कौमारी महालक्ष्मीश्च नैर्ऋते ।
वायव्यां पातु चामुण्डा इन्द्राणी पातु चेशके ॥ १२ ॥
जले पातु महामाया पृथिव्यां सर्वमङ्गला ।
आकाशे पातु वरदा सर्वतो भुवनेश्वरी ॥ १३ ॥
इदं तु कवचं नाम देवानामपि दुर्लभम् ।
पठेत् प्रातः समुत्थाय शुचिः प्रयतमानसः ॥ १४ ॥
नामयो व्याधयस्तस्य न भयं च क्वचिद्भवेत् ।
नच मारीभयं तस्य पातकानां भयं तथा ॥ १५ ॥
न दारिद्र्यवशं गच्छेत्तिष्ठेन्मृत्युवशे नच ।
गच्छेच्छिवपुरे देवि सत्यं सत्यं वदाम्यहम् ॥ १६ ॥
इदं कवचमज्ञात्वा श्रीविद्यां यो जपेच्छिवे ।

स नाप्नोति फलं तस्य प्राप्नुयाच्छक्रघातकम् ॥ १७ ॥

इति श्रीरुद्रयामले तन्त्रे भैरवीभैरवसंवादे
श्रीबालात्रिपुरसुन्दरीकवचम् ॥ ३ ॥

अथ

# बालासहस्रनामकम् ।

समाध्युपरतं काले कदाचिद्विजने मुदा[1] ।
परमानन्दसन्दोहमुदितं[2] प्राह पार्वती ॥ १ ॥

श्रीदेवी ।

श्रीमन्नाथ तवानन्दकारणं ब्रूहि शङ्कर ।
योगीन्द्रप्राप्यं देवीशं[3] प्रेमपूर्ण सुधानिधे ।
कृपया यदि मे शम्भो सुगोप्यमपि कथ्यताम् ॥ २ ॥

श्रीभैरवः ।

निर्भरानन्दसन्दोहः शक्तिभावेन जायते ।
लावण्यसिन्धुस्तत्रास्ति बालाया रसकन्दरः[4] ॥ ३ ॥
तामेवानुक्षणं देवीं चिन्तयामि ततः शिवाम् ।
तस्या नामसहस्राणि[5] कथयामि तव प्रिये ॥ ४ ॥
सुगोप्यान्यपि रम्भोरु गम्भीरस्नेहविभ्रमात् ।
तामेव स्तुवतो देवि ध्यायतोऽनुक्षणं मम ।

---

१ ‘ शुभे ’ ग. पाठः । २ ‘ मुदिता ’ ख. ग. पाठः । ३ ‘ देवेशं ’ ख. ग. पाठः । ४ ‘ कन्दरा ’ क. ग. पाठः । ५ ‘ सहस्रं ते ’ घ. पाठः ।

सुखसन्दोहसंभावो ज्ञानानन्दस्य कारणम् ॥ ५ ॥

अस्य श्रीबालात्रिपुरसुन्दरीसहस्रनामस्तोत्रस्य भार्गवऋषिः अनुष्टुप् छन्दः श्रीबालात्रिपुरा देवता ऐंबी० सौःश० क्लींकी० समस्तपुरुषार्थे समन्वयसामर्थ्ये पाठे विनियोगः । भार्गवऋषये नमः शिरसि । अनुष्टुप्छन्दसे नमो मुखे । श्रीबालादेवतायै नमो हृदि । ऐं बीजाय नमो गुह्ये । सौः शक्तये नमः पादयो । क्लीं कीलकाय नमो नाभौ । विनियोगाय नमः सर्वाङ्गेषु । ऐं अङ्गुष्ठाभ्यां नमः । क्लीं तर्जनीभ्यां० । सौः मध्यमाभ्यां० । ऐं अनामिकाभ्यां० । क्लीं कनिष्ठिकाभ्यां० । सौः करतलपृष्ठाभ्यां० । एवं हृदयादिन्यासः । ध्यानम् ।

रक्ताम्बरां चद्रकलावतंसां समुद्यदादित्यनिभां त्रिनेत्राम् ।
विद्याक्षमालाभयदानहस्तां ध्यायामि बालामरुणाम्बुजस्थाम् ॥
आनन्दसिन्धुरानन्दाऽऽनन्दमूर्तिर्विनोदिनी ।
त्रिपुरासुन्दरी प्रेमपाथोनिधिरनुत्तमा ॥ १ ॥
वामार्थगह्वरा भूतिर्विभूतिः शाङ्करी शिवा ।
शृङ्गारमूर्तिर्वरदा रसा च शुभगोचरा ॥ २ ॥
परमानन्दलहरी रती रङ्गवती गतिः ।
रङ्गमालानङ्गकला केली कैवल्यदा कला ॥ ३ ॥
रसकल्पा कल्पलता कुतूहलवती गतिः ।
विनोददिग्धा सुस्निग्धा मुग्धामूर्तिर्मनोरमा ॥ ४ ॥
बालार्ककोटिकिरणा चन्द्रकोटिसुशीतला ।
द्रवत्पीयूषदिग्धाङ्गी स्वर्गार्थपरिकल्पिता ॥ ५ ॥
कुरङ्गनयना कान्ता सुगतिः सुखसन्ततिः ।
राजराजेश्वरी राज्ञी महेन्द्रपरिवन्दिता ॥ ६ ॥
प्रपञ्चगतिरीशानी प्रपञ्चगतिरुत्तमा ।

---

१ 'ममाढ्य' ख. पाठः । २ 'स्तवन' क. ख. पाठः । ३ 'र्था' क. ख. पाठः ।
४ 'ना' ग. पाठः ।

दुर्वासा दुःसहाशक्तिः शिञ्जत्कनकनूपुरा ॥ ७ ॥
मेरुमन्दर[1]वक्षोजा सृणिपाशवरायुधा ।
शरकोदण्डसं[2]संक्तपाणिद्वयविराजिता ॥ ८ ॥
चन्द्रबिम्बानना चारुमुकुटोत्तंसचन्द्रिका ।
सिन्दूरतिलका चारुधम्मिल्लामलमालिका ॥ ९ ॥
मन्दारदाममुदिता रत्नमालाविभूषिता ।
सुवर्णाभरणप्रीता मुक्ताधाममनोरमा ॥ १० ॥
ताम्बूलपूर्णवदना मदनानन्दमानसा ।
सुखाराध्या तपःसारा कृपापारा [3]विधीश्वरी ॥ ११ ॥
वक्षःस्थललसद्रत्नप्रभा मधु[4]रसोन्मदा ।
बिन्दुनादात्मकोच्चाररहिता तुर्यरूपिणी ॥ १२ ॥
कमनीयाकृतिर्धन्या शाङ्करी प्रीतिमञ्जरी ।
प्रपञ्चा पञ्चमी पूर्णा पूर्णपीठनिवासिनी ॥ १३ ॥
राज्यलक्ष्मीश्च श्रीलक्ष्मीर्महालक्ष्मीः सुराजिका ।
सन्तोषसीमा संपत्तिः शातकौम्भी तथा द्युतिः ॥ १४ ॥
परिपूर्णा जगद्धात्री विधात्री बलवर्धिनी ।
सार्वभौमनृपश्रीश्च साम्राज्यगतिरम्बिका ॥ १५ ॥
सरोजाक्षी दीर्घदृष्टिः साचीक्षणविचक्षणा ।
रङ्गस्रवन्ती रसिका (१००) प्रधाना रसरूपिणी ॥ १६ ॥
रससिन्धुः सुगात्री च धूसरी मैथुनोन्मुखा ।
निरन्तरगुणासक्ता शक्तिर्निधुवनात्मिका ॥ १७ ॥
कामाक्षा कमनीया च कामेशी भगमङ्गला ।
सुभगा भोगिनी भोग्या भाग्यदा सुभगा भगा ॥ १८ ॥

---

१ 'मन्दार' क. पाठः । २ 'संयुक्त' ख. पाठः । ३ 'निधी' ख. पाठः ।
४ 'रसमदा' क. पाठः ।

भगलिङ्गानन्दकला भगमध्यनिवासिनी ।
भगरूपा भगमयी भगयन्त्रा भगोत्तमा ॥ १९ ॥
योनिमुद्रा कामकला कुलामृतपरायणा ।
कुलकुण्डालया सूक्ष्मा जीवात्मा[1] लिङ्गरूपिणी ॥ २० ॥
मूलक्रिया मूलरूपा मूलाकृतिस्वरूपिणी ।
सोत्सुका कमलानन्दा चिद्भावाऽऽत्मगतिः शिवा ॥ २१ ॥
श्वेतारुणा बिन्दुरूपा वेदयोनिर्ध्वनिचणा[2] ।
घण्टाकोटिरवा रावा रविबिम्बोत्थिताऽद्भुता[3] ॥ २२ ॥
नादान्तलीना संपूर्णा पूर्णस्था बहुरूपिका ।
भृङ्गारावा वंशगतिर्वादित्रा मुरजध्वनिः ॥ २३ ॥
वर्णमाला सिद्धिकला षट्चक्रक्रमवासिनी ।
मूलकेलीरता[4] स्वाधिष्ठाना तुर्यनिवासिनी ॥ २४ ॥
मणिपूरस्थितिः[5] स्निग्धा कूर्मचक्रपरायणा ।
अनाहतगतिर्दीपशिखा मणिमयाकृतिः ॥ २५ ॥
विशुद्धा शब्दसंशुद्धा जीवबोधस्थली रवा ।
आज्ञाचक्राब्जसंस्था च स्फुरन्ती निपुणा त्रिवृत्[6] ॥ २६ ॥
चन्द्रिका चन्द्रकोटिश्रीः सूर्यकोटिप्रभामयी ।
पद्मरागारुणच्छाया नित्याऽऽह्लादमयी प्रभा ॥ २७ ॥
पानश्रीश्च प्रियामात्या निश्चलाऽमृतनन्दिनी ।
कान्ताङ्गसङ्गमुदिता सुधामाधुर्यसंभृता ॥ २८ ॥
महामद्यस्थिताऽलिप्ता तृप्ता दृप्ता सुसंभृतिः ।
स्रवत्पीयूषसंसिक्ता रक्तार्णवविवर्धिनी ॥ २९

---

१ 'जीवत्सुलिङ्ग' ग. पाठः। २ 'विचक्षणा' ख. पाठः । ३ 'द्रुता' ग. पाठः।
४ 'मुक्तकेशी' क. पाठः । ५ 'ता' ग. पाठः । ६ 'नन्दमया द्युतिः' ख. ग. पाठः।
७ 'त्रयी' ख. पाठः ।

सुरक्ता प्रियसंसिक्ता शश्वत्कुण्डालयाऽभया (२००) ।
श्रेयःश्रुतिश्च प्रत्येकानवकेशिफलावली ॥ ३० ॥
प्रीता शिवा शिवप्रिया शाङ्करी शाम्भवी विभा ।
स्वयंभूः स्वप्रिया स्वीया स्वकीया जनमातृका ॥ ३१ ॥
स्वारामा स्वाश्रया साध्वी सुधाधाराऽधिकाधिका ।
मङ्गलोज्जयिनी मान्या सर्वमङ्गलसङ्गिनी ॥ ३२ ॥
भद्रा भद्रावली कन्या कलितार्धेन्दुबिम्ब[1]भाक् ।
कल्याणलतिका[2] काम्या कुकर्मा कुमतिर्मनुः ॥ ३३ ॥
कुरङ्गाक्षी क्षीबनेत्रा क्षारा रससदोन्मदा ।
वारुणीपानमुदिता मदिरे[3]राचिताश्रया ॥ ३४ ॥
कादम्बरीपानरुचिर्विपाशा पार्श[4]भीतिनुत् ।
मुदिता मुदितापाङ्गा दरदोलितदीर्घदृक् ॥ ३५ ॥
दैत्यकुलानलशिखा मनोरथसुधाद्युतिः ।
सुवासिनी पीनगात्री पीनश्रेणिपयोधरा ॥ ३६ ॥
सुचारुकवरी दन्तदीधितिव्रीप्रमौक्तिका ।
बिम्बाधरा द्युतिमुखा प्रवालोत्तमदीधितिः ॥ ३७ ॥
तिलप्रसूननासाग्रा हेमकक्कोलभालका ।
निष्कलङ्केन्दुवदना बालेन्दुमुकुटोज्ज्वला ॥ ३८ ॥
नृत्यत्खञ्जननेत्रश्रीर्विस्फुरत्कर्णशष्कुली ।
बालचन्द्रातपत्रार्धा मणिमर्यकिरीटिनी ॥ ३९ ॥
हेममाणिक्यताटङ्का मणिकाञ्चनकुण्डला ।
सुचारुचिबुका कम्बुकण्ठी मणिमनोरमा[5] ॥ ४० ॥
गङ्गातरङ्गहारोर्मिर्मत्तकोकिलनिःस्वना ।

---

१ 'बिन्दु' क. पाठः । २ 'ललिता' ख. पाठः । ३ 'मन्दिरा' क. पाठः ।
४ 'पाप' क. पाठः । ५ 'बलिमनोरमा' क. ख. पाठः ।

मृणालविलसद्बाहुः पाशाङ्कुशधनुर्धरा ॥ ४१ ॥
केयूरकटकाच्छन्ना नानारत्नमनोरमा ।
ताम्रपङ्कजपाणिश्रीर्नखरत्नप्रभावती ॥ ४२ ॥
अङ्गुलीयमणिश्रेणिचञ्चदङ्गुलिसन्ततिः ।
मन्दारद्वन्द्वसुकुचा रोमराजीभुजङ्गका ॥ ४३ ॥
गम्भीरनाभिस्त्रिवलीवलया च सुमध्यमा ।
रणत्काञ्चीगुणोन्नद्धा पट्टांशुकसुनीविका ॥ ४४ ॥
मेरुगुर्ण्डीनितम्बाढ्या गजगण्डोरुयुग्मयुक् ।
सुजानुमन्दरासक्तलसज्जङ्घाद्वयान्विता ॥ ४५ ॥
गूढगुल्फा मञ्जुशिञ्जन्मणिनूपुरमण्डिता ।
योगिध्येयपदद्वन्द्वा सुधामाऽमृतसारिणी ॥ ४६ ॥
लावण्यसिन्धुः सिन्दूरतिलका कुटिलालका ।
साधुसिद्धा सुबुद्धा च बुधा वृन्दारकोदया ॥ ४७ ॥
बालार्ककिरणश्रेणीशोणा श्रीप्रेमकामधुक् ।
रसगम्भीरसरसीपद्मिनी [ ३०० ] रससारसा ॥ ४८ ॥
प्रसन्नाऽऽसन्नवरदा शारदा च सुभाग्यदा ।
नटराजप्रिया विश्वनाट्या नर्तकनर्तकी ॥ ४९ ॥
विचित्रयन्त्रा चित्तन्त्रा विद्यावल्ली गतिः शुभा ।
कूटारकूटा कूटस्था पञ्चकूटा च पञ्चमी ॥ ५० ॥
चतुष्कूटा त्रिकूटाद्या षट्कूटा वेदपूजिता ।
कूटषोडशसंपन्ना तुरीया परमाकला ॥ ५१ ॥
षोडशी मन्त्रयन्त्राणामीश्वरी मेरुमण्डला ।

---

१ 'मणि' ख. ग. पाठः । २ 'गण्डा' ख. ग. पाठः । ३ 'गजशुण्डोरुयुग्मका' ख. पाठः । ४ 'सुन्दरी' ख. पाठः । ५ 'चायुधा च' ख. पाठः ।

षोडशार्णा त्रिवर्णा च बिन्दुनादस्वरूपिणी ॥ ५२ ॥
वर्णातीता वर्णमाता शब्दब्रह्ममहासुखा ।
चैतन्यवल्ली कूटात्मा कामेशी स्वप्नदृश्यगा ॥ ५३ ॥
स्वप्नावती बोधकरी जागृतिर्जागराश्रया ।
स्वप्नाश्रया सुषुप्तिश्च तन्द्रामुक्ता च माधवी ॥ ५४ ॥
लोपामुद्रा कामराज्ञी मानवी वित्तपार्चिता ।
शाकम्भरी नन्दिविद्या भास्वद्विद्योतमालिनी ॥ ५५ ॥
माहेन्द्री स्वर्गसंपत्तिर्दुर्वासःसेविता श्रुतिः ।
साधकेन्द्रगतिः साध्वी सुलभा सिद्धिकन्दरा ॥ ५६ ॥
पुरत्रयेशी पुरजिदर्चिता पुरदेवता ।
पुष्टिर्विघ्नहरी भूतिर्विगुणा पूज्यकामधुक् ॥ ५७ ॥
हिरण्यमाता गणपा गुहमाता नितम्बिनी ।
सर्वसीमन्तिनी मोक्षा दीक्षा दीक्षितमातृका ॥ ५८ ॥
साधकाम्बा सिद्धमाता साधकेन्द्रा मनोरमा ।
यौवनोन्मादिनी तुङ्गा सुश्रोणिर्मदमन्थरा ॥ ५९ ॥
पद्मरक्तोत्पलवती रक्तमाल्यानुलेपना ।
रक्तमालारुचिः शिखाशिखण्डिन्यतिसुन्दरी ॥ ६० ॥
शिखण्डिनृत्तसन्तुष्टा सौरभेयी वसुन्धरा ।
सुरभी कामदा काम्या कमनीयार्थकामदा ॥ ६१ ॥
नन्दिनी लक्षणवती वसिष्ठालयदेवता ।
गोलोकदेवी (४००) लोकश्रीर्गोलोकपरिपालिका ॥ ६२ ॥
हविर्धानी देवमाता वृन्दारकवरानुयुक् ।

---

१ 'तन्त्रा' क. पाठः । २ गरुमाता क. पाठः । ३ तु वसुगा ख. पाठः ।
४ 'विशिष्ठा' ख. पाठः । ५ 'वेदमाता' ख. पाठः । ६ 'वरान्त' ख. पाठः ।

रुद्रपत्नी भद्रमाता सुधाधाराऽम्बुविप्लुतिः ॥ ६३ ॥
दक्षिणा यज्ञसंमूर्तिः सुबाला धीरनन्दिनी ।
क्षीरपूर्णार्णवगतिः सुधायोनिः सुलोचना ॥ ६४ ॥
रामानुगा सुसेव्या च सुगन्धालयवासगा ।
सुचारित्रा सुत्रिपुरा सुस्तनी स्तनवत्सला ॥ ६५ ॥
रजस्वला रजोयुक्ता रञ्जिका रङ्गमालिका ।
रक्तप्रिया सुरक्ता च रतिरङ्गस्वरूपिणी ॥ ६६ ॥
रजःशुक्राम्बिका निष्ठा रतिनिष्ठा रतिस्पृहा ।
हावभावा कामकेलिसर्वस्वा सुरजीविका ॥ ६७ ॥
स्वयम्भूकुसुमानन्दा स्वयम्भूकुसुमप्रिया ।
स्वयम्भूप्रीतिसन्तुष्टा स्वयम्भूनिन्दकान्तकृत ॥ ६८ ॥
स्वयम्भूस्था शक्तिपुटी रतिसर्वस्वपीठिका ।
अत्यन्तसभिका दूती विदग्धा प्रीतिपूजिता ॥ ६९ ॥
कुब्जिका यन्त्रनिलया योगपीठाधिवासिनी ।
सुलक्षणा रसरूपा सर्वलक्षणलक्षिता ॥ ७० ॥
नानालङ्कारसुभगा पञ्चबाणसमर्चिता ।
ऊर्ध्वत्रिकोणनिलया बाला कामेश्वरी तथा ॥ ७१ ॥
गणाध्यक्षा कुलाध्यक्षा लक्ष्मीश्चैव सरस्वती ।
वसन्तसमयप्रीता प्रीतिः कुचभरानता ॥ ७२ ॥
कलाधरमुखाऽमूर्धा पादवृद्धिः कलावती ।
पुष्पप्रिया धृतिश्चैव रतिकण्ठी मनोरमा ॥ ७३ ॥
मदनोन्मादिनी चैव मोहिनी पार्वणीकला ।
शोषिणी वशिनी राजिन्यत्यन्तसुभगा भगा ॥ ७४ ॥
पूषा वशा च सुमना रतिः प्रीतिर्धृतिस्तथा ।

---

१ 'दासुगा' ग. पाठः । २ 'मानसो ख. पाठः ।

ऋद्धिः सौम्या मरीच्यंशुमाला प्रत्यङ्गिरा तथा ॥ ७५ ॥
शशिनी चैव सुच्छाया संपूर्णमण्डलोदया ।
तुष्टा चामृतपूर्णा च भगयन्त्रनिवासिनी ॥ ७६ ॥
लिङ्गयन्त्रालया (५००) शम्भुरूपा संयोगयोगिनी ।
द्राविणी बीजरूपा च अक्षुब्धा साधकप्रिया ॥ ७७ ॥
राजबीजमयी राज्यसुखदा वाञ्छितप्रदा ।
रजःसंवीर्यशक्तिश्च शुक्रविच्छिन्नरूपिणी ॥ ७८ ॥
सर्वसारा सारमया शिवशक्तिमयी प्रभा ।
संयोगानन्दनिलया संयोगप्रीतिमातृका ॥ ७९ ॥
संयोगकुसुमानन्दा संयोगा योगवर्धिनी ।
संयोगसुखदावस्था चिदानन्दैकसेविता ॥ ८० ॥
अर्घ्यपूजकसंपत्तिरर्घ्यद्रव्यस्वरूपिणी ।
सामरस्या परा प्रीता प्रियसङ्गमरूपिणी ॥ ८१ ॥
ज्ञानदूती ज्ञानगम्या ज्ञानयोनिः शिवालया ।
चित्कला ज्ञानसकला सकुला सकुलात्मिका ॥ ८२ ॥
कलाचतुष्टया पद्मिन्यतिसूक्ष्मा परात्मिका ।
हंसकेलिस्थली च्छाया हंसद्वयविकासिनी ॥ ८३ ॥
विरागता मोक्षकला परमात्मकलावती ।
विद्याकलान्तरात्मस्था चतुष्टयकलावती ॥ ८४ ॥
विद्यासन्तोषणा तृप्तिः परब्रह्मप्रकाशिका ।
परमात्मपरा वस्तुलीना शक्तिचतुष्टयी ॥ ८५ ॥
शान्तिर्बोधकलावाप्तिः परज्ञानात्मिकाकला ।
पश्यन्ती परमात्मस्था चान्तरात्मकलाऽकुला ॥ ८६ ॥
मध्यमा वैखरी चात्मकलानन्दा कलावती ।
तारिणी तरणी तारा शिवलिङ्गालयाऽऽत्मवित् ॥ ८७ ॥

परस्परशुभाचारा ब्रह्मानन्दविनोदिनी ।
रसालसा दूतरासा सार्था सार्थप्रिया ह्युमा ॥ ८८ ॥
जात्यादिरहिता योगियोगिन्यानन्दवर्धिनी ।
वीरभावप्रदा दिव्या वीरसूर्वीरभावदा ॥ ८९ ॥
पशुत्वाभिवीरगतिर्वीरसङ्गमहोदया ।
मूर्धाभिषिक्ता राजश्रीः क्षत्रियोत्तममातृका ॥ ९० ॥
शस्त्रास्त्रकुशला शोभा रसस्था युद्धजीविका ।
विजया योगिनी यात्रा परसैन्यविमर्दिनी ॥ ९१ ॥
पूर्णा [ ६०० ] वित्तैषिणी वित्ता वित्तसञ्चयशालिनी ।
भाण्डागारस्थिता रत्ना रत्नश्रेण्यधिवासिनी ॥ ९२ ॥
महिषी राजभोग्या च गणिका गणभोगभृत् ।
करिणी वडवा योग्या मल्लसेना पदातिका ॥ ९३ ॥
सैन्यश्रेणी शौर्यरता पताका ध्वजवासिनी ।
सुच्छत्रा चाम्बिका चाम्बा प्रजापालनसद्गतिः ॥ ९४ ॥
सुरभिः पूजकाचारा राजकार्यपरायणा ।
ब्रह्मक्षत्रमयी सोमसूर्यान्तर्यामिनी स्थितिः ॥ ९५ ॥
पौरोहित्यप्रिया साध्वी ब्रह्माणी यज्ञसन्ततिः ।
सोमपानपरा प्रीता जनाढ्या तपना क्षमा ॥ ९६ ॥
प्रतिग्रहपरा दात्री स्रष्टा जातिः सतांगतिः ।
गायत्री वेदलभ्या च दीक्षा सन्ध्यापरायणा ॥ ९७ ॥
रत्नसद्दीधितिर्विश्वत्रासना विश्वजीविका ।
कृषिवाणिज्यभूतिश्च वृद्धिर्धी च कुसीदिका ॥ ९८ ॥
कुलाधारा सुप्रसारा मनोन्मनी परायणा ।
शूद्रा विप्रगतिः कर्मकरी कौतुकपूजिका ॥ ९९ ॥
नानाविचारचतुरा बाला प्रौढा कलामयी ।

सुकर्णधारा नौः पारा सर्वाशा दुर्गमोचनी ॥ १०० ॥
दुर्गा विन्ध्यवनस्था च कन्दर्पनयपूरणी ।
भूभारशमनी कृष्णा रक्षाराध्या रसोल्लसा ॥ १०१ ॥
त्रिविधोत्पातशमनी समग्रसुखशेवधिः ।
पञ्चावयववाक्यश्रीः प्रपञ्चोद्यानचन्द्रिका ॥ १०२ ॥
सिद्धसन्दोहसुखिता योगिनीवृन्दवन्दिता ।
नित्याषोडशरूपा च कामेशी भगमालिनी ॥ १०३ ॥
नित्यक्लिन्ना च भीरुण्डा वह्निमण्डलवासिनी ।
महाविद्येश्वरीनित्या शिवदूतीतिविश्रुता ॥ १०४ ॥
त्वरिता प्रथिता ख्याता विख्याता कुलसुन्दरी ।
नित्या-नीलपताका च विजया सर्वमङ्गला ॥ १०५ ॥
ज्वालामाला (७००) विचित्रा च महात्रिपुरसुन्दरी ।
गुरुवृन्दा परगुरुः प्रकाशानन्दनाथिनी ॥ १०६ ॥
शिवानन्दानाथरूपा शक्त्यानन्दस्वरूपिणी ।
देव्यानन्दानाथमयी कौलेशानन्दनाथिनी ॥ १०७ ॥
दिव्यौघगुरुरूपा च समयानन्दनाथिनी ।
शुक्लदेव्यानन्दनाथा कुलेशानन्दनाथिनी ॥ १०८ ॥
क्लिन्नाङ्गानन्दरूपा च समयानन्दनाथिनी ।
वेदानन्दनाथमयी सहजानन्दनाथिनी ॥ १०९ ॥
सिद्धौघगुरुरूपा च अपरागुरुरूपिणी ।
गगनानन्दनाथा च विश्वानन्दस्वनाथिनी ॥ ११० ॥
विमलानन्दनाथा च मदनानन्दनाथिनी ।
भुवनाद्या च लीलाद्या नन्दनानन्दनाथिनी ॥ १११ ॥
स्वात्मानन्दानन्दरूपा प्रियाद्यानन्दनाथिनी ।
मानवौघगुरुश्रेष्ठा परमेष्ठिगुरुप्रभा ॥ ११२ ॥

परगुह्या गुरुशक्तिः स्वगुरुकीर्तनप्रिया ।
त्रैलोक्यमोहनख्याता सर्वाशापरिपूरका ॥ ११३ ॥
सर्वसंक्षोभिणी पूर्वाम्नायप्रथितवैभवा ।
शिवाशक्तिः शिवशक्तिः शिवचक्रत्रयालया ॥ ११४ ॥
सर्वसौभाग्यदाख्या च सर्वार्थसाधिकाह्वया ।
सर्वरक्षाकराख्या च दक्षिणाम्नायदेवता ॥ ११५ ॥
मध्यार्कचक्रनिलया पश्चिमाम्नायदेवता ।
नवचक्रकृतावासा कौबेराम्नायदेवता ॥ ११६ ॥
कुबेरपूज्या कुलजा कुलाम्नायप्रवर्तिनी ।
बिन्दुचक्रकृतावासा मध्यसिंहासनेश्वरी ॥ ११७ ॥
श्रीविद्या च महालक्ष्मीः लक्ष्मीः शक्तित्रयात्मिका ।
सर्वसाम्राज्यलक्ष्मीश्च पञ्चलक्ष्मीतिविश्रुता ॥ ११८ ॥
श्रीविद्या च परज्योतिः परनिष्कलशाम्भवी ।
मातृका पञ्चकोशी च श्रीविद्या त्वरिता तथा ॥ ११९ ॥
पारिजातेश्वरी चैव त्रिकूटा पञ्चबाणगा ।
पञ्चकल्पलता पञ्चविद्या चामृतपीठिका ॥ १२० ॥
सुधासूः रमणेशाना चान्नपूर्णा च कामधुक् ।
श्रीविद्या सिद्धलक्ष्मीश्च मातङ्गी भुवनेश्वरी ॥ १२१ ॥
वाराही पञ्चरत्नानामीश्वरी मातृवर्णगा ।
पराज्योतिः कोशरूपा ऐन्दवी कलया युता ॥ १२२ ॥
परितः स्वामिनी शक्तिदर्शना रविबिन्दुयुक् ।
ब्रह्मदर्शनरूपा च शिवदर्शनरूपिणी ॥ १२३ ॥
विष्णुदर्शनरूपा च सृष्टिचक्रनिवासिनी ।
सौरदर्शनरूपा च स्थितिचक्रकृतालया ॥ १२४ ॥
बौधदर्शनरूपा च महात्रिपुरसुन्दरी ।

तत्त्वमुद्रास्वरूपा च प्रसन्ना (८००) ज्ञानमुद्रिका ॥ १२५ ॥
सर्वोपचारसन्तुष्टा हृन्मयी शीर्षदेवता ।
शिखास्थिता ब्रह्ममयी नेत्रत्रयविलासिनी ॥ १२६ ॥
अस्त्रस्था चतुरस्रा च द्वारका द्वारवासिनी ।
अणिमा पश्चिमस्था च लघिमोत्तरदेवता ॥ १२७ ॥
पूर्वस्था महिमेशित्वा दक्षिणद्वारदेवता ।
वशित्वा वायुकोणस्था प्राकाम्येशानदेवता ॥ १२८ ॥
अग्निकोणस्थिता भुक्तिरिच्छा नैर्ऋतवासिनी ।
प्राप्तिसिद्धिरवस्था च प्राकाम्यार्धविलासिनी ॥ १२९ ॥
ब्राह्मी माहेश्वरी चैव कौमारी वैष्णवी तथा ।
वाराह्यैन्द्री च चामुण्डा महालक्ष्मीर्दिशांगतिः ॥ १३० ॥
क्षोभिणी द्राविणीमुद्राऽऽकर्षोन्मादनकारिणी ।
महाङ्कुशा खेचरी च बीजाख्या योनिमुद्रिका ॥ १३१ ॥
सर्वाशापूरचक्रस्था कार्यसिद्धिकरी तथा ।
कामाकर्षिणिकाशक्तिर्बुद्ध्याकर्षणरूपिणी ॥ १३२ ॥
अहङ्काराकर्षिणी च शब्दाकर्षणरूपिणी ।
स्पर्शाकर्षणरूपा च रूपाकर्षणरूपिणी ॥ १३३ ॥
रसाकर्षणरूपा च गन्धाकर्षणरूपिणी ।
चित्ताकर्षणरूपा च धैर्याकर्षणरूपिणी ॥ १३४ ॥
स्मृत्याकर्षणरूपा च बीजाकर्षणरूपिणी ।
अमृताकर्षिणी चैव नामाकर्षणरूपिणी ॥ १३५ ॥
शरीराकर्षिणीदेवी आत्माकर्षणरूपिणी ।
षोडशस्वररूपा च स्रवत्पीयूषमन्दिरा ॥ १३६ ॥
त्रिपुरेशी सिद्धरूपा कलादलनिवासिनी ।
सर्वसंक्षोभचक्रेशी शक्तिर्गुप्ततराभिधा ॥ १३७ ॥

अनङ्गकुसुमाशक्तिरनङ्गकटिमेखला ।
अनङ्गमदनाऽनङ्गमदनातुररूपिणी ॥ १३८ ॥
अनङ्गरेखा चानङ्गवेगानङ्गाङ्कुशाभिधा ।
अनङ्गमालिनी शक्तिरष्टवर्गदिगन्विता ॥ १३९ ॥
वसुपत्रकृतावासा श्रीमत्त्रिपुरसुन्दरी ।
सर्वसाम्राज्यसुखदा सर्वसौभाग्यदेश्वरी ॥ १४० ॥
संप्रदायेश्वरी सर्वसंक्षोभणकरी तथा ।
सर्वविद्राविणी सर्वाकर्षणोपप्रकारिणी ॥ १४१ ॥
सर्वाह्लादनशक्तिश्च सर्वजृम्भणकारिणी ।
सर्वस्तम्भनशक्तिश्च सर्वसंमोहिनी तथा ॥ १४२ ॥
सर्ववश्यकरीशक्तिः सर्वसर्वानुरञ्जिनी ।
सर्वोन्मादनशक्तिश्च सर्वार्थसाधकारिणी ॥ १४३ ॥
सर्वसम्पत्तिदाशक्तिः सर्वमन्त्रमयी तथा ।
सर्वद्वन्द्वक्षयकरी ( ९०० ) सिद्धिस्त्रिपुरवासिनी ॥ १४४ ॥
सर्वार्थसाधकेशी च सर्वकार्यार्थसिद्धिदा ।
चतुर्दशारचक्रेशी कलायागसमन्विता ॥ १४५ ॥
सर्वसिद्धिप्रदादेवी सर्वसंपत्प्रदा तथा ।
सर्वप्रियङ्करीशक्तिः सर्वमङ्गलकारिणी ॥ १४६ ॥
सर्वकामप्रपूर्णा च सर्वदुःखप्रमोचिनी ।
सर्वमृत्युप्रशमनी सर्वविघ्नविनाशिनी ॥ १४७ ॥
सर्वाङ्गसुन्दरीदेवी सर्वसौभाग्यदायिनी ।
त्रिपुरेशी सर्वसिद्धिप्रदा च दशकोणगा ॥ १४८ ॥
सर्वरक्षाकरेशी च निगर्भायोगिनी तथा ।
सर्वज्ञा सर्वशक्तिश्च सर्वैश्वर्यप्रदा तथा ॥ १४९ ॥
सर्वज्ञानमयीदेवी सर्वव्याधिविनाशिनी ।

सर्वाधारस्वरूपा च सर्वपापहरा तथा ॥ १५० ॥
सर्वानन्दमयीदेवी सर्वरक्षास्वरूपिणी ।
महिमाशक्तिदेवी च देवीसर्वसमृद्धिदा ॥ १५१ ॥
अन्तर्दशारचक्रेशी देवीत्रिपुरमालिनी ।
सर्वरोगहरेशी च रहस्यायोगिनी तथा ॥ १५२ ॥
वाग्देवी वशिनी चैव देवीकामेश्वरी तथा ।
मोदिनी विमला चैव अरुणा जयिनी तथा ॥ १५३ ॥
सर्वेश्वरी कौलिनी च ह्यष्टारसर्वसिद्धिदा ।
सर्वकामप्रदेशी च परापररहस्यवित् ॥ १५४ ॥
त्रिकोणचतुरस्था[1] च सर्वैश्वर्याऽऽयुधात्मिका ।
कामेश्वरी बाणरूपा कामेशी चापरूपिणी ॥ १५५ ॥
कामेशी पाशरूपा च कामेश्यङ्कुशरूपिणी ।
कामेश्वरीन्द्रशक्तिश्च अग्निचक्रकृतालया ॥ १५६ ॥
कामगिर्यधिदेवी च त्रिकोणस्थाऽग्रकोणगा ।
दक्षकोणेश्वरी विष्णुशक्तिर्जालन्धराश्रया ॥ १५७ ॥
सूर्यचक्रालया रुद्रशक्तिर्वामाङ्गकोणगा ।
सोमचक्रब्रह्मशक्तिः पूर्णगिर्यनुरागिणी ॥ १५८ ॥
श्रीमत्त्रिकोणभुवना त्रिपुरात्ममहेश्वरी ।
सर्वानन्दमयेशी च बिन्दुगतिरहस्यभृत् ॥ १५९ ॥
परब्रह्मस्वरूपा च महात्रिपुरसुन्दरी ।
सर्वचक्रान्तरस्था[2] च समस्तचक्रनायिका ॥ १६० ॥
सर्वचक्रेश्वरी सर्वमन्त्राणामीश्वरी तथा ।
सर्वविद्येश्वरी चैव सर्ववागीश्वरी तथा ॥ १६१ ॥
सर्वयोगीश्वरी चैव पीठेश्वर्य्यखिलेश्वरी ।

---

१ 'चतुरस्रा' ख. पाठः । २ 'रहस्याक्रान्तरस्था' ख. पाठः ।

सर्वकामेश्वरी सर्वतत्त्वैश्वर्यागमेश्वरी ॥ १६२ ॥
शक्तिः शक्तिदृगुल्लासा निर्द्वन्द्वा द्वैतगर्भिणी ।
निष्प्रपञ्चा महामाया सप्रपञ्चा स्ववासिनी ॥ १६३ ॥
सर्वविश्वोत्पत्तिधात्री परमानन्दसुन्दरी ( १००० )।
इत्येतत्कथितं दिव्यं परमानन्दकारणम् ॥ १६४॥
लावण्यसिन्धुलहरीबालायास्तोषमन्दिरम् ।
सहस्रनाम तन्त्राणां सारमाकृष्य पार्वति ॥ १६५ ॥
अनेन स्तुवतो नित्यमर्धरात्रे निशामुखे ।
प्रातःकाले च पूजायां सर्वकालमतः प्रिये ॥ १६६ ॥
सर्वसाम्राज्यसुखदा बाला च परितुष्यति ।
रत्नानि विविधान्यस्य वित्तानि प्रचुराणि च ॥ १६७ ॥
मनोरथपथस्थानि ददाति परमेश्वरी ।
पुत्राः पौत्राश्च वर्धन्ते सन्ततिः सर्वकालिकी ॥ १६८ ॥
शत्रवस्तस्य नश्यन्ति वर्धन्तेऽस्य बलानि च ।
व्याधयस्तस्य दूरस्थाः सकलान्यौषधानि च ॥ १६९ ॥
मन्दिराणि विचित्राणि राजन्ते तस्य सर्वदा ।
कृषिः फलवती तस्य भूमिः कामदुघाव्यया ॥ १७० ॥
स्फीतो जनपदस्तस्य राज्यं तस्य निरीतिकम् ।
मातङ्गाः पद्मिणस्तुङ्गाः सिञ्चन्तो मदवारिभिः ॥ १७१ ॥
द्वारे तस्य विराजन्ते हृष्टा नागतुरङ्गमाः ।
प्रजास्तस्य विराजन्ते निर्विवादाश्च मन्त्रिणः ॥ १७२ ॥
ज्ञातयस्तस्य तुष्यन्ति शीलं तस्यातिसुन्दरम् ।
लक्ष्मीस्तस्य वशे नित्यं स्वासना च मनोरमा ॥ १७३ ॥
गद्यपद्यमयी वाणी तस्य गङ्गातरङ्गवत् ।

---

' एतेन ' ख. पाठः ।

नानापदपदार्थानां वादचातुर्यसंभृता ॥ १७४ ॥
समग्ररससंपत्तिशालिनी लास्यमालिनी ।
अदृष्टान्यपि शास्त्राणि प्रकाशयन्ते निरन्तरम् ॥ १७५ ॥
निग्रहः परवाक्यानां सभायां तस्य जायते ।
स्तुवन्ति वन्दिनस्तं वै राजानो दासवत्तथा ॥ १७६ ॥
शस्त्राण्यस्त्राणि तदङ्गे जनयन्ति रुजां नहि ।
महिलास्तस्य वशगाः सर्वावस्था भवन्ति वै ॥ १७७ ॥
विषं निर्विषतां याति पानीयममृतं भवेत् ।
परपक्षस्तम्भनं च प्रतिपक्षस्य जृम्भणम् ॥ १७८ ॥
नवरात्रेण जायेत स तदभ्यासयोगवित् ।
अहोरात्रं पठेद्यस्तु निस्तन्द्रः शान्तमानसः ॥ १७९ ॥
वशे तस्य प्रजा याति सर्वे लोकाः सुनिश्चितम् ।
षण्मासाभ्यासयोगेन योगमायाति निश्चितम् ॥ १८० ॥
नित्यं कामकलांध्यायन् यः पठेत् स्तोत्रमुत्तमम् ।
मदनोन्मादकलिताः पुरन्ध्यस्तद्वशानुगाः ॥ १८१ ॥
लावण्यमदनाः साक्षाद्वैदग्ध्यमुदितेक्षणाः ।
प्रेमपूर्णामपि वशे ह्युर्वशीं स हि विन्दति ॥ १८२ ॥
भूर्जपत्रे रोचनया कुङ्कुमेन शुभे दिने ।
लाक्षारसद्रवेणापि यावकैर्वा विशेषतः ॥ १८३ ॥
धातुरागेण वा देवि लिखितं यन्त्रमश्चितम् ।
सुवर्णरौप्यगर्भस्थं सुसंपूतं सुसाधितम् ॥ १८४ ॥
बालाबुद्ध्या पूजितं च प्रतिष्ठितसमीरणम् ।
धारयेन्मस्तके कण्ठे बाहुमूले तथा हृदि ॥ १८५ ॥
नाभौ वापि धृतं धन्यं जयदं सर्वकामदम् ।
रक्षणं नापरं किञ्चिद्विद्यते भुवनत्रये ॥ १८६ ॥

ग्रहरोगादिभयहृत् सुखकृत्यविवर्धनम् ।
बलवीर्यकरं क्रूरभूतशत्रुविनाशनम् ॥ १८७ ॥
पुत्रपौत्रान् गुणगणैर्वर्धनं धनधान्यकृत् ।
धरण्यां सा पुरी धन्या यत्रायं साधकोत्तमः ॥ १८८ ॥
यद्गृहे लिखितं तिष्ठेत् स्तोत्रमेतद्वरानने ।
तत्र चाहं शिवे नित्यं हरिश्च कमला तथा ॥ १८९ ॥
वसामः सर्वतीर्थानामुत्पत्तिस्तत्र जायते ।
यो वापि पाठयेद् भक्त्या पठेद्वै साधकोत्तमः ॥ १९० ॥
ज्ञानानन्दकलायोगादैक्यवृत्तिं स विन्दति ।
स्तोत्रेणानेन देवेशि तव पूजाफलं लभेत् ॥ १९१ ॥
षोढान्यासतनुर्भूत्वा पठितव्यं प्रयत्नतः ।
उत्तमा सर्वतन्त्राणां बालायाः पूजनस्तुतिः ॥ १९२॥
तत्रोत्तमा षोडशार्णा तत्रेदं स्तोत्रमुत्तमम् ।
नाशिष्याय प्रदातव्यमशुद्धाय शठाय च ॥ १९३ ॥
अलसायाप्रयत्नायाशिवाभक्ताय सुन्दरि ।
भक्तिहीनाय मलिने गुरुनिन्दापराय च ॥ १९४ ॥
विष्णुभक्तिविहीनाय विकल्पावृतबुद्धये ।
देयं भक्तवरे मुक्तेः कारणं भक्तिवर्धनम् ॥ १९५ ॥
लतायोगे पठेद्यस्तु स्तोत्रमेतद्वरानने ।
सैव कल्पलता तस्य वाञ्छाफलकरी तथा ॥ १९६ ॥
पुष्पितायां लतायोगे कुरङ्गमुखि साधकः ।
अक्षुब्धः सन् पठेद्यस्तु शतयज्ञस्य पुण्यभाक् ॥ १९७ ॥
ब्रह्मादयोऽपि देवेशि प्रार्थयन्ति पदद्वयम् ।
स्वयं शिवः स विज्ञेयो यो बालाभावलम्पटः ॥ १९८ ॥
ब्रह्मानन्दमयी ज्योत्स्ना सदाशिवविधूदिता ।

आनन्दो योऽपि यं वेदा वदन्त्यस्या वशे स्थिताः ॥ १९९ ॥
आह्लादनं बालाध्यानाद्बालाया नामकीर्तनात् ।
सदानन्दाभ्यासयोगात् सदानन्दः प्रजायते ॥ २०० ॥

इति श्रीरुद्रयामले तन्त्रे भैरवभैरवीसंवादे
श्रीबालात्रिपुरसुन्दरीसहस्रनामकम् ॥ ४ ॥

अथ

# श्रीबालास्तोत्रम् ।

श्रीभैरवः

अधुना देवि बालायाः स्तोत्रं वक्ष्यामि पार्वति ।
पञ्चमाङ्गं रहस्यं मे श्रुत्वा गोप्यं प्रयत्नतः ॥ १ ॥

अस्य श्रीबालात्रिपुरसुन्दरी स्तोत्रमन्त्रस्य, दक्षिणामूर्ति ऋषिः, पङ्क्तिश्छन्दः, श्रीबालात्रिपुरसुन्दरी देवता, ऐं बीजं सौः शक्तिः क्लीं कीलकं, श्रीबालाप्रीतये पाठे विनियोगः ॥ दक्षिणामूर्तिऋषये नमः शिरसि, पङ्क्तिश्छन्दसे नमो मुखे, श्रीबालादेवतायै नमो हृदि, ऐंबीजाय नमो नाभौ, सौःशक्तये नमो गुह्ये, क्लींकीलकाय नमः पादयोः, पाठे विनियोगाय नमः सर्वाङ्गेषु ॥ ऐंहृदयाय० क्लींशिरसे० सौःशिखायै० ऐंकवचाय० क्लींनेत्राभ्यां० सौःअस्त्रायफट् । ऐंअङ्गुष्ठाभ्यां० क्लींतर्जनीभ्यां० सौःमध्यमाभ्यां० ऐंअनामिकाभ्यां० क्लींकनिष्ठिकाभ्यां० सौःकरतलपृष्ठाभ्यां नमः ॥ ध्यानम् —

अरुणकिरणजालैं रञ्जिताशावकाशा
विधृतजपवटीका पुस्तकाभीतिहस्ता ।
इतरकरवराढ्या फुल्लकह्लारसंस्था
निवसतु हृदि बाला नित्यकल्याणरूपा ॥ २ ॥
वाणीं जपेद् यस्त्रिपुरे भवान्या
बीजं निशीथे जडभावलीनः ।
भवेत् स गीर्वाणगुरोर्गरीयान्
गिरीशपत्नि प्रभुतादि तस्य ॥ ३ ॥[1]
कामेश्वरि त्र्यक्षरीकामराजं
जपेद् दिनान्ते[2] तव मन्त्रराजम् ।
रम्भापि जृम्भारिसभां विहाय
भूमौ भजेत् तं कुलदीक्षितं च ॥ ४ ॥
तार्तीयकं बीजमिदं जपेद् य-
स्त्रैलोक्यमातस्त्रिपुरे पुरस्तात् ।
विधाय लीलां भुवने तथान्ते
निरामयं ब्रह्मपदं प्रयाति ॥ ५ ॥
धरासद्मत्रिवृत्ताष्ट-पत्रषट्कोणनागरे
बिन्दुपीठेऽर्चयेद्बालां योऽसौ प्रान्ते शिवो भवेत् ॥ ६ ॥
इति मन्त्रमयं स्तवं पठेद् य-
स्त्रिपुराया निशि वा निशावसाने ।
स भवेद् भुवि सार्वभौममौलि-
स्त्रिदिवे शक्रसमानशौर्यलक्ष्मीः ॥ ७ ॥
इतीदं देवि बालायास्तोत्रं मन्त्रमयं परम् ।

---

१ 'पत्नीप्रभयार्दितस्य' क. पाठः । २ 'रतान्ते' ख. पाठः ।

अदातव्यमभक्तेभ्यो गोपनीयं स्वयोनिवत् ॥ ८ ॥

इति श्रीरुद्रयामले तन्त्रे भैरवभैरवीसंवादे
श्रीबालात्रिपुरसुन्दरीस्तोत्रम् ॥ ५ ॥

## समाप्तं श्रीबालापञ्चाङ्गम् ॥

अथ

## उद्धारकोशः ।

एकदा स्फाटिकोर्वीभृत्सानौ वनसमाकुले ।
संस्थितौ पार्वतीशम्भू लोकरक्षणतत्परौ ॥ १ ॥
पार्वती परमेशानं प्रोवाच परमं[1] हितम् ।
देवदेव सुरश्रेष्ठ दयात्रैगुण्यमानस ॥ २ ॥
देवी भगवती देव महात्रिपुरसुन्दरी ।
अस्मिश्चराचरे व्यक्ते क्रूरे केन प्रकाशिता ॥ ३ ॥

श्रीईश्वरः ।

शृणु देवि प्रवक्ष्यामि गोप्यं तव कुतूहलात् ।
रेवातटे महापुण्ये श्रीगर्भा नाम सत्पुरी ॥ ४ ॥
अस्ति त्रैलोक्यविख्याता सर्वभूतलशेखरा ।
तस्यां बभूव विप्रेन्द्रदेवगन्धर्वसेवितम् ॥ ५ ॥

१ 'वसनं' ग. पाठः ।

पुण्यं तपोवनफ्दं नानावृक्षसमाकुलम्[1] ।
तस्मिंस्तपोवने पुण्ये सेवितेऽपि सुरेश्वरैः ॥ ६ ॥
ऋषिस्तु[2] दक्षिणामूर्तिस्तदाराधनतत्परः ।
नानाशास्त्राब्धिपोतोऽपि सर्वागमनिधिरभूत् ॥ ७ ॥
एकदा स्नातुमायातो रेवां पुण्यजलान्विताम्[3] ।
प्राक्पुण्यकर्मणा तस्मै तुष्टा त्रिपुरसुन्दरी ॥ ८ ॥
जलमध्ये स्थिता गोप्त्री महात्रिपुरसुन्दरी ।
मूलं च[4] शिक्षितो देव्याः शुद्धममृतरूपणम् ॥ ९ ॥
सत्वरं फलदं गोप्यं स मुनीन्द्रशिरोमणिः ।
तदा प्रभृति तन्मन्त्रं ध्यायन् स्तोत्रं जपन् हृदि ॥ १० ॥
तत्प्रभावान्महादेवि ग्रन्थं कर्तुमियेष सः ।
तदनुग्रहमात्रेण स मुनीश्वरपूजितः ॥ ११ ॥
ग्रन्थमुद्धारकोशाख्यं चकार मन्त्रसागरम् ।
अन्यान् नानाविधान् ग्रन्थान् प्रेक्ष्य त्रैलोक्यपूजिते ॥ १२ ॥
तदा प्रभृति देवेशि प्रसिद्धं भूमिमण्डले ।
ग्रन्थमुद्धारकोशाख्यं सर्वागमविनिश्चितम् ॥ १३ ॥

श्रीदेव्युवाच ।

देवदेव जगन्नाथ भक्तानुग्रहकारक ।
श्रोतुमुद्धारकोशाख्यं नानागमविनिश्चितम् ॥ १४ ॥
इच्छामि परया प्रीत्या वक्तुमर्हसि धूर्जटे ।

श्रीईश्वरः ।

शृणु देवि प्रवक्ष्यामि ह्युद्धारं त्रिपुरादितः ।
देवीनां दशविद्यानां मन्त्रोद्धारमनुत्तमम् ॥ १५ ॥
ग्रन्थमुद्धारकोशाख्यं सर्वागमविनिश्चितम् ।

---

१ 'देववृक्ष' ग.पाठः । २ 'ऋषिः स्याद्' ख.पाठः । ३ 'जना' ख.पाठः । ४ 'स्वशूलं' ग. पाठः ।

सर्वग्रन्थाद्यपूज्यं च तच्छृणुष्व ब्रवीम्यहम् ॥ १६ ॥
तदनुग्रहमात्रेण सर्वानुद्धारसञ्चयान् ।
अब्रवीद् दक्षिणामूर्तिः शिष्यमक्षोभ्यनामकम् ॥ १७ ॥
शृणु छात्र[1] महाभाग देवीभक्तिसमन्वित ।
रहस्यं सर्वलोकानां देवानामपि दुर्लभम् ॥ १८ ॥
देवि तस्मिन्नवसरे शिष्याय प्रियवादिने ।
मुनीन्द्रो दक्षिणामूर्तिरब्रवीद् ग्रन्थमुत्तमम् ॥ १९ ॥
भाषितं यत्पुरा तेन तत्प्रभावान्महेश्वरि ।
देवानां देवतानां च तच्छृणुष्व ब्रवीम्यहम् ॥ २० ॥

तत्रादौ त्रिपुरामन्त्रोद्धारः । तदुक्तं वामकेश्वरतन्त्रे—

१) लक्ष्मीः परा मदनवाग्भवशक्तियुक्ता
तारं च भूतिकमला कथितापि विद्या ।
शक्त्यादिकं तु विपरीततया च प्रोक्तं
श्रीषोडशाक्षरविधिः शुभदोऽस्तु पूर्णः ॥ १ ॥

इति । उड्डामरे च—

क्षीरोदसम्भवा भूतिः कामं वाग्भवमेव च ।
शक्तिः प्रणवलज्जे तु लक्ष्मीः शक्त्यादिकं ततः ॥ १ ॥
विपरीततया प्रोक्ता विद्या श्रीषोडशाक्षरी ।
(त्रिकूटा सकला भद्रे विद्येयं षोडशाक्षरी) ॥ २ ॥

इति । रुद्रयामलेऽपि—

हरिणाक्षी तथा माया कामराजश्च वासना ।
शरत् त्र्यक्षं तथा क्षामा लक्ष्मीः शक्त्यादिकं तथा[2] ॥ १ ॥
विपरीततया प्रोक्ता विद्या श्रीषोडशाक्षरी ।

तत्र[3] लक्ष्मीबीजनामानि, उक्तं च छिन्नारहस्ये—

लक्ष्मीः पद्मा हरिणाक्षी सरोरुहनिवासिनी ।

---

१ 'छात्रं' ख.पाठः । २ 'ततः' ख.पाठः । ३ तत्राप्यस्मिनुद्धारकोशानि अधिकः ख. पाठः ।

कमला रुक्मिणी चैव नारायणप्रिया श्रिये ।
लक्ष्मीबीजानि सप्तैव कृत्रिमाण्यपराणि तु ॥ १ ॥
(वान्तं वह्निसमायुक्तं रतिबिन्दुविभूषितम् ।
लक्ष्मीबीजमिति प्रोक्तं सर्वकामार्थसिद्धिदम् ॥ २ ॥)

अपरं च त्रिपुरातिलके —

इमे द्वे कमला पद्मा हरिकान्ता तथैव च ।
श्रियो बीजानि पञ्चैवमनृतान्यपराणि तु ॥ १ ॥

श्रीं-इति लक्ष्मीबीजम् । अथ पराबीजनामानि, उक्तं वागमालङ्कारे—

परा भूतिस्तथा लज्जा मायापि सकला कृशा ।
समस्तापि तथा वामा देवीप्रणववीरकौ ॥ १ ॥
वारणार्णं सुधाबीजं कृत्रिमाण्यपराणि तु ।
(वामाक्षिवह्निसंयुक्तं बिन्दुनादविभूषितम् ।
शिवबीजं महेशानि लज्जाबीजमुदाहृतम् ॥ २ ॥

ईशानमुद्धृत्य पुरारिबीजं
सबिन्दुकं नादविभूषितं च ।
सवामकर्णं परितः प्रकल्प्य
मायां वदन्तीह मनीषिणस्ताम् ॥ ३ ॥)

ह्रीं[1]-इति पराबीजम् । ततो मदनबीजनामानि, उक्तं च भैरवतन्त्रे—

कामः पञ्चेषुरेवं च मदनो मन्मथस्तथा ।
मारः प्रद्युम्नकन्दर्पावनृतान्यपराणि तु ॥ १ ॥

क्लीं-इति मदनबीजम् । ततो वाग्भवबीजनामानि, उक्तं च त्रिपुरासारसर्वस्वे-

वाग्भवमूर्ध्वबीजं च चारणं चण्डकेश्वरः[2] ।
चन्द्रोऽपि चर्मवसनं[3] वासनापि तथैव च ॥ १ ॥
चार्वङ्ग्यपि च चर्माण्यसत्यान्यपराणि तु ।

---

१ 'ह्लीं' ख. पाठः । २ 'चण्डि' ख. 'चान्द्र' ग. पाठः । ३ 'चण्डोऽपि वर्म' ख. पाठः ।

(द्वादशस्वरवर्णं स्यान्नादबिन्दुविभूषितम् ।
वाग्भवं बीजमित्युक्तं सर्ववाक्यविशुद्धये ॥ २ ॥)

ऐं-इति वाग्भवबीजम् । त्वार्वङ्गीबीजौ द्वौ, ऐं च्लीं च । अथ शक्ति-बीजनामानि, उक्तं च च्छिन्नाशिरोमणौ—

शक्तिः शर्मापि विज्ञेये शरच्छङ्के तथैव च ।
शक्तिबीजानि चत्वारि कृत्रिमाण्यपराणि तु ॥ १ ॥

सौः-इति शक्तिबीजम् । शर्मबीजौ द्वौ, सौः शां च । ततस्तारबीजनामानि, तत्रैव—

प्रणवं च धनुस्तारं त्र्यक्षं तोमापि त्र्यम्बकः ।
त्रासस्तारक एतानि बीजानि प्रणवस्य च ॥ १ ॥
अपराणि ह्यसत्यानि मया प्रोक्तानि पार्वति ।
विपरीततया प्रोक्ता विद्या श्रीषोडशाक्षरी ॥ २ ॥

ओं-इति तारबीजम् प्रकाशम्,।—श्रीं ह्रीं क्लीं ऐं सौः ओं ह्रीं श्रीं कएईलह्रीं, हसकहलह्रीं, सकलह्रीं, सौः ऐं क्लीं ह्रीं श्रीं। इति श्रीत्रिपुरामन्त्रोद्धारः॥
अथ दश विद्याः। उक्तं चागमलहर्याम्—

त्रिपुरा श्रीश्च वाग्देवी तारापि भुवनेश्वरी ।
मातङ्गी शारिका राज्ञी भीडा ज्वालामुखी तथा ॥ १ ॥
दश विद्याः स्वयं चैता भाषिताः कृत्तिवाससा ।
एता दशैव षडन्या योजिता षोडशाक्षरी ॥ २ ॥
दशविद्या भद्रकाली तुरी च च्छिन्नमस्तका ।
दक्षिणाकालिका श्यामा कालरात्र्यपि सुन्दरि ॥ ३ ॥
एतासां मूलमन्त्रेण योजितैकाक्षरेण च ।
ब्रह्मादिदेवतैः पूज्या विद्या श्रीषोडशाक्षरी ॥ ४ ॥

वामकेश्वरे षोडशाक्षरी विद्या, इति ।

१ 'सः' ख. पुस्तके पाठः ।

ततो लक्ष्मीमन्त्रोद्धारः। उक्तं च रुद्रयामले—

(२) हरिणाक्षी परा त्र्यक्षं लक्ष्मीबीजत्रयं त्विदम्।
विपरीततया प्रोक्तं सस्वरं फलदायकम् ॥ १ ॥
क्षामा शङ्कापि नीरं तदन्ते प्रोक्तं शिष्योत्तम।

तत्र नीरबीजनामानि, यदुक्तमुड्डामरे—

आपो वनं तथा नीरं ठद्वयं च पयस्तथा।
जलबीजानि प्रोक्तानि ह्यसत्यानि पराणि तु ॥ १ ॥

स्वाहा-इति नीरबीजम्। ॐ ह्रीं श्रीं लक्ष्मि महालक्ष्मि सर्वकामप्रदे सर्वसौभाग्यदायिनि अभिमतं प्रयच्छ सर्वे सर्वगते सर्वस्वरूपे सर्वदुर्जयविमोचिनि ह्रींसौः[१] स्वाहा, इति मूलम्। शारदायाम्—

वाग्भवं शम्भुवनिता रमा मकरकेतनः।
तार्तीयं च जगत्पार्श्वौ वह्निबीजसमुज्ज्वलः ॥ १ ॥
उ—दीर्घाढ्यो भृगुस्त्यै हृन्मन्त्रोऽयं द्वादशाक्षरः।

ऐं ह्रीं श्रीं क्लीं सौः जगत्प्रसूत्यै नमः इति ॥ ततः सरस्वतीमन्त्रोद्धारः, यदुक्तं शारदापटले—

(३) तारं लज्जा वाग्भवं च परा प्रणवमेव च।
बीजं पञ्चशिरो ज्ञेयमन्ते प्रोक्तं नम इति ॥ १ ॥

प्रकाशम्— ॐ ह्रीं ऐं ह्रीं ॐ वाग्देव्यै नमः ॥ (शारदायाम्—

तारं पराऽधरो बिन्दुः शक्तिस्तारं सरस्वती।
ङेन्ता नत्यन्तिको मन्त्रः प्रोक्त एकादशाक्षरः ॥ १ ॥

प्रकाशम्— ॐ ह्रीं ऐं ह्रीं ॐ सरस्वत्यै नमः।) नमोबीजनामानि, उक्तं चागमालङ्कारे—

नमो विश्वं तथा स्तम्भमौशमकं चाश्मरी तथा।
अन्यानि कृत्रिमाण्येव सुरासुरनमस्कृते ॥ १ ॥

इति ॥ ततस्तारामन्त्रोद्धारः। उक्तं च भैरवसर्वस्वे—

(४) तारं व्योषं तथा कान्ता माया वाग्भवमेव च।

---

१ 'सः' ख. पाठः।

कूर्चं चैव महेशानि ह्यन्ते फट् ठद्वयं तथा ॥ १ ॥

तत्र व्योषबीजनामानि, उक्तं चागमसिन्धौ—

स्कन्दं व्योषं च डिम्बं च संयोज्य हरमित्यतः ।

ह्रां-बीजोद्धारमेतद्धि चान्यदनृतमावदेत् ॥ १ ॥

ह्रां-इति व्योषबीजम् । ततः कान्ताबीजनामानि, उक्तं च वामकेश्वरे—

कान्ता च कमलाक्षी च प्रियापि परमापि च ।

लम्भापि ललना लज्जा ह्यसत्यन्यपराणि तु ॥ १ ॥

(षोडशव्यञ्जनं वह्निवामाक्षिबिन्दुसंयुतम् ।

चन्द्रबीजे समारूढं वधूबीजमिदं स्मृतम् ॥ २ ॥)

स्त्रीं-इति कान्ताबीजम् । एकाक्षीबीजञ्च । ततः कूर्चबीजनामानि, उक्तं च छिन्नारहस्ये—

कूर्चं कूलं तटं तीरमसत्यान्यपराणि तु ।

हूं-इति कूर्चबीजम् । ततः फट्बीजनामानि, छिन्नारहस्ये—

हरं फट् तुरगं चान्यदसत्यं तु महेश्वरि ।

ओं ह्रां स्त्रीं ह्रीं ऐं हूं उग्रतारे फट् स्वाहा इति ॥ अथ भुवनेश्वरी-मन्त्रोद्धारः । उक्तं च कुब्जिकासर्वस्वे—

[५] प्रणवं तु तथा माया कमला मन्मथस्तथा ।

अन्ते विश्वं नाम मध्ये प्रोक्तं वै तु[1] सुरेश्वरि ॥ १ ॥

प्रोक्तोऽयं भुवनेश्वर्या मनुस्तुर्याक्षराभिधः ।

तत्र मनुबीजनामानि, उक्तं च स्वतन्त्रे त्रिपुराटीकायाम्—

मन्त्रो मनुर्हरश्चैव हनुर्बालं विदुर्बुधाः ।

बीजान्येतानि मन्त्रस्य कृत्रिमान्यपराणि तु ॥ १ ॥

हरबीजौ द्वौ, मन्त्रः फट् च । प्रकाशं—ओं ह्रीं श्रीं क्लीं भुवनेश्वर्यै नमः इति ॥ ततो मातङ्गीमन्त्रोद्धारः । उक्तं हि कुलसिद्धासन्ताने—

[६] तोमा काली तथा लक्ष्मीर्वाग्गुराद्वयमेव च ।

चारुकं रसबीजानि ह्यादौ प्रोक्तानि शम्भुना ॥ १ ॥

---

१ 'तुभ्यं' ख. पाठः ।

अन्ते जिह्वा तथा पद्मं लज्जा नीरजमेव च ।
वासना पङ्कजं चैव वनं प्रोक्तं च शूलिना ॥ २ ॥

इति । तत्र जिह्वाबीजनामानि, कालीबीजोद्धाराणि च कुलचूडामणौ—

काली कुन्ती रसज्ञापि जिह्वापि रसना तथा ।
क्रीं-बीजानि च ह्येतानि कृत्रिमाण्यपराणि च ॥ २ ॥

क्रीं-इति जिह्वाबीजम् । अथ वागुराबीजनामानि—

वागुरा वायुपूज्यापि वातुदा[1]स्य त्रिबीजकम् ।
प्रीं-बीजानि तु प्रोक्तानि ह्यसत्यान्यपराणि तु ॥ १ ॥

प्रीं-इति वागुराबीजम् । अथ चारुकबीजनामानि, मुण्डमालातन्त्रे—

चारुकं चैव चार्वङ्गी चारुतोच्छूनबीजकम् ।
चतुष्टयं च च्छ्रीं-बीजे असत्यान्यपराणि च ॥ १ ॥

चार्वङ्गीबीजौ द्वौ च्छ्रीं ऐं च ॥ ततः पद्मबीजनामानि, उक्तं च वामकेश्वरे—

पद्मं पङ्कजपयोजे नीरजमम्बुजं तथा ।
पञ्च ठकारबीजानि ह्यसत्यान्यपराणि च ॥ १ ॥

ठः इति पद्मबीजम् । प्रकाशम्—ॐक्रींश्रींप्रींप्रींच्छ्रीं उच्छिष्टचण्डालिनि देवि महापिशाचिनि मातङ्गीदेवि क्रींठः ह्रींठः ऐंठः स्वाहा । इति मातङ्गीमूलम् ॥ अथ शारिकामन्त्रोद्धारः, उक्तं स्वकृतौ त्रिपुराशिरोमणौ—

(७) तारं मायां श्रियं कूर्चं सिन्धुरं शून्यमेव च ।
कल्याणं शरिकादेव्या बीजं सप्ताचरं स्मृतम् ॥ १ ॥
अन्ते स्तम्भं च विज्ञेयं शारिकामन्त्रमुत्तमम् ।

तत्र सिन्धुरबीजनामानि, उक्तं च वामकेश्वरे—

सिन्धुरं च गणं[2] घोणाहस्तिनं[3] द्विरदं तथा ।
फ्रांबीजानि च[4] चत्वारि कृत्रिमाण्यपराणि च ॥ १ ॥

फ्रां-इति सिन्धुरबीजम् ॥ ततः शून्यबीजनामानि, उक्तं च भैरवतन्त्रे—

शून्यं खमम्बरं व्योम आंबीजे च चतुष्टयम् ।

---

१ 'वान्त' ख. 'वार्तु' ग. पाठः । २ 'तटजं' ख. पाठः । ३ 'हस्तं' ख. पाठः ।
४ 'हि' ख. पाठः ।

हकारं चापि विज्ञेयमुक्तं तद्रुद्रयामले ॥ १ ॥
असत्यमपरं ज्ञेयं ताराभक्तिसमन्विते ।

आमिति ( हं च ) शून्यबीजम् ॥ ततः कल्याणबीजनामानि, तत्रैव—

कल्याणं चैव शर्मापि शं शुभं च चतुष्टयम् ।
अपरमनृतं ज्ञेयं पर्वतेश्वरनन्दिनि ॥ १ ॥

शर्मबीजे द्वे सौः श च । प्रकाशं—ॐ ह्रीं श्रीं ह्रूं फ्रां आं शां शारिकायै नमः । इति ॥ ततो राज्ञीमन्त्रोद्धारः, श्यामातन्त्रे—

(८) तारं लज्जा श्रियमग्निः[2] कामः शक्तिः षडक्षरः ।
बीजं च षट्शिरो ज्ञेयं ततः पल्लवमुद्धरेत् ॥ १ ॥
भगवत्यै तथा राज्यै ह्यन्ते माया च ठद्वयम् ।
एभिः सह मनुः प्रोक्तो राज्याः पञ्चदशाक्षरः ॥ २ ॥

इति । तत्र अग्निबीजनामानि, श्यामातन्त्रे —

अग्नी रेफश्च वह्निश्च हुतभुग् हव्यवाहनः ।
रं-बीजोद्धारमेतद्धि कृत्रिममपरं स्मृतम् ॥ १ ॥

रं-इत्यग्निबीजम् । प्रकाशम् — ॐ ह्रीं श्रीं रां क्लीं सौः भगवत्यै राज्यै ह्रीं स्वाहा । इति ॥ अथ भीडामन्त्रोद्धारः, कुलचूडामणौ—

(९) प्रणवं च विभूतिश्च हरिकान्ता तथैव च ।
वियच्छक्त्यग्निबीजानि संयोज्य वाग्भवं तथा ॥ १ ॥
मदनं च तथा शक्तिबीजं सप्ताक्षरं वदेत् ।
ठद्वयेन समायुक्तः प्रोक्तो विंशाक्षरो मनुः ॥ २ ॥
( तारं परा रमा वेदी चन्द्रमन्मथशक्तयः ।
भीडाभगवतीत्येवं हंसरूपिणि ठद्वयम् ॥ ३ ॥ )

प्रकाशम्— ॐ ह्रीं श्रीं ह्स्रां ऐं क्लीं सौः भीडाभगवति हंसरूपिणि स्वाहा । इति ॥ अथ ज्वालामुखीमन्त्रोद्धारः, शारदातिलकटीकायां—

(१०) तारं लज्जां श्रियं चैवमन्ते कूर्चं हरं[3] पयः ।

---

१ 'च' ख. पाठः । २ 'श्रियं चाग्निः' ग. पाठः । ३ 'पुरं' ख. पाठः ।

बीजं च [1]त्र्यक्षरं देव्या ज्वालामुख्याः सुरेश्वरि ॥ १ ॥
(तारं लज्जां श्रियं चैव ज्वालामुखि ममेति च ।
सर्वशत्रून् भक्षय—द्विरन्ते कूर्चं हरं पयः ॥ २ ॥)

प्रकाशम् — ॐ ह्रीं श्रीं ज्वालामुखि मम सर्वशत्रून् भक्षय २ हूं फट् स्वाहा । इति ॥

दशविद्या मयाख्याता यथागमविनिश्चिताः ।
साधकेष्टप्रदा देव्यो नानारत्नविभूषिताः ॥ १ ॥
एतासां दशविद्यानां गुणान् वक्ष्यामि त्वं शृणु ।

दक्षिणामूर्तिः ।

भुक्तिं ददाति त्रिपुरा लक्ष्मीं लक्ष्मीर्ददाति च ।
विद्यां ददाति वाग्देवी प्रत्येकं जन्मनिश्चलाम् ॥ २ ॥
तारा ज्ञानं तथा मोक्षं[2] ह्यैश्वर्यं भुवनेश्वरी ।
मातङ्गी राक्षसीशत्रुभीतिं हरति नित्यशः ॥ ३ ॥
शारिका शं ददात्येव राज्ञी राज्यं प्रयच्छति ।
भीडादेवी ददात्येव सन्ततिं विश्वव्यापिनीम् ॥ ४ ॥
धनं ज्वालामुखी देवी भक्तेभ्यः संप्रयच्छति ।
दशविद्या यथा एता भक्तेभ्यः फलमिष्टदम् ।
प्रयच्छन्ति महादेव्यः पूजाहोमजपादिभिः ॥ ५ ॥

इति श्रीदक्षिणामूर्तिमुनिविरचिते उद्धारकोशे सर्वागमसारे दशविद्यामन्त्रोद्धारकोशाख्यानं प्रथमः कल्पः ॥ १ ॥

---

१ 'षडक्षरं' ख. पाठः । २ 'तारयते सिन्धुं' ख. ग. पाठः ।

अथ

# द्वितीयः कल्पः ।

श्रीईश्वरः ।

शृणु देवि प्रवक्ष्यामि त्रिपुरां परिवारिताम् ।
षट्सखीभिरहं तासां मन्त्रोद्धारं ब्रवीमि ते ॥ १ ॥

अक्षोभ्य उवाच ।

गुरो विधातृसंभूत नानाशास्त्रविशारद ।
श्रोतुमिच्छाम्यहं मन्त्रान् सर्वान् संमुक्तिहेतवे ॥ २ ॥

दक्षिणामूर्तिः ।

शृण्वक्षोभ्य महाभाग सर्वं वक्ष्यामि तत्त्वतः ।
दशविद्या भद्रकाली तुरी च च्छिन्नमस्तका ॥ ३ ॥
दक्षिणाकालिका श्यामा कालरात्रीति सुन्दर ।
षट्सखीनामहं तासां मन्त्रोद्धारं ब्रवीमि ते ॥ ४ ॥

तत्रादौ भद्रकालीमन्त्रोद्धारः। श्यामातन्त्रे—

(१) कालीत्रयं कूर्चयुगं लज्जायुग्मं च भद्रिका ।
भद्रकालिपदं ब्रूयाद् बीजानि प्रतिलोमतः ॥ १ ॥
ठद्वयेन समायुक्तो भद्रकाल्या[1] महामनुः ।

तत्र भद्रिकाबीजनामानि, मुण्डमालातन्त्रे

भद्रिका भास्वती भीमा भैंबीजे त्रितयं स्मृतम् ।
अनृतमपरं ज्ञेयं ब्रह्मान्वयसमुद्भव ॥ १ ॥

प्रकाशम्—क्रीं ३ हूं २ ह्रीं २ भैं भद्रकालि भैं ह्रीं २ हूं २ क्रीं ३ स्वाहा। इति ॥

---

१ 'कालीमहा' ख. पाठः ।

अथ तुरीमन्त्रोद्धारः । स्वतन्त्रे—

(२) प्रणवं तारका ज्योतिस्तारा ह्यन्ते नम इति ।
तुर्या[1] मूलमिदं प्रोक्तं स्वतन्त्रे शम्भुना स्वयम् ॥ १ ॥

अथ तारकाज्योतिस्ताराबीजोद्धाराणि, कामेश्वरे तन्त्रे—

त्रं त्वं भं तारका ज्योतिस्तारा बीजानि पञ्च च ।

ओं त्रुं[2] त्रीं त्रों महातुर्यै नमः । इति प्रकाशम् ॥ अथ छिन्नमस्तामन्त्रोद्धारः । छिन्नाशिरोमणौ—

(३) त्र्यम्बकः[3] सकला पद्मा चारुकं च सुरेश्वरि ।
अन्ते उच्छूनबीजं फट् ठद्वयेन समायुतम् ॥ १ ॥

प्रकाशम्— ओं ह्रीं श्रीं च्छ्रीं छिन्नमस्तके च्छ्रीं फट् स्वाहा । इति ॥ द्वितीयो भेदः, आगमलहर्याम्—

लक्ष्मीं लज्जां तथा मायां मात्रां द्वादशिकामथ ।
वज्रवैरोचनीये द्वे माये फट्स्वाहया युते ॥ १ ॥

प्रकाशम्— श्रीं ह्रीं ह्रीं ऐं वज्रवैरोचनीये ह्रीं ह्रीं फट् स्वाहा । इति ॥ अथ दक्षिणाकालीमन्त्रोद्धारः, श्यामारहस्ये—

(४) कुन्तीत्रयं तीरयुग्मं क्षामायुग्मं ततोऽभिधाम् ।
दक्षिणे-कालिकेत्येवमन्ते कालीत्रयं पुनः ॥ १ ॥
कूर्चयुग्मं परायुग्मं पयश्चैव सुरेश्वरि ।
दक्षिणायाः कालिकाया मनुर्द्वाविंशदक्षरः ॥ २ ॥

प्रकाशम्— क्रीं ३ हूं २ ह्रीं २ दक्षिणे कालिके क्रीं ३ हूं २ ह्रीं २ स्वाहा । इति ॥ अथ श्यामामन्त्रोद्धारः । तत्र श्यामातन्त्रे—

(५) हरिणाक्षी तथा लज्जा काली जिह्वाचतुष्टयम् ।
ततः सुधारसे श्यामे कृष्णशापं विमोचय ॥ १ ॥
अमृतं स्रावय स्वाहा श्यामामन्त्रमुदाहृतम् ।

प्रकाशम् — श्रीं ह्रीं क्रीं क्रीं क्रीं क्रीं क्रीं सुधारसे श्यामे कृष्णशापं विमोचय अमृतं स्रावय स्वाहा । इति ॥ अथ कालरात्रीमन्त्रोद्धारः । उक्तं च

---

१ 'तुरीमूलं' ख. पाठः । २ 'त्रुंत्रांत्रों' ग. पाठः । ३ 'त्र्यम्बिका' ख. पाठः ।

कालरात्रीकल्पे—

(६) प्रणवं वासना माया मन्मथः कमलोद्भवम्[1] ।
बीजं पञ्चशिरो ज्ञेयं ततः पल्लवमुद्धरेत् ॥ १ ॥
ततो मध्येऽभिधां त्यक्त्वा ह्यन्ते सर्वं वशं कुरु ।
नीरो[2] देहि-युगं मध्ये त्यक्त्वाभिधां च कामिनि ॥ २ ॥
गणेश्वर्यै तथा चान्ते विश्वं च समुदाहृतम् ।

प्रकाशम्— ॐ ऐं ह्रीं क्लीं श्रीं कालेश्वरि सर्वजनमनोहरि सर्वमुखस्त-म्भिनि सर्वराजवशङ्करि सर्वदुष्टनिर्दलिनि सर्वस्त्रीपुरुषकर्षिणि बन्दी-शृङ्खलांस्त्रोटय २ सर्वशत्रून् भञ्जय २ द्वेष्यान् निर्दलय २ सर्वांस्तम्भय २ मोहनास्त्रेण द्वेषिणमुच्चाटय २ सर्वं वशं कुरु स्वाहा देहि २ सर्वका-लरात्रि कामिनि गणेश्वर्यै नमः । अथ भेदाः—

देवेशि त्रिपुराबालं विज्ञेयं द्वादशात्मकम् ॥ ३ ॥

उक्तं च मुण्डमालातन्त्रे—

द्वादशात्मकं विज्ञेयं देवि तत्त्रिपुराहनुम् ।
केवलं मुक्तये देवि यत्प्रोक्तं तच्छुभं स्मृतम् ॥ १ ॥

उड्डामरे—

अष्टात्मिका च विज्ञेया विद्या श्रीषोडशाक्षरी ।
परं यत् सूचितं देवि सद्यो मुक्तिप्रदं स्मृतम् ॥ १ ॥

तथा स्वकृतौ त्रिपुराशिरोमणौ—

अष्टात्मकमिदं बीजं त्रिपुरायाः स्मृतं तथा ।
अष्टभिर्वत्सरैर्वापि मासैरष्टभिरेव च ॥ १ ॥
अष्टभिर्दिवसैर्वापि जानीयान्मुक्तिलक्षणम् ।
लक्ष्मीभेदद्वयं ज्ञेयं भाषितं कृत्तिवाससा ॥ २ ॥
लक्ष्मी च रुक्मिणी चैव त्रिभिर्वर्षैः फलं लभेत् ।

अथ सरस्वतीभेदाः, कामिनीकल्पे—

---

१ "कमला तथा" ख. पाठः । २ 'वीर्यं' ख. पाठः ।

वाग्देवी च तथा वाणी सरस्वत्यनलप्रिया ।
भेदास्त्वेते तु विख्याताः फलं वर्षचतुष्टये ॥ १ ॥

ततस्ताराभेदाः, भैरवतन्त्रे—

ताराऽपि तारिणी चैवमेकजटा तथैव च ।
नीलसरस्वती चैवमुग्रतारा प्रकीर्तिता ॥ १ ॥
ताराभेदास्तु पञ्चैवमत्तोऽभ्येण प्रकाशिताः ।

अथ भुवनेश्वरीभेदाः, भैरवतन्त्रे—

भैरवी भीमरूपा च भीमापि भुवनेश्वरी ।
भक्त्या फलप्रदा देवी नित्यं वर्षचतुष्टये ॥ १ ॥

अथ मातङ्गीभेदाः, रुद्रयामले—

मातङ्गीसुमुख्योरैक्यं मतङ्गमुनिना स्मृतम् ।
मातङ्गी[2] चक्रिणी देवी कुब्जिका शाम्बरी तथा ॥ १ ॥
देव्या भेदानि चत्वारि फलं वर्षचतुष्टये ।

अथ शारिकाभेदद्वयम्—

शारिकापि तथाऽपर्णा फलदापि द्विवर्षिके ।

अथ राज्ञीभेदाः—

राज्ञीभेदद्वयं प्रोक्तं राज्ञी च खगगामिनी ।
द्विवर्षमध्ये भक्त्या च राज्ञी राज्यं प्रयच्छति ॥ १ ॥

कुलिकार्णवे—

भीडा भेदविहीना च प्रजाभाग्यविवर्धिनी ।

अथ ज्वालामुख्याः, ज्वालाशिरोमणौ—

ततो[3] ज्वालामुखी चैवमम्बिका भगरूपिणी ।
यथेष्टफलदं प्रोक्तं ज्वालाभेदत्रयमिदम् ॥ १ ॥
एतासां दशविद्यानां नानाभेदमुदाहृतम् ।

तत्रादौ त्रिपुराभेदाः, त्रिपुरातिलके मुण्डमालातन्त्रे च—

---

१ 'च' ग. पाठः । २ 'तङ्ग' ग. पाठः । ३ 'तारा' क. पाठः ।

त्रिपुरा भैरवीविद्या हिङ्गुला चण्डिका तथा ।
चामुण्डा नारसिंही च ह्यैन्द्री हैमवतीश्वरी ॥ १ ॥
मृडानी वारुणी दुर्गा महात्रिपुरसुन्दरी ।
देव्या द्वादशभेदास्तु प्रोक्ता ह्येते त्रिशूलिना ॥ २ ॥

श्रीं ह्रीं सौः त्रिपुरेऽपि चन्द्रवसने[1] कामः शरद्भैरवि
ॐ ह्रीं श्रीं हिङ्गुले तथैव कमला त्वामः त्र्यचं चण्डिके ।
चामुण्डे हसकलह्रीं च सकलह्रीं श्रीनारसिंहि तथा
ह्यैन्द्रि चारणमेव ह्रीं च मदनः कामं परा रुक्मिणी ॥ ३ ॥
देवी हैमवतीश्वर्यपि कमला लज्जा तथा मन्मथ-
श्चन्द्रो वारुणि वा कएईलपरा दुर्गे स्मृता शम्भुना ।
श्रीं ह्रीं क्लीं चारणं शरदपि तथा त्र्यचं परा रुक्मिणी
विद्याश्रीर्विपरीतभावसहिता स्यात् षोडशात्माविधिः ॥ ४ ॥

इति षोडशाक्षरीभेदाः ॥ प्रकाशम्-श्रीं ह्रीं सौः त्रिपुरे ॥ ऐं क्लीं सौः भैरवि ॥ ॐ ह्रीं सौः हिङ्गुले ॥ श्रीं ह्रीं ॐ चण्डिके ॥ हसकलह्रीं चामुण्डे ॥ सकलह्रीं श्री नारसिंहि ॥ ॐ ह्रीं क्लीं ऐन्द्रि ॥ क्लीं ह्रीं श्रीं देवि हैमवतीश्वरि ॥ श्रीं ह्रीं क्लीं मृडानि ॥ ऐं वारुणि ॥ कएईलह्रीं दुर्गे ॥ श्रीं ह्रीं क्लीं ऐं सौः ॐ ह्रीं श्रीं, कएईलह्रीं, हसकहलह्रीं, सकलह्रीं, सौः ऐं क्लीं ह्रीं श्रीं महात्रिपुरसुन्दरि । इति ॥

श्रीदेव्युवाच ।

महेश्वर त्रिकालज्ञ शरणागतवत्सल ।
भेदैर्युतानां देवीनां मन्त्रं[2] त्वं वक्तुमर्हसि ॥ १ ॥

ईश्वर उवाच ।

दयया तव देवेशि तद्वक्ष्यामि समासतः ।

अथ श्रिया मन्त्रोद्धारः, यदुक्तं भैरवतन्त्रे—

ॐ ह्रीं श्रीं हरिणाक्षीबीजद्वयं फलप्रदं सद्यः ।

---

१ 'वसमने' ख. पाठः । २. 'मनुं' ग. पाठः ।

त्र्यक्षं ह्रीं शक्तिनीरमन्ते प्रोक्तमथापि धूर्जटिना ॥ १ ॥

अथ रुक्मिण्या मन्त्रोद्धारः—

ॐ ह्रीं चैवं तु रुक्मिण्यास्तारं लक्ष्मीरपस्तथा ।

अन्ते प्रोक्तं महेशानि लक्ष्मीभेदं द्वयं त्विदम् ॥ २ ॥

प्रकाशम्—ॐ ह्रीं श्रीं लक्ष्मि ॐ ह्रीं सः स्वाहा । ॐ ह्रीं रुक्मिणि ॐ श्रीं स्वाहा ॥ अथ सरस्वतीभेदाः—

तोमा परा वाग्भवमेव चामा तारं च प्रोक्तं परमेश्वरेण ।

वाग्देवतायाः फलदं हि बालं नृणां परो मुक्तिपरायणानाम् ॥ ४ ॥

प्रकाशम्—ॐह्रींऐंह्रींॐ वाग्देवतायै नमः ॥ अथ वाणीभगवत्या मन्त्रः—

तारं लज्जोर्ध्वबीजं च ह्यन्ते स्तम्भमुदाहृतम् ।

प्रकाशम्—ॐह्रींऐं वाणीभगवत्यै नमः ॥ अथ सरस्वतीमन्त्रः—

चार्वङ्ग्यपि विभूतिश्च त्र्यक्षं सरस्वत्यै ततः ।

नमोऽन्ते परमेशानि मया प्रोक्तं नगात्मजे ॥ ५ ॥

प्रकाशम्—ऐं ह्रीं ॐ सरस्वत्यै नमः ॥ अथानलप्रियामन्त्रः—

तारं लज्जा वाग्भवं च मध्येऽनलप्रिये ततः ।

त्र्यक्षं विश्वं तथान्ते च पर्वतेश्वरनन्दिनि ॥ ६ ॥

देव्याश्चत्वारि भेदानि सरस्वत्या वरानने ।

प्रकाशम्—ॐ ह्रीं ऐं अनलप्रिये ॐ नमः ॥

अथ ताराभेदाः, प्रकाशम्—ॐऐंहूंह्रींऐंहूं तारे फट् स्वाहा । ॐह्रींऐंहूं उग्रतारे[2] फट् स्वाहा । ॐस्त्रींऐंहूं एकजटे फट् स्वाहा । ॐह्रींऐंहूं नीलसरस्वति फट् स्वाहा । ॐह्रांस्त्रींह्रींऐंहूं उग्रतारे फट् स्वाहा । इति ताराभेदाः ॥

अथ भुवनेश्वर्या भेदाः, ॐ भैरव्यै नमः । ॐह्रीं भीमरूपायै नमः । ॐह्रींश्रीं भीमायै नमः । ॐह्रींश्रींक्लीं भुवनेश्वर्यै नमः । इति ॥

अथ मातङ्गीभेदाः, प्रकाशम्—ॐक्रींश्रींप्रींप्रींक्लीं उच्छिष्टचण्डालिनि देवि महापिशाचिनि मातङ्गि देवि क्रींठः ह्रींठः ऐंठः स्वाहा ॥ द्वाविंशाक्षरो मन्त्रः 'सुमुख्याः स्वाहान्तो वा । ॐ उच्छिष्टचण्डालिनि सुमुखि

---

१ 'नमो भक्ति' ग. पाठः । २ 'तारिणि' ग. पाठः ।

देवि महापिशाचिनि ह्रौंठःठः (२२) ॥ अथ चक्रिण्याः—ॐक्रींच्छ्रीं महाचक्रिणि ऐंठः स्वाहा ॥ अथ कुब्जिकायाः—ॐश्रींप्रीं कुब्जिके देवि ह्रीं ठः स्वाहा ॥ अथ शाम्बर्याः—ॐप्रीं देवि शाम्बरि क्रींठः स्वाहा ॥

अथ शारिकाभेदद्वयम्—तत्राऽपर्णामूलम्, ॐहूंच्छ्रीं श्रांशां देव्यै अपर्णायै नमः ॥ (अथ हैमवतीश्वरीमूलम्—ॐह्रींश्रींहैमवतीश्वरि ह्रूं स्वाहा) ॥ भीडा भेदविहीना इत्यलम् ॥

ज्वालामुखीभेदाः, तत्राम्बिकामूलम्—ॐह्रीं मातरम्बिके हूं फट् स्वाहा ॥ अथ भगरूपिण्याः—ॐश्रीं देवि भगरूपिणि हूं फट् स्वाहा ॥

एतानि भेदमन्त्राणि[1] मया प्रोक्तानि पार्वति ।
एतासां दशविद्यानामन्यासां शृणु वच्म्यहम् ॥ ७ ॥
भद्रकाली यथा देवी दक्षिणा कालिका तथा ।
तुरी भेदविहीनास्ति यथेष्टफलदायिनी ॥ ८ ॥

प्रकाशम्—क्रीं ३ हूं २ ह्रीं २ भैं भद्रकालि भैं ह्रीं २ हूं २ क्रीं ३ स्वाहा ॥ क्रीं ३ हूं २ ह्रीं २ दक्षिणे कालिके क्रीं ३ हूं २ ह्रीं २ स्वाहा (२२) ॥

अथ छिन्नमस्ता द्विविधा-ॐह्रींश्रींक्लींछ्रीं छिन्नमस्तके ह्रूं फट् स्वाहा । द्वितीया—ॐह्रींश्रींऐं वज्रवैरोचनि ह्रींह्रीं फट् स्वाहा ॥

दक्षिणा कालिका श्यामा कालरात्री सुरेश्वरि ।
एता भेदविहीनाश्च यथाकामफलप्रदाः ॥ ९ ॥

इति श्रीदक्षिणामूर्तिमुनिविरचिते उद्धारकोशे सर्वागमसारे
षड्देवीमन्त्रोद्धारकोशभेदसूचको द्वितीयः कल्पः ॥ २ ॥

---

१ 'रूपाणि' ग. पाठः ।

अथ

# तृतीयः कल्पः ।

ईश्वर उवाच ।

अथो देवि प्रवक्ष्यामि देवीनां मन्त्रमुत्तमम् ।
शृणुष्वैकाग्रमनसा ब्रवीमि त्वत्कुतूहलात् ॥ १ ॥
दक्षिणामूर्तिना तस्मिन् कालेऽन्तेवासिने तथा ।
भाषिता षोडशीविद्या ननन्दाक्षोभ्यको मुनिः ॥ २ ॥
तस्मिन् काले मुनेस्तस्य चाश्रमं मुनिसेवितम् ।
आययुर्मुनयः सर्वे सोत्सुका मन्त्रकाङ्क्षिणः ॥ ३ ॥
लोहितोद्दालकौ शङ्खमातङ्गौ पुण्डरीकजौ ।
शाण्डिल्यगालवौ चैवमेते तस्याश्रमं ययुः ॥ ४ ॥
सर्वे मिलित्वा मुनिपुङ्गवं ते
श्रीदक्षिणामूर्तिमिदं तमूचुः ।
परस्परं वै स्वकुलेष्टदेवी-
मन्त्रांश्च वन्द्यान् शुभदान् पप्रच्छुः ॥ ५ ॥

श्रीदक्षिणामूर्तिरुवाच ।

शृणुध्वं मुनयः सर्वे वक्ष्याम्याश्चर्यमुत्तमम् ।
चराचरेऽस्मिञ्जगति देवी त्रिपुरसुन्दरी ॥ ६ ॥
नैव तादृक् क्वचिदस्ति देवीसीमन्तशेखरा ।
तस्याश्च वदनाम्भोजात् सप्त देव्यः श्रुता मया ॥ ७ ।
यथेष्टफलदायिन्यः सर्वरोगभयापहाः ।

अचिरेणैव कालेन फलदास्तन्मुखाच्छ्रुताः ॥ ८ ॥

ऋषय ऊचुः ।

का देव्यः कानि नामानि कीदृशानि मनूनि[1] हि ।

प्रसादं कुरु विप्रर्षे चेदस्मासु दया तव ॥ ९ ॥

मुनिरुवाच ।

देवीनां परया प्रीत्या मन्त्रान् शृणुध्वमग्रतः ।

येन श्रवणमात्रेण हयमेधफलं लभेत् ॥ १० ॥

ईश्वर उवाच ।

मुनीश्वरान् पुनर्देवो दक्षिणामूर्तिरब्रवीत्[2] ।

सप्त विद्याः पुरा प्रोक्ता वज्रयोगिन्यादिदेवताः ॥ ११ ॥

तासां वक्ष्यामि नामानि पर्वतेश्वरनन्दिनि ।

दक्षिणामूर्तिना तेषां प्रकाशितानि तत्त्वतः ॥ १२ ॥

श्रीवज्रयोगिनी-देवी वाराही शारदा तथा ।

कामेश्वरी तथा गौरी ह्यन्नपूर्णा तथैव च ॥ १३ ॥

कुलवागीश्वरी ह्येताः सप्त देव्यः श्रुता मया ।

दक्षिणामूर्तिना तेषां सप्त विद्याः प्रकीर्तिताः ॥ १४ ॥

एतासां बलमाश्रित्य देवी त्रिपुरसुन्दरी ।

ससृजे जगदेतच्च पाल्यते च सुरेश्वरि ॥ १५ ॥

हरतेऽपि तथा[3] विश्वं चराचरसमन्वितम् ।

ऋषिरुवाच ।

एतद्वाक्यामृतं तस्या मुखाम्भोजाच्छ्रुतं मया ।

तासां वक्ष्यामि मन्त्राणि शृणुध्वं मुनिपुङ्गवाः ॥ १६ ॥

अथ मन्त्रोद्धाराः, तत्रादौ वज्रयोगिनीमन्त्रोद्धारः, उक्तं च स्वतन्त्रे—

(१) प्रणवं सकला चैव बीजौ द्वौ फलदायकौ ।

---

१ 'मनून्' ख. पाठः । २ 'ऽभ्यधात्' ग. पाठः । ३ 'पुनः' ग. पाठः ।

मध्येऽपि वज्रयोगिन्यै ह्यन्ते नीरमुदाहृतम् ॥ १ ॥

प्रकाशम् — ॐ ह्रीं वज्रयोगिन्यै स्वाहा ॥

अस्या मन्त्रं समुच्चार्य यः संग्रामं प्रविशति ।
स निर्जित्य रिपून् सर्वान् कल्याणी गृहमाविशेत् ॥ १७ ॥
अस्या बीजद्वयं देवि जपते यदि मानवः ।
द्वादशदिवसं तावत्सिद्धिर्भवति वाञ्छिता ॥ १८ ॥
अस्या बीजावुपादिश्य ह्येकान्ते प्रजपेन्नरः ।
ऋतुस्नाताया भार्याया मैथुनं कुरुते नरः ॥ १९ ॥
शुक्रेण सह देवेशि सप्तभिरौषधैर्लिखेत् ।
लिखित्वा स भवेद्राजा अस्या यन्त्रं समन्त्रकम् ॥ २० ॥
लिखित्वा धारयेन्मूर्ध्नि त्रैलोक्यविजयी भवेत् ।
अस्याः संभोगकाले तु मन्त्रं जपेत् सुरेश्वरि ॥ २१ ॥
कान्ताया मैथुनं कुर्याद् बहुपुत्रयुतो भवेत् ।
अस्या यन्त्रं समन्त्रं च बाहौ यो धारयेन्नरः ॥ २२ ॥
यावज्जन्म भवेत्तस्य तावच्छत्रुर्न जीवति ।
अस्या यन्त्रं समन्त्रं च हृदि यो धारयेन्नरः ॥ २३ ॥
यावज्जन्म भवेत्तस्य तावल्लक्ष्मीर्भविष्यति ।
अस्या यन्त्रं समन्त्रं च कुक्षौ यो धारयेन्नरः ॥ २४ ॥
अनुवादे स शत्रूणां वाक्यज्ञः सहसा भवेत् ।
तस्यास्त्रिपुरसुन्दर्या मुखाम्भोजान्मया श्रुतम् ॥ २५ ॥
फलमेतन्महाश्चर्यकारकं मुनिपुङ्गवाः ।

इति वज्रयोगिनी ॥ अथ वाराहीमन्त्रोद्धारः, उक्तं च स्वकृतौ त्रिपुरातिलके—

(२) वासना चैव वाल्हीकं तमोबीजसमन्वितम् ।
वाग्भवं सौशमकं चैव ततः पल्लवमुद्धरेत् ॥ १ ॥
भगवति च वार्तालि तथा वाराहि देवते ।

वराहमुखि चैवं तु वासना च मठं तथा ॥ २ ॥
ततः पङ्कजपयोजौ हरं नीरं महेश्वरि ।
भगवत्यास्तु वाराह्या एकत्रिंशाक्षरो मनुः ॥ ३ ॥

तत्र वाल्हीकबीजनामानि, मुण्डमालातन्त्रे—

वाल्हीकं मठसंज्ञं च हिङ्गुबीजं मुनीश्वराः ।
ग्लौं-बीजोद्धारमेतद्धि चान्यदनृतमावदेत् ॥ १ ॥

अथ तमोबीजनामानि, स्वतन्त्रे—

तमोबीजं तथा ध्वान्तं मोहं तिमिरमेव च ।
लं-बीजोद्धाराण्येतानि कृत्रिमाण्यपराणि तु ॥ १ ॥

प्रकाशम्—ऐंग्लौंलऐं नमो भगवति वार्तालि वाराहि देवते वराहमुखि ऐंग्लौंठःठः फट् स्वाहा, इति वाराही ॥ अथ शारदामन्त्रोद्धारः, उक्तं च शारदापटले—

(३) तारं माया च मदनं शरद्विज्ञेयमौशमकम् ।
मन्त्रं च षट्-शिरो ज्ञेयं ततः पल्लवमुद्धरेत् ॥ १ ॥
भगवत्यै-शारदायै चान्ते लज्जा च ठद्वयम् ।

प्रकाशम्—ओंह्रींक्लींसौः नमो भगवत्यै शारदायै ह्रीं स्वाहा ॥ अथ कामेश्वरीमन्त्रोद्धारः, भैरवपटले—

(४) माया च हरिणाक्षी च चन्द्रः शीतांशुरेव च ।
मदनमूर्मिध्वान्तौ द्वौ संयोज्य स्तनबीजकम् ॥ १ ॥
मनुः सप्तशिरो ज्ञेयस्ततः पल्लवमुद्धरेत् ।
जृम्भणाख्ये ततो देवि कामेश्वरि तथैव च ॥ २ ॥
ततो बाणदेवतेऽपि ह्यन्ते नीरमुदाहृतम् ।
कामेश्वर्या महादेव्या द्वाविंशदक्षरो मनुः ॥ ३ ॥

तत्र चन्द्रबीजनामानि, कालीसर्वस्वे—

चन्द्रः शीतांशुरिन्दुश्च शर्वरीपतिरेव च ।

---

१ 'रामठं चैव' ख. पाठः । २ 'जम्ब' ग. पाठः ।

तारााधिपः सुधारश्मिः कृत्रिमाण्यपराणि च ॥ १ ॥

चन्द्रबीजौ द्वौ ऐं द्रां च । अथोर्मिबीजनामानि, तत्रैव—

ऊर्मिर्वीचिस्तथा चैव तरङ्गस्त्रितयं स्मृतम् ।

ब्लूं–बीजोद्धारनामानि कृत्रिमाण्यपराणि च ॥ २ ॥

अथ स्तनबीजनामानि, उक्तं चागमालङ्कारे--

स्तनबीजं कुचं चैवमुरोजो हृज्जमेव च ।

जं–बीजनामान्येतानि कृत्रिमाण्यपराणि च ॥ १ ॥

प्रकाशम्—ह्रींश्रींद्रांद्रींक्लींब्लूंजं जृम्भणाख्ये कामेश्वरि बाणदेवते स्वाहा ।

इति भैरवपटलोक्तम् ।। अथ गौरीमन्त्रोद्धारः, त्रिपुराशिरोमणौ—

(५) प्रणवं कमला चैव माया वाल्हीकमेव च ।

शिवबीजं तथा देवि गौरि शर्वश्च ठद्वयम् ॥ १ ॥

भगवत्या महागौर्या बालस्तु द्वादशाक्षरः ।

इति । तत्र शिवबीजनामानि, उक्तं च कुलचूडामणौ—

शिवबीजं च शम्भुश्च शर्वः शङ्कर एव च ।

गं–बीजानि च चत्वारि कृत्रिमाण्यपराणि च ॥ १ ॥

प्रकाशम्—ॐश्रींह्रींग्लौंगं देवि गौरि गीं स्वाहा (१२) ॥ अथान्नपूर्णामन्त्रो द्धारः, कामेश्वरीतन्त्रे—

(६) तारं परापि कमला मीनकेतन एव च ।

विश्वं ततो भगवति माहेश्वरि ततः पुनः ॥ १ ॥

अन्नपूर्णे ठयुगलं मनुर्विंशाक्षरः स्मृतः ।

मीनकेतन इति दोषः । उक्तं च स्वकृतौ त्रिपुरसुन्दरीसर्वस्वे—

त्र्यक्षं मायापि पद्मा च कामं विश्वमुदाहृतम् ।

बीजं तु षट्शिरो ज्ञेयं विश्वेन सह भामिनि ॥ १ ॥

इत्युद्धारः । प्रकाशम् — ॐ ह्रीं श्रीं क्लीं नमो भगवति माहेश्वरि अन्नपूर्णे स्वाहा ॥ अथ कुलवागीश्वरीमन्त्रोद्धारः, उक्तं च मुण्डमालातन्त्रे —

(७) प्रणवं मदनं चैव स्कन्दं नारायणप्रियाम् ।

---

१ 'जम्ब' ग. पाठः ।

तटं तथेच्छाबीजं च ततः पल्लवमुद्धरेत् ॥ १ ॥
झषहस्ते ततः पश्चात् कुलवागीश्वरि तथा ।
अन्ते च वासनाबीजं पद्मं काङ्क्षापि नीरजम् ॥ २ ॥
नर्तकीबीजमम्भोजं पयश्चैव सुरेश्वरि ।
कुलवागीश्वरीदेव्यास्तुर्यविंशाक्षरो मनुः ॥ ३ ॥

तत्रेच्छाबीजनामानि, वामकेश्वरे —

इच्छाबीजं स्पृहा काङ्क्षा लिप्सा बीजचतुष्टयम् ।
भ्रं-बीजस्यैव नामानि कृत्रिमाण्यपराणि च ॥ १ ॥

अथ नर्तकीबीजनामानि, छिन्नारहस्ये —

नर्तकीबीजमत्युग्रं वेश्यापि गणिका तथा ।
पण्यस्त्री पञ्च नामानि फ्रीं-बीजस्यानृतं परम् ॥ १ ॥

अम्बुजाम्भोजयोरैक्यमिति दोषः । प्रकाशम् — ऊँ क्लीं ह्रां थ्रीं ह्रूं भ्रं झषहस्ते कुलवागीश्वरि ऐंठः भ्रंठः फ्रींठः स्वाहा (२४) ॥

एता मया महेशानि सप्त विद्याः प्रकीर्तिताः ।
अद्याहं तव भक्त्या ते हृदि यद्रोचते प्रियम् ॥ २६ ॥
वद मे सत्वरं देवि तद्वक्ष्यामि सुविस्तरम् ।

श्रीदेव्युवाच ।

पञ्चानां बालकाख्यानां कीदृशास्ते मनूत्तमाः ।
कृपयापि पुरा मह्यं सूचिता न प्रकाशिताः ॥ २७ ॥

मुनय ऊचुः ।

ब्रह्मर्षे सर्वशास्त्रज्ञ त्वन्मुखात्सकलं श्रुतम् ।
मनून् पञ्चकुमाराणामस्माकं वक्तुमर्हसि ॥ २८ ॥

दक्षिणामूर्तिर्मुनीन् प्रति, ईश्वरः पार्वतीं प्रति ब्रवीति ।

श्रीईश्वर उवाच ।

शृणु पार्वति देवेशि महर्षीणां पुरा शिवे ।
दक्षिणामूर्तिनोक्तं यत् तत्ते वक्ष्यामि तत्त्वतः ॥ २९ ॥

हेरम्बशरजन्मानौ कार्तवीर्यार्जुनस्तथा ।
हनुमद्भैरवावेते भाषिताः पञ्च बालकाः ॥ ३० ॥

इति । भैरवीतन्त्रे वामकेश्वरे च—

हेरम्बशरजन्मानौ महामृत्युञ्जयस्तथा ।
कार्तवीर्यार्जुनश्चैव हनुमद्भैरवौ तथा ॥ १ ॥
स्वयं मया च तन्त्रोक्ता भाषिताः षट् कुमारकाः ।

रुद्रयामलेऽपि—

गणेशो वटुकश्चैव स्कन्दो मृत्युञ्जयस्तथा ।
कार्तवीर्यार्जुनोऽप्येवं सुग्रीवो हनुमांस्तथा ॥ १ ॥
यामले रुद्रशब्दादौ भाषिताः सप्त बालकाः ।

तत्रादौ गणेशमन्त्रोद्धारः, रुद्रयामले—

[१] प्रणवं कमलां लज्जां कन्दर्पं मठबीजकम् ।
शङ्करं षट्-शिरोमन्त्रं ततः पल्लवमुद्धरेत् ॥ १ ॥
गणपतये नमः पश्चाद् वर-वरद एव च ।
सर्वजनं ततः पश्चान्मे वशमानयेति च ॥ २ ॥
अन्तेऽपि ठद्वयं ज्ञेयमष्टाविंशाक्षरो मनुः ।

प्रकाशम्—ॐ श्रीं ह्रीं क्लीं ग्लौं गं गणपतये वरवरद सर्वजनं मे वशमानय स्वाहा । इति ॥ अथ कुमारस्य मन्त्रोद्धारः, कुलचूडामणौ—

[२] प्रणवं छविबीजं च मन्त्रं तु द्विशिरः स्मृतम् ।
मध्ये कुमाराय नमो ह्यन्ते नीरमुदाहृतम् ॥ १ ॥

तत्र च्छविबीजनामानि, सिद्धसारस्वते—

छविबीजं कान्तिबीजं शोभाऽपि सुषमा तथा ।
ह्रां-बीजानि च चत्वारि कृत्रिमाण्यपराणि च ॥ १ ॥

प्रकाशम्—ॐ ह्रां कुमाराय नमः स्वाहा, इति ॥ अथ कार्तवीर्यार्जुनमन्त्रोद्धारः, उक्तं चोड्डामरतन्त्रे—

[३] प्रणवं वायुपूज्यापि चारुकं मन्मथस्तथा ।

शुक्रबीजं तथा शून्यं कमला रसना तथा ॥ १ ॥
चन्द्रं डिम्बं च कूर्चं च तुरगं च सुरेश्वरि ।
मध्ये तन्नाम विज्ञेयं कार्तवीर्यार्जुनाय च ॥ २ ॥
अन्ते पयो मनुः प्रोक्त एकविंशाक्षरः शिवे ।

तत्र शुक्रबीजनामानि, छिन्नाशिरोमणौ —

शुक्रबीजं तथा काव्यो भार्गवः कविबीजकम् ।
दैत्यमान्यो[1] महेशानि सुरासुरनमस्कृते ॥ १ ॥
ब्रौं-बीजानि च पञ्चैव कृत्रिमाण्यपराणि च ।

शुक्रबीजौ द्वौ, ब्रौं लृं च। प्रकाशम् — ॐ प्रीं च्छ्रीं क्लीं ब्रौं आं श्रीं ऋं ऐं ह्रौं हूं फट् कार्तवीर्यार्जुनाय स्वाहा ॥ अथ हनुमतो मन्त्रोद्धारः, कुलचूडामणौ —

[४] प्रणवमूर्ध्वबीजं च विभूतिस्तदनन्तरम् ।
हनुमते ततः पश्चाद्रामदूताय वै पुनः ॥ १ ॥
लङ्काविध्वंसनायैवमञ्जनीगर्भसं ततः ।
भूताय शाकिनी चैव डाकिनी तदनन्तरम् ॥ २ ॥
विध्वंसनाय किलि-द्वौ बुबुकारेण वै पुनः ।
विभीषणाय हनुमद्देवाय तदनन्तरम् ॥ ३ ॥
त्र्यक्षं माया हरिणाक्षी व्योषं स्कन्दं तथैव च ।
हरमापस्तथान्तेऽपि सप्तषष्ट्यक्षरो मनुः ॥ ४ ॥

प्रकाशम् — ॐ ऐं ह्रीं हनुमते रामदूताय लङ्काविध्वंसनाय अञ्जनीगर्भसंभूताय शाकिनीडाकिनीविध्वंसनाय किलि २ बुबुकारेण विभीषणाय हनुमद्देवाय ॐ ह्रीं श्रीं ह्रौं ह्रां फट् स्वाहा, इति ॥ अथ वटुकभैरवस्य मन्त्रोद्धारः, रुद्रयामले—

[५] प्रणवं मन्मथं चैवमभ्रबीजसमान्वितम् ।
अब्धिबीजं कल्पबीजं शतघ्नीबीजसंयुतम् ॥ १ ॥
मया मध्येऽपि वटुक-भैरवायाश्मरी तथा ।

---

१ 'दैत्यामात्यो' ख. पाठः ।

अन्तेऽपो भैरवस्यायं मनुरष्टादशाक्षरः ॥ २ ॥

तत्राभ्रबीजनामानि, वामकेश्वरे—

अभ्रबीजं च जीमूतमम्बुदं जलदं घनम् ।
वीं-बीजानि च पञ्चैवमनृतानि पराणि च ॥ १ ॥

अथाब्धिबीजनामानि, त्रिपुरातिलके—

अब्धिबीजं तथा सिन्धुः सांबरं सागरस्तथा ।
रुं-बीजानि च चत्वारि (कृत्रिमाण्यपराणि च) ॥ १ ॥

रंकार—रुंकार[1]योर्भेदेन रमग्निबीजं रुमित्यब्धिबीजम् । अग्न्यब्ध्योरन्त-रादन्तरमिति निर्दोषः । अथ कल्पबीजनामानि, आगमालङ्कारे—

कल्पबीजं च संवर्तं प्रलयं क्षयबीजकम् ।
क्षामिकं क्षुरकं क्षौद्रं तथा कल्पान्तबीजकम् ॥ १ ॥
क्ष्रुं-बीजान्येवमष्टौ च कृत्रिमाण्यपराणि च ।

अथ शतघ्नीबीजनामानि, आगमलहर्याम्—

शतघ्नी श्यालि[2]का श्यामा शाद्वला शुष्कला तथा ।
घ्नीं-बीजानि तु पञ्चैवमसत्यान्यपराणि च ॥ १ ॥

प्रकाशम् — ॐ क्लीं वीं रुं क्ष्रुं घ्नीं ह्रीं वटुकभैरवाय नमः स्वाहा ॥

अथ महामृत्युञ्जयस्य मन्त्रोद्धारः, आगमलहर्याम्—

[६] त्र्यक्षं हृज्जं शक्तिशोभेऽपि शङ्का
मां तस्माद्वै पालय-द्वौ तथैव ।
तस्माच्छक्तिः खं शरद् हृज्जतारौ
मन्त्रोद्धारो देवि मृत्युञ्जयस्य ॥ १ ॥

प्रकाशम्—ॐ जुंसः हंसः मां पालय २ सोहंसः जुं ॐ ॥ अथ सुग्रीवस्य मन्त्रोद्धारः, आगमशिरोमणौ —

[७] तारं माया वाग्भवं मन्मथं च
शक्तिर्मध्ये नाम त्यक्त्वा तथान्ते ।

---

१ 'रुकार-रकारयोर्भेदे' ग. पाठः । २ 'शाद्विका' ग. पाठः ।

कालीपञ्चौ कूर्चपञ्चौ समस्ता-
पञ्चौ नीरमेष सुग्रीवमन्त्रः ॥ १ ॥

प्रकाशम् — ॐ ह्रीं ऐं क्लीं सः सुग्रीवाय क्रींठः ह्रुंठः ह्रींठः स्वाहा ॥

मयाख्याता महेशानि ह्येते वै सप्त बालकाः ।

दक्षिणामूर्तिरुवाच ।

शृणुध्वमृषयः किञ्चिद्युष्माकमस्ति यद्धृदि ।
ब्रवीमि भवतां प्रीत्या आज्ञापयितुमर्हथ ॥ ३१ ॥

इति श्रीदक्षिणामूर्तिमुनिविरचिते उद्धारकोशे सर्वागमसारे
सप्तदेवी सप्तकुमारकोशाख्यानं तृतीयः कल्पः ॥ ३ ॥

अथ

## चतुर्थः कल्पः ।

ऋषय ऊचुः ।

ब्रह्मर्षे सर्वतत्त्वज्ञ शास्त्राम्भोनिधिपारग ।
नवग्रहाणामस्माकं मन्त्रांस्त्वं वक्तुमर्हसि ॥ १ ॥

ईश्वर उवाच ।

तस्मिन् काले महर्षीणां यदुक्तं धातृसूनुना ।
नवग्रहाणां मन्त्रांश्च तान् वक्ष्यामि समासतः ॥ २ ॥
आदित्येन्दुजशुक्राश्च गुर्विन्दू परमेश्वरि ।

१ 'मनूस्त्वं' ख. पाठः ।

एते पञ्च महेशानि पञ्चेषोर्बाणदेवताः ॥ ३ ॥
भौमार्किराहवश्चैव त्रय एते मुनीश्वराः ।
देवस्य खण्डपरशोर्लोचनत्रयदेवताः ॥ ४ ॥
केतुश्च परमेशानि भूमेर्देवः प्रकीर्तितः ।
एते नव ग्रहाः प्रोक्ताः शम्भुना रुद्रयामले ॥ ५ ॥

अथादौ पञ्चग्रहमन्त्रोद्धारः । तत्रादावादित्यस्य मन्त्रोद्धारः, विश्वनाथसारोद्धारे —

(१) प्रणवं चाम्बरं लक्ष्मीर्व्योम[1]बीजं तथैव च ।
बीजं तुर्यशिरो ज्ञेयं ततः पल्लवमुद्धरेत् ॥ १ ॥
ग्रहाधिराजाय तत आदित्याय तथैव च ।
अन्ते पयस्तु विज्ञेयं मनुद्वर्यष्टाक्षरः स्मृतः ॥ २ ॥

तत्राम्बरबीजनामानि, भैरवतन्त्रे—

अम्बरं वस्त्रबीजं च शून्यं शक्तिरिति द्वयम् ।
हरितं हरिणीबीजं हरिद्राबीजमेव च ॥ १ ॥
ह्सौः–बीजानि सप्तैव कृत्रिमाण्यपराणि च ।

अम्बरबीजौ ह्रौं ह्सौः आं च । प्रकाशम् — ॐ ह्सौः श्रीं आं ग्रहाधिराजाय आदित्याय स्वाहा । अथ बुधस्य मन्त्रोद्धारः, स्वतन्त्रे—

[२] प्रणवं च तथा स्कन्दं रसज्ञा च षडाननः ।
मध्येऽपि ग्रहनाथाय बुधायान्ते च ठद्वयम् ॥ १ ॥
बुधस्य ग्रहनाथस्य मनुश्चतुर्दशाक्षरः ।

तत्र षडाननबीजनामानि, कुब्जिकासर्वस्वे—

षडाननः शरजन्मा स्कन्दः कुमारबीजकम् ।
शाम्भवः शालिनीबीजं तथा षण्मुखबीजकम् ॥ १ ॥
टं–बीजानि च सप्तैवमनृतान्यपराणि च ।

प्रकाशम् — ॐ ह्रां क्रीं टं ग्रहनाथाय बुधाय स्वाहा ॥ अथ शुक्रस्य

---

[1] 'व्योम, ख. ग. पाठः ।

मन्त्रोद्धारः, आगमशिरोमणौ—

[३] प्रणवमूर्ध्वबीजं च स्तनबीजसमन्वितम् ।
शिवबीजं ततो मध्ये ग्रहेश्वराय वै पुनः ॥ १ ॥
शुक्रायान्तेऽश्मरी चैव बालश्चतुर्दशाक्षरः ।

प्रकाशम् — ॐ ऐं जं गं ग्रहेश्वराय शुक्राय नमः ॥ अथ बृहस्पतेर्मन्त्रोद्धारः, त्रिपुरातिलके —

[४] त्र्यक्षं मायापि सौभाग्या सुरासुरनमस्कृते ।
तरङ्गवेश्ये संयोज्य चार्वङ्गी हिङ्गुबीजकम् ॥ १ ॥
ऊर्ध्वं च षट्शिरोबीजं ततः पल्लवमुद्धरेत् ।
ततो ग्रहाधिपतये बृहस्पतय एव च ॥ २ ॥
पुनर्वारिवहं चैव पद्मं लक्ष्मीस्तु नीरजम् ।
वासना पङ्कजं चैवमन्ते प्रोक्तं वनं शिवे ॥ ३ ॥

इत्युद्धारः । सौभाग्येति दोषः । दक्षिणामूर्तिस्तु—"तस्य धिगस्तु मुनयः स्वयं यस्य न धीर्भवेत् । क्व रुक्मिणी क्व सौभाग्यं द्योभुवोरन्तरं महत् ॥" इति दोषः । उक्तं च स्वकृतौ सुन्दरीसर्वस्वे—"प्रणवं सकला चैव देवेशि रुक्मिणी तथा ।" ततो वारिवहमिति दोषः । वामकेश्वरे—

प्रणवं च परा लक्ष्मीर्वीचिवेश्येऽपि योजयेत् ।
चन्द्रो मठं ततः पश्चाद् ग्रहाधिपतये नमः ॥ १ ॥
ततो बृहस्पतयेऽपि ततो जीमूतबीजकम् ।
पद्मं लक्ष्मीर्नीरजं च वासना पङ्कजं तथा ।
अन्ते नीरं समाख्यातं पञ्चविंशाक्षरो मनुः ।

प्रकाशम्—ॐ ह्रीं श्रीं ख्रीं ऐं ग्लौं ग्रहाधिपतये बृहस्पतये ब्रींठः ऐंठः श्रींठः स्वाहा ॥ अथ चन्द्रस्य मन्त्रोद्धारः, कालीपटले—

[५] त्र्यक्षं च हरिणाक्षी च कुन्तीबीजसमन्वितम् ।
हरेतिशब्दं संयोज्य शून्यानुस्वारसंयुतम् ॥ १ ॥
नाद्यबीजं ततो मध्ये चन्द्रायान्तेऽश्मरी स्मृता ।

तत्र नाट्यबीजनामानि भैरवतन्त्रे,

नाट्यबीजं च नटनं ताण्डवं नृत्तबीजकम् ।
चं-बीजानि च चत्वारि कृत्रिमाण्यपराणि च ॥ १ ॥

प्रकाशम्—ॐ श्रीं क्रीं ह्रां चं चन्द्राय नमः ॥

एते वै पञ्चबाणानां ग्रहाः पञ्च प्रकीर्तिताः ।

अथ त्रिग्रहमन्त्रोद्धारः । तत्रादौ भौमस्य मन्त्रोद्धारः, शारदाटीकायाम्

[६] चारणं हरिणीबीजं रुक्मिणी शर्वरीपतिः ।
वेधोबीजं ततो मध्ये ग्रहाधिपतये ततः ॥ १ ॥
भौमायान्ते पर्यः प्रोक्तो मनुः पञ्चदशाक्षरः ।

तत्र वेधोबीजनामानि, छिन्नारहस्ये —

वेधोबीजं विधिर्ब्रह्मा स्वयम्भूबीजमेव च ।
कं-बीजान्यपि चत्वारि कृत्रिमाण्यपराणि च ॥ १ ॥

प्रकाशम्—ऐं ह्सौः श्रीं द्रां कं ग्रहाधिपतये भौमाय स्वाहा ॥

अथ शनैश्चरस्य मन्त्रोद्धारः, आगमलहर्याम्[१] —

[७] तारं लज्जां श्रियं चैव बीजं त्रिशिरे[२] ऊर्ध्वगः ।
ग्रहचक्रवर्तिनेऽपि शनैश्चराय वै ततः ॥ १ ॥
मदनं वासना शक्तिरन्ते नीरमुदाहृतम् ।
शनैश्चरस्य देवस्य मनुर्विंशाक्षरः स्मृतः ॥ २ ॥

प्रकाशम्—ॐ ह्रीं श्रीं ग्रहचक्रवर्तिने शनैश्चराय क्लीं ऐंसः स्वाहा ॥ अथ राहोर्मन्त्रोद्धारः, तत्रैव —

[८] प्रणवं रसनायुग्मं तटयुग्मं च गर्जितम् ।
ततष्टङ्कधारिणे च राहवे हव्यवाहनः ॥ १ ॥
लज्जा लक्ष्मीस्तथा भीमा ह्यन्ते वनमुदाहृतम् ।
राहोर्विंशाक्षरो बालो यथाभीष्टफलप्रदः ॥ २ ॥

तत्र गर्जितबीजनामानि, स्वतन्त्रे —

---

१ 'मया' क. ख. पाठः । २ 'त्रिशूल' क. ख. पाठः ।

गर्जितं स्तनबीजं च स्तनितं रसितं तथा ।
टं-बीजानि च चत्वारि कृत्रिमाण्यपराणि च ॥ १ ॥

प्रकाशम्—ॐ क्रीं क्रीं हूं हूं टं टङ्कधारिणे राहवे रं ह्रीं श्रीं भैं स्वाहा । इति

शम्भोर्नेत्रत्रयाणां च देवता भाषिता मया ।
सुदिने साधको मन्त्रान् ग्रहाणां साधयेच्छिवे ॥ १ ॥

अथ केतुमन्त्रोद्धारः, मन्त्रमुक्तावल्याम्—

[६] प्रणवं सकला वृष्टिस्ततोऽपि क्रूररूपिणे ।
केतवेऽपि ततः पश्चाच्चन्द्रः शङ्का पयस्तथा ॥ १ ॥
केतोरयं मनुः प्रोक्तो[1] देवि पञ्चदशाक्षरः ।

तत्र वृष्टिबीजनामानि, मुण्डमालातन्त्रे—

वृष्टिबीजं च करकं वर्षोपलस्तु वार्षिकः[2] ।
क्रूं-बीजानि च चत्वारि कृत्रिमाण्यपराणि तु ॥ १ ॥

प्रकाशम्--ॐ ह्रीं क्रूं क्रूररूपिणे केतवे, ऐं सौः स्वाहा ॥ इति,

एतेषां नवग्रहाणां मनवो भाषिता मया ।
अथाहं तव देवेशि वर्णानां वच्मि वै मनून् ॥ १ ॥
कोशं लोकोपकारार्थं गोप्याद्गोप्यतमं कुरु ।
येन विज्ञानमात्रेण मान्त्रिकः साधको भवेत् ॥ २ ॥

इति श्रीदक्षिणामूर्तिमुनिविरचिते उद्धारकोशे सर्वागमसारे
नवग्रहमन्त्रोद्धारकोशाख्यानं चतुर्थः कल्पः ॥ ४ ॥

---

१ 'महामन्त्रो' क. पाठः । २ 'कार्षिकः' क. ग. पाठः ।

अथ

# पञ्चमः कल्पः ।

ऋषय ऊचुः ।

ब्रह्मर्षे ब्रह्मपुत्रस्त्वमागमार्णवपारग ।
प्रसन्नोऽसि महाभागिन्नस्मासु कृपया प्रभो ॥ १ ॥
नानाशास्त्राणि ह्यस्माभिः श्रुतानि त्वन्मुखाम्बुजात् ।
वर्णानां श्रोतुमिच्छामो मन्त्रकोशानि च वयम् ॥ २ ॥

श्रीदक्षिणामूर्तिः ।

शृणु देवि प्रवक्ष्यामि मत्तो यूयं यथाविधि ।
वर्णानां मन्त्रकोशं च निःसृतं त्रिपुरामुखात् ॥ ३ ॥
शृणुध्वमृषयः सर्वे मन्त्रकोशं सुविस्तरम्[१] ।
मुनीनां सूचितं यच्च दक्षिणामूर्तिना पुरा ॥ ४ ॥

त्रिपुरातिलके—

(अ) आत्मबीजमकारं च स्वान्तं हृद्बीजमेव च ।
मानसं च मनोबीजं पैतामहमिति स्मृतम् ॥ ५ ॥
अपरमनृतं ज्ञेयमकारस्य सुरेश्वरि ।
(आ) शून्यं खमम्बरं व्योम वैष्णवं चेति भाषितम् ॥ ६ ॥
आकारस्यानृतमन्यदुक्तं भैरवतन्त्रके ।
(इ) इन्द्रबीजं तथा जिष्णुर्मरुत्वान् मघमा हरिः ॥ ७ ॥

---

१ 'मन्त्रकोषं सुविस्तरम्' क. ग. पाठः ।

शैवमिकारवर्णस्य कृत्रिममपरं वदेत् ।
मया प्रोक्तं सुरेशानि ग्रन्थे भैरवतन्त्रके ॥ ८ ॥
(ई) बुद्धिबीजं तथा मेधा धीबीजं च मतिस्तथा ।
ऐन्द्रं तथैव विज्ञेयमीकारस्यानृतं परम् ॥ ९ ॥
मया प्रोक्तं सुरेशानि त्रिपुरातिलके शिवे ।
इन्द्रबीजौ द्वौ इं ईं च ।
(उ) रुतिबीजं तथा नन्दा वामनं वीतुंबीजकम् ॥ १० ॥
सौर्यमुकारबीजानि कृत्रिमाण्यपराणि च ।
मयाख्यातानि सर्वस्वे कुब्जिकायाः सुरेश्वरि ॥ ११ ॥
(ऊ) कचबीजं तथा केशं शिरोरुहं च मूर्धजम् ।
ऐन्दवमनृतमन्यदूकारस्य सुरेश्वरि ॥ १२ ॥
शिरोमणौ मया प्रोक्ताः सुन्दर्याः परमेश्वरि ।
(ऋ) पाप्म[2]बीजं तथा पापं किल्विषं कल्मषं तथा ॥ १३ ॥
किङ्करीबीजमेवं च मङ्गलमनृतं परम् ।
ऋकारस्य रहस्येऽस्मिन् काल्याः प्रोक्तं मया शिवे ॥ १४ ॥
(ॠ) कृपाबीजं दयाबीजं करुणा कार्षिकं तथा ।
ॠकारस्यानृतमन्यद् भाषितं विष्णुयामले ॥ १५ ॥
(ऌ) विश्वबीजद्वयं ज्ञेयं ऌकारं च नम इति ।
व्यक्तबीजं जगद्बीजं गौर्वं प्रोक्तं मया शिवे ॥ १६ ॥
ऌकारस्यानृतमन्यदुक्तं च रुद्रयामले ।
(ॡ) गङ्गाबीजं सुर्नदी च नाकवापी च स्वर्धुनी ॥ १७ ॥
शाक्रमन्यदनृतं च ॡकारस्य मया स्मृतम् ।
ग्रन्थे च स्वकृतौ देवि मन्त्रसागरतन्त्रके ॥ १८ ॥
(ए) एकादशी मात्रिका च लताबीजं तथैव च

---

१ 'वातु' ग. पाठः । २ 'पद्मा' 'पद्मा' ग. पाठः ।

वह्नीबीजं च वाराकी चान्यदनृतमावदेत् ॥ १९ ॥
अपरं च मयाख्यातमेकारस्य सुरेश्वरि ।
कुलचूडामणौ ग्रन्थे रचिते मान्त्रिकोत्तमैः ॥ २० ॥
(ऐ) वाग्भवमूर्ध्वबीजं च चारणं चण्डिकेश्वरः ।
चण्डोऽपि[1] चर्म वसनं वासना च तथैव च ॥ २१ ॥
चार्वङ्ग्यपि च चर्माणं मात्रां द्वादशिकामथ ।
राहु ख्यातं मया देवि ऐकारस्यानृतं परम् ॥ २२ ॥
त्रिपुरासारसर्वस्वे दक्षिणामूर्तिना कृते ।
(ओ) प्रणवं च ततस्तारं[2] त्र्यक्षं तोमापि त्र्यम्बकः ॥ २३ ॥
त्रासस्तारकं[3] देवेशि कैतवं च मया स्मृतम् ।
छिन्नाशिरोमणौ ग्रन्थे रचिते वै मया स्वयम् ॥ २४ ॥
(औ) मोक्षबीजं तथा मुक्तिर्ज्ञानं निर्वाणबीजकम् ।
आगस्त्यं च मया ख्यातं ग्रन्थे भैरवतन्त्रके ॥ २५ ॥
(अं) अंबीजं वृक्षबीजं च पादपं धरणीरुहम् ।
भूरुहं च मयाख्यातमनृतमपरं वदेत् ॥ २६ ॥
सिद्धसारस्वते ग्रन्थे ब्रह्मणैव प्रकाशितम् ।
(अः) नागबीजं भूधरं च भार्ग्यबीजं च भानवम् ॥ २७ ॥
भौवं ख्यातं मया देवि अःशब्[4]दस्यानृतं परम् ।
ग्रन्थे त्रिपुरसुन्दर्याः सर्वस्वे विश्वदुर्लभे[5] ॥ २८ ॥
(क) ककारं च शिरोबीजं मूर्धबीजं च चारुणम्[6] ।
वेधोबीजं विधिर्ब्रह्मा स्वयम्भूबीजमेव च ॥ २९ ॥
ककारस्य मया ख्यातमनृतमपरं वदेत् ।
ग्रन्थे छिन्नारहस्येऽस्मिन् पर्वतेश्वरनन्दिनि ॥ ३० ॥

---

१ 'चन्द्रोऽपि' ख. पाठः । २ 'धनुस्ता' ग. पाठः । ३ 'तारं च' ग. पाठः ।
४ 'वर्ण' ख. पाठः । ५ 'वल्लभे' ग. पाठः । ६ 'वारुणं' ग. 'चारणं' ख. पाठः ।

(ख) नभाबीजं पुष्करं च द्यौबीजं चक्रवालकम् ।
वैष्टरश्रवबीजं च प्रोक्तं त्रिपुरया स्वयम् ॥ ३१ ॥
आगमामृतमञ्जर्यां दुर्लभायां मयापि च ।
(ग) शिवबीजं च शम्भुश्च शर्वः शङ्कर एव च ॥ ३२ ॥
गकारस्यानृतमन्यद् भाषितं च मया शिवे ।
कुलचूडामणौ ग्रन्थे दुर्लभे त्रिदिवे प्रिये ॥ ३३ ॥
(घ) जिनबीजं षडभिज्ञं मारजिद्बीजमेव च ।
मायात्मजोऽर्कबन्धुश्च गौतममनृतं परम् ॥ ३४ ॥
घकारस्य मयाख्यातं ग्रन्थे वै रुद्रयामले ।
(ङ) षडाननः शरजन्मा स्कन्दः कुमारबीजकम् ॥ ३५ ॥
शाम्भवः शालिनीबीजमनृतमपरं स्मृतम् ।
कुब्जिकासर्वस्वे ख्यातं मया त्रैलोक्यपूजिते ॥ ३६ ॥
(च) नाट्यबीजं च नटनं ताण्डवं नृत्तबीजकम् ।
चकारस्य मया ख्यातं ग्रन्थे भैरवतन्त्रके ॥ ३७ ॥
(छ) शनिबीजमर्कजं च पङ्गुबीजं तथैव च ।
कालं च सौरबीजं च सूतिः सुन्दरबीजकम् ॥ ३८ ॥
छकारस्य मया प्रोक्तं ग्रन्थे कामेश्वरे शिवे ।

शनिबीजौ छ्रौं छं अं च ।

(ज) स्तनबीजं कुचं चैवमुरोजो हृज्जमेव च ॥ ३९ ॥
जकारस्य मयाख्यातमन्यदनृतमावदेत् ।
आगमालङ्कारजे च ग्रन्थे भैरवनिर्मिते ॥ ४० ॥
(झ) इच्छाबीजं स्पृहा काङ्क्षा लिप्साबीजं चतुष्टयम् ।
झकारस्य मया ख्यातमसत्यमपरं स्मृतम् ॥ ४१ ॥
त्रैलोक्यप्रथिते ग्रन्थे देवि वै वामकेश्वरे ।
(ञ) यमबीजं कालबीजं कृतान्तसमवर्तिनौ ॥ ४२ ॥

कीनाशं मृत्युबीजं च ञकारस्य मया स्मृतम् ।
त्रिपुरासर्वस्वे ग्रन्थे त्रिजगद्दुर्लभे प्रिये ॥ ४३ ॥

कालबीजौ द्वौ ञं छं च ।

(ट) गर्जितं स्वनबीजं च स्तनितं रसितं तथा ।
टकारस्य मया ख्यातं स्वतन्त्रे देववन्दिते ॥ ४४ ॥

(ठ) पद्मं पङ्कजपयोजौ नीरजमम्बुजं तथा ।
पञ्च ठकारबीजानि कृत्रिमाण्यपराणि च ॥ ४५ ॥
मया ख्यातानि देवेशि तन्त्रे वै वामकेश्वरे ।

(ड) सिंहिका सरसीबीजं रेणुकाबीजमेव च ॥ ४६ ॥
अञ्जनीबीजकं ख्यातमनृतमपरं स्मृतम् ।
डकारस्य मया देवि ग्रन्थे वै रुद्रयामले ॥ ४७ ॥

(ढ) वायुबीजं चानिलं च समीरणं मरुत्तथा ।
समीरं चाशुगं ज्ञेयं वातं श्वसनबीजकम् ॥ ४८ ॥
ढकारस्य मया ख्यातमन्यदनृतमावदेत् ।

वायुबीजौ द्वौ ढं यं च ।

(ण) बाणबीजं मार्गणं च पत्रिणमाशुगं तथा ॥ ४९ ॥
णकारस्यानृतमन्यद् ग्रन्थे भैरवतन्त्रके ।

आशुगबीजौ द्वौ ढं णं च ।

(त) रात्रिबीजं तमीबीजं तामसीबीजमेवं च ॥ ५० ॥
क्षपा च क्षणदाबीजमन्यदनृतमावदेत् ।
कुब्जिकासर्वस्वे ग्रन्थे तंबीजं च मया स्मृतम् ॥ ५१ ॥

(थ) बिलबीजं च विवरं सुषिरं च नागलोककम् ।
थकारस्य मया ख्यातं तन्त्रे वै कुलिकार्णवे[2] ॥ ५२ ॥

(द) चक्रिबीजं व्यालबीजं सर्पः काकोदरोरगौ ।
भोगिबीजं भुजङ्गं च भुजङ्गमिति स्मृतम् ॥ ५३ ॥

---

१ 'तामसी च निशा मम' ग. पाठः । २ 'कुब्जिका' ग. पाठः ।

दकारस्य मया ख्यातमनृतमपरं स्मृतम् ।
स्वतन्त्रे देवदेवेशि दक्षिणामूर्तिना कृते ॥ ५४ ॥
(ध) पुष्पबीजं प्रसूनं च प्रसूतिः सुप्रजास्तथा ।
धकारस्यानृतमन्यत् त्रिपुरातिलके स्मृतम् ॥ ५५ ॥
(न) क्षारबीजं च लवणं सैन्धवं सूकरं वृकम् ।
वाराहमनृतमन्यन्मया ख्यातं सुरेश्वरि ॥ ५६ ॥
त्रैलोक्यप्रथिते ग्रन्थे त्रिपुरायाः शिरोमणौ ।
(प) कूर्ममीनपदख्यातौ बीजार्णे सदृशं प्रिये ॥ ५७ ॥
फकारस्य पकारस्य भेदो नास्ति परस्परम् ।
भाषणोद्धारविषये लिखने प्रकृतिः पृथक् ॥ ५८ ॥
मत्स्यं च मीनबीजं च शफरीबीजमेव च ।
झषबीजं मयाख्यातं ग्रन्थे छिन्नाशिरोमणौ ॥ ५९ ॥
(फ) कूर्मबीजं च कमठं कर्कटोऽपि कुलीरकम् ।
कच्छपमनृतमन्यन्मयाख्यातं च भामिनि ॥ ६० ॥
शारदापटले ग्रन्थे त्रैलोक्यप्रथिते शिवे ।
(ब) ऊर्मिर्वीचिस्तथा चैवं तरङ्गस्त्रितयं स्मृतम् ॥ ६१ ॥
असत्यमपरं ज्ञेयं मयाख्यातं सुरेश्वरि ।
कालिकाकुलसर्वस्वे ब्रह्मणैव प्रकाशिते ॥ ६२ ॥
(भ) भद्रिका भास्वती भीमा भकारस्यानृतं परम् ।
तन्त्रे वै मुण्डमालायां मयाख्यातं सुरेश्वरि ॥ ६३ ॥
(म) डुलिबीजं शिलीबीजं मण्डूकं दुर्दुरं तथा ।
भेकीबीजं मयाख्यातमसत्यमपरं स्मृतम् ॥ ६४ ॥
आगमामृतमञ्जर्यां पर्वतेश्वरनन्दिनि ।
(य) वायुबीजं तथा वाग्मि वाचालं वश्यबीजकम् । ६५ ॥
वीरार्णं[1] तथा वापी मयाख्यातं स्वतन्त्रके ।

---

१ 'वीरबीजं' ग. पाठः ।

(र) अग्नी रेफश्च वह्निश्च हुतभुग् हव्यवाहनः ॥ ६६ ॥
रकारस्य मयाख्यातं श्यामातन्त्रे सुरेश्वरि ।
(ल) तमोबीजं तथा ध्वान्तं मोहं तिमिरमेव च ॥ ६७ ॥
लकारस्य मयाख्यातं स्वतन्त्रे मुनिवन्दिते ।
भूबीजं धरणीबीजं लकारं भाषितं मया ॥ ६८ ॥
(व) अभ्रं मेघं च जीमूतमम्बुभृदम्बुदं घनम् ।
वकारस्य मयाख्यातं तन्त्रे वै वामकेश्वरे ॥ ६९ ॥
(श) कल्याणं चैव शर्मापि शं शुभं च चतुष्टयम् ।
शकारस्य मयाख्यातं ग्रन्थे भैरवतन्त्रके ॥ ७० ॥
(ष) शम्पाबीजं तडिद्बीजं विद्युच्छतह्रदा तथा ।
ह्लादिनीबीजकं चैवमसत्यमपरं स्मृतम् ॥ ७१ ॥
मयाख्यातं सुरेशानि ग्रन्थे वै रुद्रयामले ।
(स) शक्तिः शर्मापि विज्ञेये शरच्छक्के तथैव च ॥ ७२ ॥
सकारस्य मयाख्यातं ग्रन्थे छिन्नाशिरोमणौ ।
(ह) छविबीजं कान्तिबीजं शोभा भा सुषमा तथा ॥ ७३ ॥
आकाशं च हकारस्यानृतमन्यन्मयोदितम् ।
सिद्धसारस्वते ग्रन्थे नित्यं मात्रिकपूजिते ॥ ७४ ॥
(क्ष) देवबीजं निर्जरं च त्रिदशं त्रिदिवेशकम् ।
सुरबीजं च गीर्वाणं लेखममरबीजकम् ॥ ७५ ॥
क्षकारस्य मया प्रोक्तं कुलचूडामणौ प्रिये ।
वर्णानां देवदेवेशि कोशं प्रोक्तं मया शिवे ।
नानामन्त्रयुतं देवि सर्वागमविनिश्चितम् ॥ ७६ ॥

इति श्रीदक्षिणामूर्तिमुनिविरचिते उद्धारकोशे सर्वागमसारे
सर्ववर्णकोशाख्यानं पञ्चमः कल्पः ॥ ५ ॥

अथ

# षष्ठः कल्पः

श्रीईश्वरः ।

द्व्यक्षराणां पृथङ्नाम क्लींप्रींश्रींह्रींद्स्त्रौः तथा ।
पृथङ्नाम सुरेशानि सकलागमनिश्चितम् ॥ १ ॥
अथ वक्ष्यामि ते देवि तिस्रो भुवनदेवताः ।
दक्षिणामूर्तिना पूर्वमृषीणां भाषिताः स्वयम् ॥ २ ॥
भवानी देवदेवेशि द्वितीया बगलामुखी ।
इन्द्राक्षी सा तृतीया च तिस्रो भुवनदेवताः ॥ ३ ॥
आसामहं ते मन्त्राणि वक्ष्यामि शृणु पार्वति ।
यस्य कस्य न वक्तव्यं न वक्तव्यं वरानने ॥ ४ ॥

तत्रादौ भवानीमन्त्रोद्धारः, मुण्डमालातन्त्रे—

(१) प्रणवं चैव द्वे पद्मे त्र्यक्षयुग्मं परा पुनः ।
हरिणाक्षी-द्वयं कूर्चं हरं ठद्वयसंयुतम् ॥ १ ॥

प्रकाशम् — ॐ श्रीं श्रीं ॐ ॐ ह्रीं श्रीं श्रीं हूं फट् स्वाहा, इति ॥

अथ बगलामुख्या मन्त्रोद्धारः, आगमलहर्याम्—

(२) तारकं चैव मृद्बीजं ह्यक्षरं समुदाहृतम् ।
मन्त्रं च द्वि-शिरो ज्ञेयं ततः पल्लवमुद्धरेत् ॥ १ ॥
भगवति बगला च मुखि देवि ततः पुनः ।
ततोऽपि सर्वदुष्टानां वाचं मुखं पदं तथा ॥ २ ॥
स्तम्भय द्विस्तथा जिह्वां कीलय द्विर्बुद्धिं तथा ।
विनाशय द्विवारं च मृत्तिकाबीजकं तथा ॥ ३ ॥

त्र्यक्षमन्ते पयो ज्ञेयं द्विपञ्चाशाक्षरो मनुः ।

तत्र मृद्बीजनामानि, भैरवतन्त्रे—

मृद्बीजं मृत्तिकाबीजं मृत्स्नाबीजं प्रशस्तिका ।

मृत्साऽनृतं परं ज्ञेयं पर्वतेश्वरनन्दिनि ॥ १ ॥

ह्लीं इति मृद्बीजम् । प्रकाशम्—ॐ ह्लीं भगवति बगलामुखि देवि सर्व-दुष्टानां वाचं मुखं पदं स्तम्भय २ जिह्वां कीलय २ बुद्धिं विनाशय २ ह्लीं ॐ स्वाहा [५२] इति ॥ अथेन्द्राक्ष्या मन्त्रोद्धारः, रुद्रयामले—

(३) त्र्यक्षं कुन्तीद्वयं देवि कूर्चयुग्मं तथैव च ।

प्रस्थबीजं परां पद्मां चर्माणं च ततोऽभिधाम् ॥ १ ॥

इन्द्राक्षि वज्रहस्तेऽन्ते लक्ष्मीं लज्जां च पुष्करम् ।

तीरयुग्मं रसने द्वे त्रासश्चन्द्रो हरं वनम् ॥ २ ॥

इन्द्राक्ष्या देवदेव्याश्च ह्यष्टाविंशाक्षरो मनुः ।

तत्र प्रस्थबीजनामानि, शारदापटले—

प्रस्थबीजं सानुबीजं शिखरं पुष्करं तथा ।

म्लौं-बीजोद्धारमेतद्धि चान्यदनृतमावदेत् ॥ १ ॥

प्रकाशम् — ॐ क्रीं क्रीं हूं हूं म्लौं ह्रीं श्रीं ऐं इन्द्राक्षि वज्रहस्ते श्रीं ह्रीं म्लौं हूं हूं क्रीं क्रीं ॐ ऐं फट् स्वाहा [२८] इति ॥

श्रीईश्वरः ।

तिस्र एता मया ख्याता देवि भुवनदेवताः ।

दक्षिणामूर्तिना भक्त्या संसारेऽस्मिन् प्रकाशिताः ॥ १ ॥

अथाहं देवदेवेशि खेचर्या वच्मि वै मनुम् ।

यामाश्रित्य लभेद्योगी खेचरीं सिद्धिदां कलाम् ॥ २ ॥

विश्वयामले, खेचरीमन्त्रोद्धारः—

(१) गीर्बाणदशमं वर्णं चोद्धरेत् प्रतिलोमतः ।

तमोबीजं ततो दद्यान्मायाबीजं ततः परम् ॥ १ ॥

ततो दद्याच्छरद्बीजं कूटोऽयं परिकीर्तितः ।

मत्रं (बीजं) तुर्यशिरो ज्ञेयं योगी दद्यात्ततोऽभिधाम् ॥ २ ॥
खेचर्यै च ततो दद्यादन्ते ह्यौश्मकमेव च ।
प्रकाशम्—म्लूह्रींसौः खेचर्यै नमः, इति ॥

इति श्रीदक्षिणामूर्तिमुनिविरचिते उद्धारकोशे सर्वागमसारे त्रिदेवीनां खेचर्याश्च कोशाख्यानं षष्ठः कल्पः ॥ ६ ॥

अथ

# सप्तमः कल्पः

श्रीईश्वरः ।

अथ वक्ष्यामि ते देवि ध्यानानागमनिश्चितान् ।
एतासां देवतानां त्वं शृणु पार्वति तत्त्वतः ॥ १ ॥
तत्रादौ दशविद्यानां ध्यानं वक्ष्यामि त्वं शृणु ।
वामकेश्वर-तन्त्रोक्तं त्रिपुरायाः सुरेश्वरि ॥ २ ॥

दिव्याम्बराङ्कितनुं मिहिराग्निचन्द्र-
नेत्रां सुधांशुमुकुटां हिमसन्निभाभाम् ।
सिंहासनां परशुखड्गधरां भुजाभ्यां
ब्रह्मेन्द्रविष्णुनमितां त्रिपुरां भजेऽहम् ॥ ३ ॥

अथ वक्ष्ये श्रियो ध्यानं भाषितं रुद्रयामले ।
मुनिसाधकगीर्बाण—विप्रवर्गैः[1] सुपूजितम् ॥ ४ ॥
लक्ष्मीं पद्मासनगतकटिं सूर्यशीतांशुनेत्रा-
मुद्यद्भास्वत्कनकरुचिभिः पद्मशङ्खासिपाणिम् ।

1 'विप्रवर्गैः' ख. पाठः ।

नानामुक्तामणिसुकलशां भूषिताङ्गीं द्विबाहुं
नित्यं लोकत्रितयफलदां नौम्यहं भक्तिपूर्वम् ॥ ५ ॥
अथ वक्ष्यामि वाग्देव्या ध्यानं विद्याप्रदं शिवे ।
तन्त्रमुक्तावलौ ग्रन्थे दुर्लभे त्रिदिवेऽपि च ॥ ६ ॥
वाणीं पूर्णनिशाकरोज्ज्वलमुखीं कर्पूरकुन्दप्रभां
चन्द्रार्धाङ्कितमस्तकां निजकरैः संबिभ्रतीमादरात् ।
वीणामक्षगुणं सुधाढ्यकलशं विद्यां च तुङ्गस्तनीं
दिव्यैराभरणैर्विभूषिततनुं सिंहाधिरूढां भजे ॥ ७ ॥
अथ वक्ष्यामि ताराया ध्यानं भैरवतन्त्रके ।
देव्या भेदविहीनाया मुनिसाधकपूजिते ॥ ८ ॥
देवीं पन्नगभूषितां हिमरुचिं शीतांशुशङ्खप्रभां
मुक्तारत्नपरीतकण्ठवलयां रक्ताम्बरं बिभ्रतीम् ।
शूलाब्जासिगदाधरां सुरगणैर्वैकुण्ठमुख्यैः स्तुतां
नित्यं लोकत्रयैकरक्षणपरां तारां त्रिनेत्रां भजे ॥ ९ ॥
अथाहं भुवनेश्वर्या ध्यानं वक्ष्यामि तच्छृणु ।
साधकेष्टप्रदे ग्रन्थे निःसृतं रुद्रयामले ॥ १० ॥
उद्यद्भानुसहस्रसन्निभमुखीं पीनस्तनीं पद्मगां
दोर्भिरङ्कुशपाशपुस्तकजपान्[1] संबिभ्रतीं सादरम् ।
ब्रह्मोपेन्द्रमहेश्वरेन्द्रमुनिभिर्नित्यं स्तुतां वन्दनैः
स्तोत्राद्यैर्भुवनेश्वरीं त्रिनयनां हृत्पङ्कजेऽहं भजे ॥ ११ ॥
अथ वक्ष्यामि मातङ्ग्या ध्यानं पर्वतनन्दिनि ।
कुब्जिकासर्वस्वे ग्रन्थे ममाप्यत्यन्तदुर्लभे ॥ १२ ॥
चन्द्रार्धाङ्कितशेखरां त्रिनयनां कोटीन्दुसूर्यप्रभां
नानारत्नसहस्रबद्धरशनां प्रेतासने संस्थिताम् ।

१ 'जयान्' ख. पाठः ।

शङ्खं तोमरपट्टिसाब्जयुगलान् दोर्भिर्वहन्तीं मुदा
ध्यायेऽहं हृदये सदा भगवतीं मातङ्गिनीं हारिणीम् ॥ १३ ॥
अथ वक्ष्ये महेशानि शारिकाध्यानमुत्तमम् ।
आगमामृतमञ्जर्यां निःसृतं दुर्लभं जनैः ॥ १४ ॥
श्रीशङ्खचक्रमुसलाम्बुजयुग्महस्तां
नागेन्द्रहारवलयाङ्कितकण्ठमालाम् ।
सिन्दूरकुङ्कुमसहस्रमरीचिदीप्तिं
श्रीशारिकां त्रिनयनां हृदये स्मरामि ॥ १५ ॥
अथ वक्ष्यामि देवेशि राज्ञीध्यानमनुत्तमम् ।
वामकेश्वरतन्त्रोक्तं पर्वतेश्वरनन्दिनि ॥ १६ ॥
शीतांशुबालार्कक्रशानुनेत्रां
चतुर्भुजामेणखगासनस्थाम् ।
शङ्खाब्जशूलासिधरां महेशीं
राज्ञीं भजेऽहं तुहिनाद्रिरूपाम् ॥ १७ ॥
अथ वक्ष्यामि भीडाया ध्यानमिच्छाफलप्रदम् ।
निःसृतमागमोद्द्योते मया विरचिते स्वयम् ॥ १८ ॥
उद्यच्छीतांशुरश्मिद्युतिचयसदृशीं फुल्लपद्मोपविष्टां
वीणानागेन्द्रशङ्खायुधपरशुधरां दोर्भिरीड्यैश्चतुर्भिः ।
मुक्ताहारांशुनानामणियुतहृदयां शीधुपात्रं वहन्तीं
वन्दे भीडां भवानीं प्रहसितवदनां साधकेष्टप्रदात्रीम् ॥१९॥
अथ वक्ष्यामि देवेशि ज्वालामुख्या अनुत्तमम् ।
ध्यानं मया विरचिते ग्रन्थे ज्वालाशिरोमणौ ॥ २० ॥
ज्वालापरीतास्यशिरोरुहां तां
सरोजशङ्खासिगदाधरां च ।

१ 'सलाब्जयुगाङ्क' ग. पाठः ।

सिंहासनस्थापितपादयुग्मां
ज्वालामुखीं सद्धृदये स्मरामि ॥ २१ ॥
अथाहं भद्रकाल्याश्च ध्यानं वक्ष्यामि निःसृतम् ।
स्वयं मया विरचिते तन्त्रे वै वामकेश्वरे ॥ २२ ॥
मुण्डं विश्वस्य कर्तुः करकमलतले धारयन्तीं हसन्तीं
नाहं तृप्ता वदन्तीं सकलजनमिदं भक्षयन्तीं सदैव ।
श्यामां विष्णुं गिरीशं भुजनिवहबलाच्छूलप्रोतं वहन्तीं
ध्यायेऽहं भद्रकालीं नवजलदनिभां प्रेतमध्यासनस्थाम् ॥२३॥
तुरीध्यानमहं वक्ष्ये निःसृतमागमामृते ।
अस्मिंश्चराचरे ख्याते ब्रह्मणैव प्रकाशिते ॥ २४ ॥
नानारत्ननिबद्धचन्द्रशकलां मौलौ जटाभिर्वृते
पाशाम्भोजधरां हिमांशुधवलां दोर्भ्यां द्विबाहुं शिवाम् ।
सूर्येन्द्वग्निविलोचनां स्मितमुखीं प्रेतासने संस्थितां
ब्रह्मोपेन्द्रमहेश्वरैश्च नमितां देवीं भजेऽहं तुरीम् ॥ २५ ॥
अथाहं[१] छिन्नमस्ताया ध्यानं वक्ष्यामि निःसृतम् ।
स्वकृते त्रिपुरायाश्च ग्रन्थे देवि शिरोमणौ ॥ २६ ॥
एणाङ्कांशुपरीतभालफलकां बालार्ककोटिप्रभां
ज्वालाबद्धमहार्घरत्ननिचयां कन्दर्पदर्पोज्ज्वलाम् ।
शूलास्यङ्कुशपाशवेणुमुसलाम्भोजाभयान् बिभ्रतीं
भक्तेष्टां[२] छिन्नमस्तकां भगवतीं ध्याये हृदब्जे सदा ॥ २७ ॥
दक्षिणाकालिकायाश्च ध्यानं वक्ष्यामि निःसृतम् ।
ग्रन्थे कालीरहस्येऽस्मिन् पर्वतेश्वरनन्दिनि ॥ २८ ॥
ब्रह्मोपेन्द्रशिवास्थिमुण्डरशनां ताम्बूलरक्ताधरां
वर्षामेघनिभां त्रिशूलमुसले पद्मासिपाशाङ्कुशान् ।

---

१ 'अथादौ' ग. पाठः । २ 'भक्तैः पूजितपादपद्मयुगलां श्रीच्छिन्नमस्तां भजे' ग. पाठः ।

शङ्खं साहियुगं वरं दशभुजैः संबिभ्रतीं प्रेतगां
देवीं दक्षिणकालिकां भगवतीं रक्ताम्बरां तां स्मरे ॥ २९

अथ वक्ष्यामि श्यामाया ध्यानं पर्वतनन्दिनि ।
श्यामातन्त्रे मयाख्यातं सकलागमसागरे ॥ ३० ॥

त्रैलोक्यपूजितपदाम्बुरुहद्वयां तां
कृष्णाम्बुभृत्सदृशरूपधरां त्रिनेत्राम् ।
शूलासिशङ्खमहतीश्च भुजैर्वहन्तीं
श्यामां भजे शवशरीरकृतासनस्थाम् ॥ ३१ ॥

अथाहं कालरात्र्यास्ते ध्यानं वक्ष्यामि निःसृतम् ।
मया विरचिते देवि तन्त्रे वै वामकेश्वरे ॥ ३२ ॥

शूलाब्जपाशाङ्कुशपद्महस्तां
चतुर्भुजां धूम्रनिभां त्रिनेत्राम् ।
सिंहासनस्थां धृतपीतवस्त्रां
ध्याये महेशीं हृदि कालरात्रीम् ॥ ३३ ॥

नानाभरणसंयुक्ते देवि वक्ष्यामि त्वं शृणु ।
श्रीवज्रयोगिनीध्यानं निःसृतं कुलिकार्णवे ॥ ३४ ॥

इन्द्वग्निसूर्यनयनां पाशाङ्कुशधरां शिवाम्[१] ।
द्विभुजां सिंहमध्यस्थां भजेऽहं वज्रयोगिनीम्[२] ॥ ३५ ॥

अथ वक्ष्यामि वाराह्या ध्यानं तन्त्रविनिश्चितम् ।
यथाभीष्टप्रदं देवि कुलचूडामणौ प्रिये ॥ ३६ ॥

चन्द्रार्धचूडां द्विभुजां भुजाभ्यां
शूलाङ्कुशौ श्याममुखीं वहन्तीम् ।
सूर्याग्निचन्द्रीकृतनेत्रपद्मां[३]
ध्याये हृदब्जे विमलां वराहीम् ॥ ३७ ॥

---

१ 'परां' क. 'शुभां' ग. पाठः । 'अभयङ्करीम्' क. ग. घ. पाठः । ३ 'दृष्टिगतां' क. पाठः ।

अथ वक्ष्यामि देवेशि शारदाध्यानमुत्तमम् ।
शारदापटले ग्रन्थे रचितेऽपि मया स्वयम् ॥ ३८ ॥

षड्भुजां त्रिनयनां स्मिताननां
शाण्डिल्यर्षिनुतपादपङ्कजाम् ।
पर्वतस्थितवतीं धृतशूलां
शारदां भगवतीं हृदि ध्याये ॥ ३९ ॥

अथ वक्ष्यामि देवेशि त्वं शृणु ध्यानमुत्तमम् ।
कामेश्वर्यास्त्रिपुरायाः सर्वस्वे तन्त्रकोत्तमे ॥ ४० ॥

त्रिलोचनां सूर्यसहस्रशोभां
सिंहासनस्थां द्विभुजां धृतासिम् ।
पीताम्बरां विष्णुमहेशसेव्यां
कामेश्वरीं तां हृदये स्मरामि ॥ ४१ ॥

अथ वक्ष्यामि गौर्यास्ते ध्यानं भैरवतन्त्रके ।
ग्रन्थे मया विरचिते पर्वतेश्वरनन्दिनि ॥ ४२ ॥

गौराङ्गीं धृतपङ्कजां त्रिनयनां श्वेताम्बरां सिंहगां
चन्द्रोद्भासितशेखरां स्मितमुखीं दोर्भ्यां वहन्तीं गदाम् ।
विष्ण्विन्द्राम्बुजयोनिशम्भुत्रिदशैः संपूजिताङ्घ्रिद्वयां
गौरीं मानसपङ्कजे भगवतीं भक्तेष्टदां तां भजे ॥ ४३ ॥

अथाहमन्नपूर्णाया ध्यानं वक्ष्यामि त्वं शृणु ।
निःसृतं भैरवीतन्त्रे मया देवि प्रकाशिते ॥ ४४ ॥

चन्द्रार्धमौलिं द्विभुजां त्रिनेत्रां
शूलाक्षमाले द्विभुजे वहन्तीम् ।
एणासनस्थां भुजगोपवीतां
तामन्नपूर्णां हृदये स्मरामि ॥ ४५ ॥

कुलवागीश्वरीध्यानं वक्ष्यामि त्वं शृणु प्रिये ।

आगमामृतमञ्जर्यां दुर्लभायां ममापि च ॥ ४६ ॥
त्रिशूलासिधरां दोर्भ्यां रक्तास्यां वह्निसन्निभाम् ।
त्र्यक्षां सिंहासनगतां कुलवागीश्वरीं भजे ॥ ४७ ॥
अथ वक्ष्ये गणेशस्य ध्यानं गीर्बाणपूजिते ।
आगमामृतपीयूषे[1] दुर्लभे भुवनेऽम्बिके ॥ ४८ ॥

द्विचतुर्दशवर्णभूषिताङ्गं
मुसलाम्भोजधरोरगोपवीतम् ।
द्विमृगाधिपगामिनं त्रिनेत्रं
शिवपुत्रं द्विरदाननं भजेऽहम् ॥ ४९ ॥

अथ ध्यानं कुमारस्य वक्ष्यामि शृणु पार्वति ।
निःसृतमागमोद्द्योते मया विरचिते स्वयम् ॥ ५० ॥

हिमाद्रिगौरं[2] द्विभुजं भुजङ्गैः
परीतगात्रं शिखिविष्टरस्थम् ।
नगेन्द्रकन्याप्रियपुत्रमाद्यं
हृदि स्मरेऽभीष्टप्रदं कुमारम् ॥ ५१ ॥

हैहयस्य ब्रवीम्येवं ध्यानं तव कुतूहलात् ।
यथाभीष्टप्रदं नृणामुड्डामरविनिश्चितम् ॥ ५२ ॥

सहस्रभुजमण्डलीजिततमीचरेशाधिपं
हिमांशुसदृशाननं धृतसहस्रतूणीरकम् ।
सिताम्बरधरं सदा तुरगराजमध्यस्थितं
स्मरामि भुवनाधिपं हृदि तु कार्तवीर्यार्जुनम् ॥ ५३ ॥

अथ वक्ष्यामि देवेशि ध्यानं तस्य विनिःसृतम् ।
मृत्युञ्जयस्य देवस्य ग्रन्थे कुब्जाशिरोमणौ ॥ ५४ ॥

---

१ 'यंव' ग. पाठः । २ 'श्वेतं' ग. पाठः ।

चन्द्रोद्भासितमूर्धजं सुरपतिं पीयूषपात्रं बृहद्
हस्ताब्जेन सुधांशुकोटिविमलं हस्तस्थपङ्केरुहम् ।
सूर्याग्नीन्दुविलोचनं करतलैः पाशाक्षसूत्राङ्कुशा-
म्भोजान्बिभ्रतमक्षयं पशुपतिं मृत्युञ्जयं तं स्मरे ॥ ५५ ॥

सुग्रीवस्याथ वक्ष्येऽहं ध्यानं पर्वतनन्दिनि ।
कुलचूडामणौ ग्रन्थे निर्मिते मन्त्रसागरे ॥ ५६ ॥

बालं षोडशहायनं कपिपतिं वह्निप्रभाभास्वरं
दोर्भिर्वृक्षगदाधनुःशरचयान् संबिभ्रतं चादरात्[2] ।
सीता[3]मार्गणसक्तवानरबलैराराध्यमानं भजे
काकुत्स्थं भजमानमर्कतनयं सुग्रीवदेवं हृदि ॥ ५७ ॥

अथाहं ते हनुमतो ध्यानं वक्ष्यामि निःसृतम् ।
कुलचूडामणौ ग्रन्थे पर्वतेश्वरनन्दिनि ॥ ५८ ॥

रामेष्टमित्रं जगदेकवीरं
प्लवङ्गराजेन्द्रकृतप्रणामम् ।
सुमेरुशृङ्गाभमचिन्त्यमाद्यं
हृदि स्मरेऽहं हनुमन्तमीड्यम् ॥ ५९ ॥

अथ ते भैरवस्याहं ध्यानं वक्ष्यामि पार्वति ।
निःसृतं भैरवे तन्त्रे यथाभीष्टफलप्रदम् ॥ ६० ॥

कपालहस्तं भुजगोपवीतं
कृष्णच्छविं दण्डधरं त्रिनेत्रम् ।
अचिन्त्यमाद्यं मधुपानसक्तं
हृदि स्मरे भैरवमिष्टदं तम् ॥ ६१ ॥

अथ वक्ष्यामि सूर्यस्य ध्यानं तन्त्रविनिश्चितम् ।

---

[1] 'चन्द्रामृताप्लावितं' ग. पाठः । २ 'सादरात्' ग. पाठः । ३ 'वन्द्यं ब्रह्मस्वरूपिणं रघुपतिमाराधयन्तं मुदा ध्यायेऽहं भगवन्तमर्कतनयं' ख. पाठः ।

त्रिपुरासर्वस्वे ग्रन्थे दक्षिणामूर्तिना कृते ॥ ६२ ॥

प्रत्यक्षदेवं विशदं सहस्र-
मरीचिभिः शोभितभूमिदेशम् ।
सप्ताश्वगं सद्ध्वजहस्तमाद्यं
देवं भजेऽहं मिहिरं हृदब्जे ॥ ६३ ॥

अथ वक्ष्यामि सौम्यस्य ध्यानं भैरवतन्त्रके ।
यथाभीष्टप्रदं सत्यं सुरासुरनमस्कृते ॥ ६४ ॥

सोमात्मजं हंसगतं द्विबाहुं
शङ्खेन्दुरूपं ह्यसिपाशहस्तम् ।
दयानिधिं भूषणभूषिताङ्गं
बुधं स्मरे मानसपङ्कजेऽहम् ॥ ६५ ॥

अथ वक्ष्यामि शुक्रस्य ध्यानं तन्त्रविनिश्चितम् ।
कुब्जिकासर्वस्वे ग्रन्थे ब्रह्मणैव प्रकाशिते ॥ ६६ ॥

सन्तप्तकाञ्चननिभं द्विभुजं दयालुं
पीताम्बरं धृतसरोरुहद्वन्द्वशूलम् ।
क्रौञ्चासनं ह्यसुरसेवितपादपद्मं
शुक्रं स्मरे द्विनयनं हृदि पङ्कजेऽहम् ॥ ६७ ॥

अथ वक्ष्यामि जीवस्य शृणु पार्वति तत्त्वतः ।
ध्यानं भैरवतन्त्रोक्तं सकलार्थप्रदं नृणाम् ॥ ६८ ॥

तेजोमयं शक्तित्रिशूलहस्तं
सुरेन्द्रज्येष्ठैः स्तुतपादपद्मम् ।
मेधानिधिं हस्तिगतं द्विबाहुं
गुरुं स्मरे मानसपङ्कजेऽहम् ॥ ६९ ॥

---

१ 'मत्स्य' ग. पाठः ।

अथ वक्ष्यामि चन्द्रस्य ध्यानं देवि शृणु प्रिये ।
निःसृतमागमोद्द्योते नानाध्यानसरित्पतौ ॥ ७० ॥
शङ्खप्रभमेणप्रियं शशाङ्क-
मीशानमौलिस्थितमीड्यवृत्तम्[1] ।
तमीपतिं नीरजयुग्महस्तं
ध्याये हृदब्जे शशिनं ग्रहेशम् ॥ ७१ ॥
अथ वक्ष्यामि भौमस्य ध्यानं तन्त्रविनिश्चितम् ।
आगमामृतमञ्जर्यां शृणुष्वैकमनाः प्रिये ॥ ७२ ॥
प्रतप्तगाङ्गेयनिभं ग्रहेशं
सिंहासनस्थं कमलासिहस्तम् ।
सुरासुरैः पूजितपादपद्मं
भौमं दयालुं हृदये स्मरामि ॥ ७३ ॥
अथ वक्ष्ये शनेर्ध्यानं यथाभीष्टफलप्रदम् ।
निःसृतं च महेशानि शुभदमागमामृते ॥ ७४ ॥
नीलाञ्जनाभं मिहिरेष्टपुत्रं
ग्रहेश्वरं पाशभुजङ्गपाणिम् ।
सुरासुराणां भयदं द्विबाहुं
शनिं स्मरे मानसपङ्कजेऽहम् ॥ ७५ ॥
अथाहं सैंहिकेयस्य ध्यानं वक्ष्यामि त्वं शृणु ।
निःसृतं फलदं नृणां तन्त्रे वै वामकेश्वरे ॥ ७६ ॥
शीतांशुमित्रान्तकमीड्यरूपं
घोरं च वैडूर्यनिभं विबाहुम् ।
त्रैलोक्यरक्षापरमिष्टदं[3] च
राहुं ग्रहेन्द्रं हृदये स्मरामि ॥ ७७ ॥

---

१ ‘रूपम्’ ग. पाठः । २ ‘मम्बुज’ क पाठः । ३ ‘प्रदं’ ग. पाठः ।

अथ वक्ष्यामि केतोश्च ध्यानमागमनिश्चितम् ।
निःसृतमागमोद्द्योते ग्रन्थे वै तन्त्रसागरे[1] ॥ ७८ ॥

लाङ्गूलयुक्तं भयदं जनानां
कृष्णाम्बुभृत्सन्निभमेकवीरम् ।
कृष्णाम्बरं शक्तित्रिशूलहस्तं
केतुं भजे मानसपङ्कजेऽहम् ॥ ७९ ॥

अथ वक्ष्यामि देवेशि भवानीध्यानमुत्तमम् ।
कुलचूडामणौ ग्रन्थे निःसृतं भुवनेश्वरि ॥ ८० ॥

अरिशङ्खकृपाणखेटबाणान्
सुधनुःशूलकतर्जनीर्दधानाम्[2] ।
भयदां महिषोत्तमाङ्गसंस्थां
नवदूर्वासदृशीं भजे भवानीम् ॥ ८१ ॥

अथाहं बगलामुख्या ध्यानं वक्ष्यामि निःसृतम् ।
आगमामृतमञ्जर्यां सुरासुरनमस्कृते ॥ ८२ ॥

नानारत्ननिबद्धरम्यमुकुटां पीताम्बरां भाग्यदां
घर्मांश्वग्निशशाङ्करश्मिनयनां सिंहासनस्थां शिवाम् ।
सच्चण्डांशरतां[3] महार्घमणिभिरुद्भासिताङ्गीं सदा
देवीं श्रीबगलामुखीं हृदि भजे भक्तेष्टदां मुक्तिदाम् ॥ ८३ ॥

अथ वक्ष्ये शृणोषि त्वमिन्द्राक्षीध्यानमुत्तमम् ।
निःसृतं जगदीशानि ग्रन्थे वै रुद्रयामले ॥ ८४ ॥

---

१ 'मन्त्र' ख. पाठः । २ 'दधाना । भवतां महिषोत्तमाङ्गसंस्था नवदूर्वासदृशी श्रियेऽस्तु दुर्गा' क. पाठः । ३ 'सच्चण्डांशुनिभां' क. सद्गाङ्गेयनिभां ग. पाठः ।

मालास्यङ्कुशपद्मयुग्मकधरां चक्षुःसहस्राङ्किताम्[1]

मत्तैरावणपृष्ठगां शशिमुखीं त्रैलोक्यरक्षापराम् ।

दोर्भिर्गानरतां स्फुटाम्बुजनिभां ब्रह्मादिदेवैः स्तुता-

मिन्द्राक्षीं जनमातरं हृदि भजे कारुण्यरूपां पराम् ॥ ८५ ॥

अथ वक्ष्ये महेशानि खेचरीध्यानमुत्तमम् ।

यां ध्यात्वा खेचरीं योगी जीवन्मुक्तो भवेत् कलौ ।

ग्रन्थे भैरवतन्त्राख्ये निःसृतं त्रिदशार्चिते ॥ ८६ ॥

विनिन्द्रकमलोत्पलैर्मुनिभिरर्चिताङ्घ्रिद्वयां

सितां सितकराम्बुजां सितकरोज्ज्वलच्छेखराम् ।

रवीन्दुशिखिलोचनामभयपुस्तकौ बिभ्रतीं

स्मरामि हृदि खेचरीं भुवनमातरं सिद्धिदाम् ॥ ८७ ॥

एतासां देवदेवेशि मन्त्रध्यानचयं स्मृतम् ।

यस्य कस्य न दातव्यं ग्रन्थमुद्धारकोशकम् ॥ ८८ ॥

ऋषय ऊचुः ।

धन्यः स यस्य पुत्रस्त्वं सकलागमपारगः ।

जय त्वं स्वगृहं गन्तुमाज्ञापयितुमर्हसि ॥ ८९ ॥

दक्षिणामूर्तिः ।

गच्छध्वं मुनयः सर्वे क्षमध्वं कृपया मम ।

इत्युक्त्वा मुनयो जग्मुः स्वगृहं मन्त्रलालसाः ॥ ९० ॥

श्रीईश्वर उवाच ।

दक्षिणामूर्तिना तेन दृष्ट्वा तत्रान्मनोरमान् ।

कृतमुद्धारकोशाख्यं ग्रन्थं गोप्यतमं कुरु ॥ ९१ ॥

---

१ 'साहस्रनेत्रां शिवां' ग. पाठः ।

श्रीदेव्युवाच ।

क्रीतास्मि भवतानेन ग्रन्थेनाहं सुरेश्वर ।

इत्युक्त्वा सुमहाकुञ्जं कैलासाद्रेश्च जग्मतुः ।

उभौ तावम्बिका देवी देवश्च चन्द्रशेखरः ॥ ६२ ॥

इति श्रीदक्षिणामूर्तिमुनिविरचिते उद्धारकोशे सर्वागमसारे षोडशदेवी—सप्तदेवी—सप्तकुमार—नवग्रह—त्रिदेवी—खेचरीध्यानकोशनिरूपणं सप्तमः कल्पः ॥ ७ ॥

—————):*:(—————

## समाप्तश्चायमुद्धारकोश इति शिवम् ।



